भार्गवास्त्रं महारौद्रं देवैरपि दुरासदम् ।
सृजतो बाहुवीर्येण कः पुमान्प्रसहिष्यति ॥
अयं ■ पुरुषः कृष्णो ह्यनादिनिधनोऽव्ययः ।
तं विजेता न लोकेऽस्मिन्नपि शूलधरः स्वयम् ॥
तत्र पुत्रो महाप्राज्ञः सर्वशास्त्रार्थतत्त्ववित् ।
विदित्वा देवमीशानं न योधयति केशवम् ॥
अस्ति तस्य रणे जेता यवनाधिपतिर्नृपः ।
स कालयवनो नाम अवध्यः केशवस्य ह ॥
तप्त्वा सुदारुणं घोरं तपः परमदुश्चरम् ।
रुद्रमाराधयामास द्वादशाब्दान्ययोशनः ॥
पुत्रकामेन मुनिना तोष्य रुद्रात्सुतो वृतः ।
माथुराणामवध्योऽयं भवेदिति च शंकरात् ।
एवमस्त्विति रुद्रोऽपि प्रददौ मुनये सुतम् ॥
एवं गर्गस्य तनयः श्रीमान्रुद्रवरोद्भवः ।
माथुराणामवध्योऽसौ मथुराया विशेषतः ॥
कृष्णोऽपि बलवानेव माथुरे जातवानयम् ।
स जेष्यति रणे कृष्णं मथुरायां समागतः ॥
मन्यध्वं यदि वो युक्तं नृपा वाच मयेरिताम् ।
तत्र दूत विसृजध्वं यवनेन्द्रपुर प्रति ॥
श्रुत्वा सौमपतेर्वाक्यं सर्वे ते नृपसत्तमाः ।
युक्तं इत्यब्रुवन्हृष्टाः साल्वराजं महाबलम् ॥
स तेषां वचन श्रुत्वा जरासधो महीपतिः ।
बभूव विमना राजन्ब्रह्मणो वचनं स्मरन् ॥

जरासंध उवाच ।

मां समाश्रित्य पूर्वेऽस्मिन्नृपा नृपभयार्दिताः ।
प्राप्नुवन्ति हृत राज्यं सभृत्यबलवाहनम् ॥

D5 यातानि ( for स्थानि ) D5 दृष्टानि ( for °नाम् ) — ( L 710 ) V2 D2 D3 6 T3 1 रिपून् ( for रिपुं ) K1 3 बाधयितु ( for घात° ) K3 4 Ñ2 2 V1 3 B Dn D1 2 T1 G1 4 6 रिपू- न्बाध( V1 °ष्याव ; T4 G1 °ष्यात )यितुं शक्तो ( for ° ) B3 महाबल ( for °मुज° ) — ( L. 713 ) D1 अयं तु कृष्ण पुरुषो ( for ° ) — ( L. 714 ) Ñ2 2 V3 3 B1 3 Dn D3 D1 4.3 T1 G2 4 4 नु , B3 D5 त्रि ( for न ) Ñ3 V1 B D2 D2 4 6 T2 4 G1 2 4 नापि ; D1 नास्ति ( for अपि ) — ( L. 715 ) K V2 B3 Dn D1 2 ( sup lin - as above ) 4 4 T3-4 G1 3 4 4 महाराज ( for °प्राज्ञ ) Ñ3 V1 D5 त्रितम- , B1 -कोविद ( for तत्त्ववित् ) — ( L. 716 ) K4 यादवम् ( for केश° ) — ( L 717 ) Bomb, Poona eds ■ (ed) अत्र ( for अस्ति ) D1 तस्मिन् ( for तस्य ) T2 जातो ( for जेता ) G2 आसीत्तस्य गुरोर्जेता ( for ° ) V3 नृप ( for नृप ) — ( L. 718 ) V2 अप्यक्ष ; D3 ह्यवध्य ( for अ° ) T2 स ( for ह ) — ( L. 719 ) K1 3 कृत्वा ( for तप्त्वा ) G2 तप्त्वा च बहुशस्तीव्र ( for ° ) D1 दुष्करम् ( for दुश्च° ) — ( L. 720 ) K1 2 द्वादशाहाल्पयोशनात्, V2 °ब्दान्ययोशिना ; D1 2 4 मुनिर्गर्गो ( D3 °र्गार्ग्यो ) महात्मा , D5 द्वादशाब्दान्ययोशिना, T2 °ब्दम योशिना ; G2 °ब्दान्महामनि° , G5 °ब्दानयोशिना ( for ° ) — After line 720 D1 2 3 ins

21* * द्वादशाब्दानि मुनिना पूर्वं तेन प्रसादित ।
[ D3 प्रसादितात ( for °त ) ]

— ( L. 721 ) D1 2 संतोष्य ( for मुनिना ) B2 G2 पुत्र कामस्तु स मुनि ( for ° ) D5 रुद्र ( for रुद्रात् ) K1 3 Ñ2 V B D3 D4 5 G1 सुत वृणोत् ( for सुतो वृत ) D1 2 प्राप्तो रुद्रात्स वै सुत ( for ° ). — B Dn2 D5 om ( hapl ) lines 723-724 — ( L 722 ) K3 4 D1 T2 G1 मथुराणाम् ( for मा° ) Ñ2 V1 3 B1 D2 G2 ऽसौ ( for ऽय ) Ñ2 मथुराणामवध्योऽसौ ( for ° ) — ( L. 723 ) D3 मुनये प्रददौ सुतम् ( for ° ) — B3 om lines 724 728 — ( L. 724 ) Ñ2 V2 B1 Dn D5 D1 T2 4 G1 गार्ग्यस्य ( for गर्गस्य ) K2 तपस ( for तनय ) Ñ1 -बलोद्भव , V1 वरोदर ( for °द्भव ) — ( L. 725 ) K4 D4 T2 G5 ऽय ( for ऽसौ ) G2 मथुराणामवध्योऽय ( for ° ) Ñ2 V2 म( V2 मा )थुरेश ; D5 G2 मथुरेशाद् ( for °राया ) — T2 om. lines 726-727 — ( L. 726 ) G2 तेषां ( for पूप ) Dn2 G2 माथुरो ( for °रे ) D3 मथुराया तथानघ ( for ° ) — V2 om lines 727-731 — ( L. 727 ) Bomb Poona eds D3 संमेष्यति रणे रामम् ( for ° ) T2 विशेषत ( for समा गत: ) — ( L. 728 ) D3 युक्त वै , D5 G2 वो युक्त ( for वो युक्त ) Ñ2 V1 D3 यदि वो युक्त ( V1 °क्त ) मन्यध्व ( for ° ) D5 G1 श्रूयता( G2 °पा वा )क्य मयेरितम् ( for ° ) — ( L 729 ) K1 ( marg ) प्रेषयामि , K3 सविनय , B1 2 D5 D6 G2 विसृज्याम ( G5 °मो ). D1 3-6 T2 3 G1. 4 °ज्यध्वं ( for °जध्वे ) K2 विसृज्य तत्र दूतं वै , K4 Dn विसृ- ज्यध्व तत्र दूत ( for ° ) — Before line 730, some Mss. ins वैशंपायन — ( L. 730 ) G4 श्रुते ( for श्रुत्वा ) T2 2 G1 3 पुंगवा ( for सत्तमा ) — ( L. 731 ) K Ñ2 D2 5 4 5 G1 6 जरासंधं ( for साल्वराजं ) T2 3 G2 जरासधो महा- बल ( for ° ) — ( L. 733 ) D3 महामति ( for महीपति ) — G2 om the ref — ( L. 734 ) D1 समासाद्य ( for °श्रित्य ) D3 पूर्वे हि ; D5 पूर्वं हि ( for पूर्वेऽस्मिन् ) — ( L. 735 ) B1 आप्नुवन्ति ( for प्रा° ) G2 -वाहना ( for °नम् )

इह मा नोच्यते भूपैः परसंश्रयहेतुना ।
कन्येव पतिविद्विषादन्यं रतिपरायणा ॥
अहो सुबलवद्दैवमशक्यं विनिवर्तितुम् ।
यदहं कृष्णहेतोर्हि संश्रयामि बलाधिकम् ॥
नूनं योगविहीनोऽहं कारयिष्ये पराश्रयम् ।
श्रेयो हि मरणं मह्यं न चान्यं संश्रये नृपाः ॥
कृष्णो वा बलदेवो वा यो वा सो वा नरोऽपरः ।
हन्ताहं प्रतियोत्स्यामि यथा ब्रह्मप्रचोदितः ॥
एषा मे निश्चिता बुद्धिरेतत्सुपुरुषव्रतम् ।
अतोऽन्यथा न शक्तोऽहं कर्तुं परसमाश्रयम् ॥
भवता साधुवृत्तानामाबाधं न करोति सः ।
तेन दूतं प्रदास्यामि नृपाणां रक्षणाय वै ॥
व्योममार्गेण यातव्यं यथा कृष्णो न बाधते ।
गच्छन्त्वमनुचिन्त्यैनं प्रेषयध्वं नृपोत्तमाः ।
अथ सौभपतिः श्रीमाननलार्केन्दुविक्रमः ।
रथेनादित्यवर्णेन प्रयातु तत्पुरं बली ॥
यवनेन्द्रो यथाभ्येति नरेन्द्राणां समागमम् ।
वचनं च यथास्माभिर्दौत्येन कृष्णविग्रहे ॥

वैशंपायन उवाच ।

पुनरेवाब्रवीद्राजा सौभस्य पतिमूर्जितम् ।
गच्छ सर्वनरेन्द्राणां साहाय्यं कुरु मानद ॥
यवनेन्द्रो यथाभ्येति यथा कृष्णं विजेष्यति ।
यथा वयं च युध्यामस्तथा नीतिर्निधीयताम् ॥
एवं संदिश्य सर्वांस्तान्भीष्मकं पूज्य धर्मतः ।

— (L. 736) D3 चोद्यते (for नोच्यते) K1 (sup lin) इह मा नोद्यते भूपा, K2 इह मासुद्यत भूपा, K3 इह किं चोद्यते भूपा, K4 इह सचोद्यते भूपा, Ñ3 V3 Dn इह मा चो(Dn सचो)द्यते भूपा, Ñ2 V1.2 B D5 D6 T2-4 G2.3.4.5 इहाद्य चोद्यते (T2 G1.3 °द्यत, G5 °दितो) भूपैः, D1.2 इहाद्यैः चोद्यते भूपा (D1 °पैः), D3 इह हि चोद्यते भूपैः, D4 इह मे नोच्यते भूपा (for °) D2 संभ्रम (for संश्रय) K2 परान्नश्रितहेतुकम्, D3 परमैः श्रेयहेतुना (for ᵇ) — (L. 737) K2.3 योषा (for कन्या) Bomb Poona eds G(ed) स्वपति (for पतिवि) Ñ2 D2 पति (for रति) K2 अन्या पतिपरायणा (for ᵇ) — (L. 739) Ñ2 om line 739ᵃ K2 Ñ3 V1 B2 Dn T2.4 G5 भीतोऽयं; K3 भीतोऽस्य, D4 (by corr) देवार्थं (for हेतोर्हि) — (L. 740) T3 पराक्रमम् (for °श्रयम्) K1 करिष्ये परमाश्रयम् (for ᵇ) — (L. 741) D5.6 G3 [श्रे]ष्ठ (for [श्रे]य) K1.2 नृपम् (for नृपाः) — (L. 742) K4 कृष्णो वा बलदेवो (for °) B1.2 D3 [अ]न्यो (for सो) Dn D3 अपर (for ऽपर) Ñ2.3 V D2 यो वान्यो वा नरोऽपर (Ñ2 V1 नरो धर, D5 परो नर), B1 D2.3 यो वान्यो (D3 °न्यो) वा नरो (D2.3 वा नरो) वर; T2 G1.3 वासवो वा नरेश्वरा, T3.4 यो यान्यो वा नरेश्वरा, G4 वासुदेवो न चापर, Bomb Poona eds G(ed) यो वान्यो वा नराधिप — (L. 743) K1.3 Ñ2.3 V B Dn1 D5 D1-6 T2.3 G1.2.4.5 हन्तारं, Dn2 °रं (for °हं) Ñ2 G1.4 ब्राह्मण; D1.2 ब्राह्मण (for ब्रह्म) K3 यथा ब्राह्मणनोदित, D2 (marg).3 T2.3 G1 यथा ब्रह्मवचो(D3 T3 °प्रचो)दितम् (for ᵈ) — (L. 744) V1.3 B1 D1.2 (sup lin as above) T2 निश्चया (for निश्चिता) Ñ2.3 V1.2 B1 D3 G1.3 एष मे निश्चयो युद्धं (for °) K3 Ñ2.3 V1.2 B1 Dn D5 D6 T2-4 G1.3.4 सत्पुरुष, D3 च पु° (for सुपु°) V1 D2.3 एष मे युव्ययन (sic) (for ᵇ) — (L. 745) G5 न शक्तो (for न शक्तो) V3 पक्ष (for पर) B1 D2 कर्तुं परमसाश्रयम्, G5 कर्तुं परमस° (for ᵈ) — (L. 746) D3 अवधि, D5 आश्रयं; T3 अबाधो, G4 अपायान् (for आबाधं) Ñ2 V1 करोम्यहम् (for °ति स) — T3 om lines 747–750 — (L. 747) D2 (marg as above) प्रयास्यामि (for प्रदा°) Ñ3 V1 D3 भवतो (for नृपाणां) Ñ2 V3 तु हिताय, G3 रक्षणे हि (for °णाय) — (L. 748) T3 G3 नभो, G3 तथा (for व्योम). V3 D1.2 G5 गन्तव्य (for यातव्यं) K3.4 D1.2 बाधति; Ñ2 V3 Dn2 D5 युध्यते (for बाधते) — (L. 749) K1 गच्छन्तु; T3 G5 °च्छम् (for °न्तम्) Ñ2 V3 [प्र]ेन (for [प्र]ेष) V3 G5 नरोत्तमा (for नृपो°) — (L. 750) Ñ2 D3 सप्रभ, T3 सुप्रभ, G2 संनिभ (for विक्रम) — (L. 751) D3 दिव्य (for [आ]दित्य) Ñ2 वचेन (for वर्णेन). D3 स्वपुरीं, D1 T4 स्वपुरं, D2 स्वं पुर (for तत्पुरं) — (L. 752) V1.2 प्रयोध्यसु (for यथाभ्येति) T3 om (hapl) lines 752ᵇ–756ᵃ K3.4 Dn D1 G5 समागमे, B1 D3 °गम (for °गमम्) — (L. 753) G5 यवने (for वचने) K3.4 यथास्माकं, T2 G1 तथास्माभिर् (for य°) D3 वचनीयं तथास्माभिर्, D6 °नाना यथास्माकं; T2 G4 वचनं च तथास्माभिर् (for °) K3 Ñ2 T2 दूत्ये न, V3 B1.2 D3 दूत्येन; Dn1 दौत्यार्थ, Dn2 दौत्ये च, D5 दूतेन; D6 दैत्यानां; D1 दौत्ये च (for दौत्येन) T2.3 G2.4.5 दैत्य (T3.4 दूत्ये) कृष्णस्य विग्रहे (for ᵇ) — T3 G1.4.5 om the ref — (L. 754) B1 om (hapl) lines 754ᵇ–759ᵃ — Before line 755, Dn1 (marg) ins जरासंध — (L. 755) D2.3 (marg as above) मन्दन (for मानद) — (L. 756) K1.2.4 Ñ2 V1.2 Dn D5 D1.2.4-6 G1.4 यानि (for [अ]भ्येति) K3 यत्र

कालयवन उवाच ।
जानाम्यहं महाबाहो दौत्येन त्वामिहागतम् ।
संमिते नरदेवानां प्रेषितं मागधेन च ॥
तेन त्वामर्चये राजन्विशेषेण महामते ।
अर्घपाद्यादिमत्कारैरासनेन यथाविधि ॥
भवत्यभ्यर्चिते राज्ञा सर्वेषामर्चितं भवेत् ।
आस्यतामासने दिव्ये मया सार्धं जनेश्वर ॥
हस्तालिङ्गनकं कृत्वा पृष्ट्वा च कुशलामयम् ।
सुखोपविष्टौ सहितौ शुभे सिंहासने नृपौ ॥
कालयवन उवाच ।
यद्बाहुबलमाश्रित्य वयं सर्वे नराधिपाः ।
वसामो विगतोद्वेगा देवा इव शचीपतिम् ॥
किमसाध्यं भवेदस्य येनासि प्रेषितो मयि ।
यद् सत्यं वचनस्य किमाज्ञापयति प्रभुः ।
करिष्ये वचनं तस्य अपि कर्म सुदुष्करम् ॥
साल्व उवाच ।
यथा वदति राजेन्द्र मगधाधिपतिस्तव ।
तथाहं संप्रवक्ष्यामि श्रूयतां यवनाधिप ॥
जरासंध उवाच ।
जातोऽय जगता बाधी कृष्णः परमदुर्जयः ।
विदित्वा तस्य दुर्वृत्तमहं हन्तुं समुद्यतः ॥
पार्थिवैर्बहुभिः सार्धं समग्रबलवाहनैः ।
उपरुद्धा महासेना गोमन्तमचलोत्तमम् ॥
चेदिराजस्य वचनं महार्थं श्रुतवानहम् ।
पदाताभ्यां विनाशाय हुताशनमयोजयम् ॥
ज्वालाशतसहस्राढ्यं युगान्ताग्निसमप्रभम् ।
दृष्ट्वा रामो गिरेः कूटादाप्लुतो हेमतालधृक् ॥
विनिष्पत्य महासेना मध्ये सागरसंनिभाम् ।

राजसु, K2 अर्धवानस्मि रा°; B1 नार्ध्यार्होऽस्मीति मानद, T3 नार्ध्योऽहं न नराधिप (for °) — D3 काल (for कालयवन) — (L. 807) K1 2 त्वा (for [अ]हं) D3 महाराज (for °बाहो) B3 G2 दूत्येन (for दौ°) — (L. 808) K1 D1 सहितो, K1 (sup lin) D5 D3 G2 सुहितं, K4 सगमे, Ñ2 V3 प्रहितं N3 V2 3 B1 2 T3 D3 महित, B3 D4 6 स्वहित, Dn D2 समते (D2 °त) (for समिते) K2 सहितो नरदेवैश्च (for °) K1 2 Dn D1 2 प्रेषितो (for °तं) — (L. 809) G3 तेन त्वामर्चयिष्यामि (for °) Ñ3 2 V B1 D3 G2 महा — (L. 811) V1 D4 ह्यर्चिते, T3 [ह]हुते (for °मने) K1 Ñ3 V2 B2 2 D1 2 3 भवन्न ह्यर्चितो (for [अ]भ्यर्चिते) [illegible] B2 D3 D6 मर्चित (Ñ [illegible] भवतो ह्य [illegible] °) Ñ2 [illegible] V1 2 D5 D3–6 G2 ins

22** मानिते तव राजेन्द्र सर्वेषां मानितं भवेत् ।
[D6 मानिनं (for °ते) D5 5 त्वयि (for तव) D3 मानि तेन च राजेन्द्र (for °) D3 मान्यता (for मानित) ]
— (L. 812) K Ñ3 V3 P? Dn D1–6 T3 शुभे (for दिव्ये) — (L. 812) K3 4 Ñ3 V1 3 B1 2 Dn D3 D6 नरेश्वर (for जने°) — Before line 813 all Mss ins वैशंपायन — (L. 813) Bomb Poona eds G(ed.) स हस्तालिङ्गनं कृत्वा (for °) K2 कुशलं तत, K2 4 °लादिकम्, Dn1 °लो त्तमम् (for °लामयम्) D3 स्पृष्ट्वा च कुशलान्यये (for °) Bomb. Poona eds — (L. 814) D1 शुभे (for शुभ) G(ed) स्थितौ (for नृपौ) — (L. 815) K1 2 4 V1 D4 5 T4 स्वद्बाहु, K3 N3 V3 B D1 2 G2 तद्बाहु (for यद्बाहु) K6 नृपाधिपा, K4 D1 नराधिप (for °पा) — (L. 816) K1 V6 G2 वसाम (for °मो) K2 वसाम विगतद्वेषा, K3 4 B2 D1 2 °म विगतोद्विग्ना, Ñ3 B1 2 Dn D3 D5 T4 °मो विगतोद्विग्ना (for °) V3 शतक्रतुम्, D1 शचीपते (for °पतिम्) — (L. 817) V3 [अ]त्र (for [अ]सि) B2 2 D3 G2 भवान् (for मयि) Ñ3 येनात्र प्रेषितो भवान् (for °) — (L. 818) D3 तथ्य (for सत्य) — (L. 819) V3 कार्यं (for कर्म) — (L. 820) K2 V3 D3 राजेन्द्रो (for °न्द्र) Ñ3 V1 B G2 नृप (for तव) D6 मागधाधिपतिर्नृप (for °) — (L. 821) D3 यथा (for तथा) G2 श्रूयतां च नराधिप (for °) — (L. 822) K1 Ñ2 3 V B3 Dn D3 जगदाबाधी B2 °तो बाधी, D3 °दाराध, G2 °तो हतो (for °ता बाधी) V2 कृष्ण परपुरंजय (for °) — (L. 823) V1 सद्वृत्त (for दुर्वृत्तं) D3 विदित्वा दुर्वृत्त तस्य (for °) — (L. 824) K Ñ2 B1 D1 2 सग्रामे, V3 समग्र (for समग्र) V1 सग्रामे यद्बुवाहनै (for °) — (L. 825) Dn उपरुध्य महासैन्यैर (for °) D1 (sup lin as above) [अ]चलोपमम् (for °समम्) G2 गोमन्ते पर्वतोत्तमे (for °) — (L. 827) K2 N3 Dn B1 2 D33 पादाताभ्यां (for प) — (L. 829) यदा तयोर् V1 2 B 2 D3 G2 शृङ्गाद्, D1 कूगाद् (for कूटाद्) B हेममाल, D3 वन° (for हेमताल) D3 आप्लुतो हेममालभृत् (for °) — (L. 830) K2 विनिष्पिप्य (for °ष्पत्य).

आजघान दुराधर्षो नराश्वरथदन्तिनाम् ॥
सर्पन्तमिव सर्पेन्द्रं विकृष्याकृष्य लाङ्गलम् ।
नरनागाश्ववृन्दानि मुसलेन व्यपोथयत् ॥
गजेन गजमारफाल्य रथेन रथयोधिनम् ।
हयेन च हयारोहं पदातेन पदातिनम् ॥
समरे सुमहातेजा नृपार्कशतसङ्कुले ।
विचरन्विविधान्मार्गान्निदाघे भास्करो यथा ॥
रामादनन्तरं कृष्णः प्रगृह्यार्कसमप्रभम् ।
चक्रं चक्रभृतां श्रेष्ठः सिंहः क्षुद्रमृगं यथा ॥
प्रविचाल्य महावीर्यः पादवेगेन तु गिरिम् ।
शत्रुसैन्ये पपातोर्व्यैर्वीरः प्रतापवान् ॥
मनृत्यन्निव शैलोऽसौ तोयधाराभिषेचितः ।
घूर्णमानो विवेशोर्वीं विनिर्वाप्य हुताशनम् ॥
आदीप्यमानाच्छिखराद्वप्लुत्य जनार्दनः ।
जघान वाहिनीं राजंश्चक्रव्यग्रेण पाणिना ॥
विक्षिप्य विपुलं चक्रं गदापातादनन्तरम् ।
नरनागाश्ववृन्दानि मुसलेन व्यचूर्णयत् ॥
क्रोधानलसमुद्भूतचक्रलाङ्गलवह्निना ।
निर्दग्धा महती सेना नरेन्द्रार्काभितापिता ॥
नरनागाश्वकलिलं पत्तिध्वजसमाकुलम् ।
रथानीकं पदाताभ्यां क्षणेन विलीकृतम् ॥
सेनां प्रभग्नामालोक्य चक्रानलभयार्दिताम् ।
महता रथवृन्देन परिवार्य समन्ततः ।
तत्राहं युध्यमानस्तु भ्रातास्य बलवान्बली ।
स्थितो ममाग्रतः शूरो गदापाणिर्हलायुधः ॥
द्वादशाक्षौहिणीर्हत्वा प्रभिन्न इव केसरी ।
हलं सीरमथोद्धृत्य गदया मामताडयत् ॥
वज्रपातनिभं वेगं पातयित्वा ममोपरि ।

---

— ( L 831 ) D1 s ( sup lin as above ) आजगाम ( for °घान ) D3 4 G3 दन्तिनम् ( for °नाम् ) K3 नरनागाश्व दन्तिनाम् ( for ᵈ ) —( L 832 ) K1 ( marg as above ) s स्वजन्तम् ( for सर्प° ) V3 सर्पेन्द्रमिव सर्पेन्त ( for ᶜ ) Ñ3 V3 B1 3 D4 4 G3 विक्षिप्य ( for विकृष्य ) V1 3 विक्षिप्याक्षिप्य लाङ्गलम् ( for ᵇ ) — ( L 833 ) Ñ2 -कलिलं ( for वृन्दानि ) K3 व्यपोथयत्, Ñ3 V3 3 B D3 [अ]वपोथ° ( for व्यपोथ° ) — ( L 834 ) Ñ3 V1 D3 D4 4 G3 योधिन, B3 °नाम् ( for °नम् ) — ( L 835 ) K3 हयारूढ, Ñ2 3 V1 3 B1 3 D3 D 6 G3 °रोहान् ( for °रोह ) V3 B2 3 पादातेन ( for प° ) V3 G3 पदातिन ( for °नम् ) Ñ3 V1 B1 D3 पादातेन पदातिन ( B1 °नाम् ) ( for ᵈ ) — ( L 836 ) K3 3 Ñ1 4 V1 3 B D1 3 6 T3 समरे स, D3 °रेषु ( for °रे सु ) D4 5 नृपाग्रा, T3 नराकें ( for नृपार्क ) K4 नृपाग्रां शतसङ्कुलम् ( for ᵇ ) — ( L 837 ) K2-4 Dn D1 3 दिनान्ते ( for निदाघे ) — ( L 838 ) K4 प्रसह्य, D3 प्रमथ्य ( for प्रगृह्य ) D5 प्रभ ( for प्रभम् ) — K D1-3 5 T3 om line 839 V3 reads line 839 after line 447 — ( L 839 ) Ñ2 चक्रवता ( for °भृता ) V3 B1 मृगान् ( for मृग ) — For line 839, Dn D3 G3 subst

23** चक्रं स च महातेजा कार्ली चैनायसीं गदाम् ।

While D4 subst for line 839

24** चक्रं सुदर्शनं चक्री गदां चैव महाप्रज ।

— ( L 840 ) T1 विचाल्य च ( for प्रविचाल्य ) V1 चारेण ( for वेगेन ) — K2-4 D1 om line 841, K1 D2 read it on marg — ( L 841 ) D3 स तु ( for शत्रु ) K1 Dn प्रपातोऽसौ ( for पपातोर्व्यैर् ) — ( L 842 ) K3 प्रवपंस्तिन, Ñ2 3 V B D3 6 G1 नृत्यन्निव च, D1 3 नृत्यन्तमिव ( for मनृत्यन्निव ) Bomb Poona eds G(ed) शैलेन्द्रस् ( for शैलोऽसौ ) D3 नृत्यन्निव च शैलेन्द्रम् ( for ᵃ ) — ( L 843 ) D3 [अ]ङ्घ, D3 G3 [उ]र्व्यां ( for र्वी ) K V3 D3 3 3 विनिवार्य, Ñ2 3 V2 3 B1 3 D5 D6 G3 निर्वाप्य च, D3 निर्वाप्य च ( for विनिर्वाप्य ) — ( L 844 ) V3 K Dn D1 3 4 T4 आदीप्यमाना ( for मानात् ) — ( L 845 ) K3 जगाम ( for जघान ) D3 राजन् ( for राजंश् ) — ( L 846 ) D3 विमल ( for विपुल ) K1 3 गदापातमनुद्रुतम्, K3 4 Dn D1 3 °पातनमद्भुतम् ( for ᵈ ) — ( L 847 ) Ñ2 V3 व्यचूर्णयत्, D3 D3 व्यपोथ° ( for व्यचूर्ण ) — ( L 848 ) K1 Ñ3 V1 3 B Dn Dn D3-4 T3 क्रोधानिलसमुद्भूता( Ñ3 B1 °भूता, D3 °द्भूय ) ( for ᵃ ) — ( L 849 ) Ñ2 3 V B Dn D3 D3 3 6 T4 -पालिता ( for -तापिता ) G3 नरेन्द्रैश्चाभिपालिता ( for ᵇ ). — ( L 850 ) D1 तेन ( for नर ) — ( L 851 ) K1 3 पदाताभ्यां रथानीकं ( for ᵃ ) Ñ2 3 V3 B D3 D2 ( sup lin ) 3 T3 G3 विदली ( for विली ) — ( L 852 ) B3 प्रभिन्नाम् ( for प्रभग्नाम् ) K1 चक्रानिल ( for °नल- ) — ( L 853 ) Ñ3 ( marg as above ) गज, G3 राज ( for रथ ) — ( L 854 ) Ñ3 ततो ( for तत्र ) K3 [अ]थ ( for [अ]हं ) V3 B1 D3 D1 6 बलहा ( for °वान् ) B1 भ्राता अस्य महाबली ( for ᵇ ) — ( L 855 ) D3 गदया हि ( for गदापाणिर् ) — ( L 857 ) Ñ2 3 V B D3 D3 3 3 T3 G3 उत्सृज्य ( for उद्धृत्य ) K3 गदायुधम् ( for

भूयः प्रहर्तुकामो मा वैशाखेनास्थितो महीम् ॥
वैशाखं स्थानमास्थाय गुहः क्रौञ्चं यथा पुरा ।
तथा मां दीर्घनेत्राभ्यामीक्षते निर्दहन्निव ॥
तादृग्रूपं समालोक्य बलदेवं रणाजिरे ।
जीवितार्थी नृलोकेऽस्मिन्कः पुमान्स्थातुमर्हति ॥
दृष्ट्वा महागदां भीमां कालदण्डमिवोद्यताम् ।
कालाङ्कुशेन निर्धूतं स्थित एवाग्रतो मम ॥
ततो जलदगम्भीरस्वरेणापूरयन्नभः ।
वागुवाचाशरीरेण स्वयं लोकपितामहः ।
प्रहर्तव्यो न राजायमवध्योऽयं तवानघ ।
कल्पितोऽस्य वधश्चान्याद्विरमस्व हलायुध ॥
श्रुत्वाहं तेन वाक्येन चिन्ताविष्टो निवर्तितः ।
सर्वप्राणहरं घोरं ब्रह्मणा स्वयमीरितम् ॥
तेनाहं वः प्रवक्ष्यामि नृपाणां हितकाम्यया ।
श्रुत्वा त्वमेव राजेन्द्र कर्तुमर्हसि मद्वचः ॥
तपसोग्रेण महता पुत्रार्थी तोष्य शंकरम् ।
प्राप्तवान्देवदेवात्त्वामवध्यं माथुरैर्जनैः ॥

महामुनिश्रायसचूर्णभस्म-
श्रुपस्थितो द्वादशवार्षिकं व्रतम् ।
सुरासुरैः संस्तुतपादपङ्कजं
स लब्धवानीप्सितकामसंपदम् ॥
तपोबलाद्गार्ग्यमुनेर्महात्मनो
वरप्रभावाच्छक्लेन्दुमौलिनः ।
रणे समासाद्य जनार्दनो हिम
विलीयते भास्कररश्मिना यथा ॥
यतस्व राज्ञां वचनप्रचोदितो
व्रजस्व यात्रां विजयाय केशवम् ।
प्रविश्य राष्ट्रं मथुरां वशे नय

गदया माम्) D1 स ताडयत् (for अता°) V1 B D3 गदया समताडयत् (for ⁵) —(L. 858) K3 G3 घोरं (for वेग) Ñ2 3 (marg. as above) V2 D1 3 D5 D6 G3 [ऽ]रमि (for [ऽ]परि) —(L. 859) D3 भूयो मां हन्तुकामो वै (for °) K3 विशेषेण, B3 वैस्थानेन, D3 (marg) आयुधेन (for वैशाखेन) D1 G3 स्थितौ (for [आ]स्थितो) —(L. 860) Ñ2 V2 B1 3 D5 T1 G3 आसाद्य, D3 आश्रित्य (for आस्थाय) Ñ2 पुरा यथा (by transp) —(L. 861) Dn D5 वीक्षते, D4 ईक्षितैर् (for ईक्षते) —(L. 863) Ñ3 2 V B D3 D6 तादृश रूपमालोक्य (Ñ3 also °स्थाय) (for °) —(L. 863) K3 नृपो लोके D3 त्रिलोकेऽस्मिन् (for नृलो°) —(L. 864) K3 4 Dn D5 गृहीत्वा स (D1 च) (for दृष्ट्वा महा) Ñ2 V1 3 Dn D5 गृहीत्वा स (D1 च) (for दृष्ट्वा महा) K1 3 4 Ñ3 B3 D5 D3 T1 दृष्ट्वा गदा महाभीमां (for °) —(L. 865) B1 3 Dn T1 G3 [ऽ]द्यताम् (for [ऽ]द्धृ°) K3 4 K1 3 Ñ3 V2 B1 3 Dn D5 D2 4 6 G3 कुलाङ्कुशेन, B3 Dn कुशाङ्कु (K1 का) लाञ्छकेन, Ñ2 V3 3 हलाङ्कुशेन, D3 बलाङ्कुशेन निर्धूतं, D3 T1 कुलाङ्कुशेन (for काला°) D3 हलम् (for मम) धैर्येण (T1 निर्घात) (for °) D3 हलम् (for मम) —(L. 866) D1 इव (for नभ) —(L. 868) Ñ2 वै राम, Ñ3 V1 D5 ते राजन् V2 वै राजन् B G3 ते राम, D1 3 ते राजा, D3 से राम (for राजायम्). T1 Ñ2 3 V1 3 B1 3 D3 D7 5 6 न वध्यो (for अवध्यो) D4 G3 न वध्योऽस्य त्वया (D4 [sup lin] तदा) नव (for °) —(L. 869) D5 वधे (for वधश्) K B3 ऽन्यस्मात् D3 4 G3 वान्यो, D6 चान्यो (for चान्याद्) — B3 om lines 870 874 —(L. 870) D1 चिन्ताविष्टे निवर्तिते (for ⁴) —(L. 871) K4 श्रुत्वा (for सर्व) K3. 4 Dn शङ्करम् (for स्वयम्) —(L. 873) Ñ3 मे वच, V2 3 D3 3 तद्वच (for म°) —(L. 875) K1-4 Dn D1 3 4 देवदेव, Ñ3 V3 D5 G3 °देव, T1 नरदेवं (for देवदेवात्) K4 स, G3 त्वम् (for त्वाम्) —(L. 876) K3 D1 [आ]यसं (for °स) K3 D4 3 अश्नुवन् (corrupt), V3 D3 आशयन् (for अश्नन्) —(L. 877) Dn1 व्रते (for व्रतम्) —(L. 878) D3 सनत- (for संस्तुत) V3 B1 3 D3 -पादमर्चयन्, B3 °पङ्कज (for °पङ्कज) —(L. 880) Ñ3 D3 मुनिर्महात्मा (for मुनेर्महात्मनो) —(L. 881) K1 V2 3 G3 -प्रसादात्, D3 प्रसादाच्च (for -प्रभावाच्) बल (for वर°) D1 2 च किलेन्दु; D4 सक° (for शक°). K4 मौले (for मौलिन) —(L. 833) K3 4 Dn T1 भवन्तमासाद्य, Ñ3 V1 B1 3 D1 रणे त्वमा°, V3 D3 3 रणे त्वया°, G3 रणे समा° (for रणे समा°) K1 त्वमासताय च रणे जनार्दनो हिमम् (sic) —(L. 883) K3 व्यलीयत; V3 सलीयते (for विली°) D3 विलीयते सैन्धवमप्सु वै यथा —(L. 884) K3 V1 2 B3 D1 3 वचनं प्रचो(D3 मो)दितः; K3 °ते प्रनोदिन, K4 °ने प्रचोदितो, Ñ2 3 V3 D4 °नप्रचो-दित, D3 °नप्रनोदितो (for °नप्रचोदितो) K3 वचस्तदाज्ञा वचन प्रचोदित —(L. 885) D3-4 विजयस्व (for °याय) —(L. 886) Dn B D5 T1 G3 केशवे (for केशवम्) D3. 4 T1 च सेनया, D1 चमूचयं, D4 स्वसेनया (for वशे नय) Ñ3 3 V B D3 D2 4 G3 प्रसभ्य राष्ट्रं (G3 °ष्ट्रं) मथुरां

निहत्य कृष्णं प्रथयस्व वै यशः ॥
माथुरो वासुदेवोऽयं बलदेवश्च बान्धवः ।
तौ विजेष्यसि संग्रामे गत्वा तां मथुरां पुरीम् ॥
साल्व उवाच ।
इत्येवं नरपतिभास्करप्रगीतं
वाक्यं ते कथितमिदं हितं नृपाणाम् ।
तत्सर्वं सह सचिवैर्विमृश्य बुद्ध्या
यद्युक्तं कुरु मनुजेन्द्र आत्मनेष्टम् ॥

Colophon

वैशंपायन उवाच ।
एवं कथयमानं तं साल्वराजं नृपाज्ञया ।
उवाच परमप्रीतो यवनाधिपतिर्नृपः ॥
धन्योऽस्म्यनुगृहीतोऽस्मि सफलं जीवितं च मे ।
कृष्णनिग्रहहेतोर्यन्नियुक्तो बहुभिर्नृपैः ॥
दुर्जयं त्रिषु लोकेषु सुरासुरगणैरपि ।
तस्य निग्रहहेतोर्मामवधार्य जयाशिषम् ॥
महद्भिः राजसिंहैस्तैरवधार्य जयो मम ।
तेषां वागस्त्वमर्षेण विजयो मे भविष्यति ॥
करिष्ये वचनं तेषां नृपसत्तम चोदितम् ।
पराजयोऽपि राजेन्द्र जयेन सदृशो मम ॥
अद्यैव तिथिनक्षत्रं मुहूर्तकरणं शुभम् ।
यास्यामि मथुरां राजन्विजेतुं केशवं रणे ॥
एवमाभाष्य राजानं सौभस्य पतिमूर्जितम् ।
सत्कृत्य च यथान्यायं महार्हवरभूषणैः ॥
ब्राह्मणेभ्यो ददौ वित्तं सिद्धादेशाय वै नृपः ।
पुरोहिताय राजेन्द्र प्रददौ बहुशो धनम् ॥
हुत्वाग्निं विधिवद्राजा कृतकौतुकमङ्गलः ।
प्रस्थानं कृतवान्सम्यग्जेतुकामो जनार्दनम् ॥
साल्वोऽपि भरतश्रेष्ठ कृतार्थो हृष्टमानसः ।
यवनेन्द्रं परित्यज्य जगाम स्वपुरं नृप ॥

Colophon

जनमेजय उवाच ।
विदर्भनगरीं याते ब्रह्मतुल्यपराक्रमे ।
किमर्थं गरुडो नीतः किं च कर्म चकार सः ॥
न चारुरोह भगवान्वैनतेयं महाबलम् ।
एतं मे संशयं ब्रह्मन्ब्रूहि तत्त्वं महामुने ॥
वैशंपायन उवाच ।
शृणु राजन्सुपर्णेन कृतं कर्म ह्यमानुषम् ।
विदर्भनगरीं याते वैनतेये महाद्युतौ ॥
असंप्राप्ते च नगरीं मथुरां मधुसूदने ।

च सेनया —(L. 887) V2 प्रमथ्य (for निहत्य) T4 Bom Poona eds G(ed) प्रथयन्स्वक (for °यस्व वै) —(L. 888) K1 3 ऽस्य, K3 4 Ñ2 3 V B D5 D1 3 4-6 T4 G2 [ ] (for च) D5 बलदेवसहायवान् (for °) —(L. 889) K Dn T4 त, D1 त्व (for तौ) Dn1 G2 मथुरा° (for °रां) —(L. 890) V3 D5 नृपति (for नरपति) V1 3 भास्करप्रणीत, T4 °रेण गीत (for °रप्रगीत) —(L. 891) V1 Ds1 G2 मया (for इद) V2 नराणाम् (for नृपा°) —(L. 893) K4 सर्वे (for सर्वं) V1 om सह —(L. 893) K1 2 चाप्मनस्तव K3 4 Ñ2 3 V Dn D1-4 T4 चात्मनेष्टम् D5 तन्मनेष्टम् (for आत्मने°)

Colophon om. in B1. — Mention of the Epic: K3 Ds2 — Mention of Khila K3 4 Ñ2 V B2 3 Dn Ds2 D1-3 — Sub parvan D3 4 पारिजात — Adhy name K Dn D5 D1 3 G2 शाल्ववाक्यम्, Ñ2 V2 3 B3 रुक्मिणीस्वयंवरम्, D2 शाल्वकृष्णात्मकथनम्, D6 दूतप्रेषणम् — Adhy no K3 107, Ñ2 V2 3 B3 111, V1 110, Dn Ds2 D1 103, D1 105, D3 117, T4 100, G2 115

(L. 914) K4 Ñ3 V [ ] Dn D5 D1 4 5 6 T4 G2 °नगराद् (for °रीं) —(L. 917) K1 4 Ñ2 3 V B1 3 D T4 G2 एतन्मे, K3 एतं वै (for एतं मे) B1 एतन्मे संशयं राजन् (for °) D6 च त्वं (for तत्त्वं) D5 G2 महामते (for °मुने) —(L. 918) Ñ2 3 V1 3 B Dn D5 D6 B1 [म]ति-मानुषम्, D5 ह्यमा° (for ह्यमा°) —(L. 919) Ñ2 V1 3 B Dn D5 D1 5 6 T4 नगराद् (for °नगरीं) D1 (marg) गत्वा (for याते) G1 वैदर्भनगरीं गत्वा (for °) K4 T4 महाद्युते. B1 3 D5 महाद्युते, D5 महामतौ (for °द्युतौ) K2 Bom. Poona eds G(ed) वैनतेयो महाद्युति (K3 °ते), G2 °वयसोऽच्युते (for °) — Ñ2 reads lines 920 921 twice —(L. 920) D1 असंप्राप्यैव (for °प्ते च) K1 D1 नगर (for °रीं) — K3 om line 921 —(L. 921) K3 Ñ2 (both times) V2 B1 D2 D1-4 T4 महाद्युति (for °मति) —(L. 922) D2 तत्रेन (for तेन) K2 तदा (for प्रभो) —(L. 923) D2 दिव्यां (for रम्यां)

मनसा चिन्तयामास वैनतेयो महामतिः ॥
यदुक्तं देवदेवेन नृपाणामग्रत प्रभो ।
यास्यामि मथुरा रम्या भोजराजेन पालिताम् ॥
इति तद्वचनस्यान्ते गमिष्येति विचिन्तयन् ।
कृताञ्जलिपुटः श्रीमान्प्रणिपत्याब्रवीदिदम् ॥
देव यास्यामि नगरीं रैवतस्य कुशस्थलीम् ।
रैवतं च गिरिं रम्य नन्दनप्रतिमं वनम् ।
राक्षसोद्वासिता रम्या शैलोदधितटाश्रिताम् ।
वृक्षगुल्मलताकीर्णां पुष्परेणुविभूषिताम् ॥
गजेन्द्रभुजगाकीर्णामृक्षवानरसेविताम् ।
वराहमहिषाक्रान्ता मृगयूथैरनेकशः ॥
तां समन्तात्समालोक्य वासार्थं ते क्षमाक्षमम् ।
यदि स्याद्भवते रम्या प्रशस्ता नगरीति च ।
कण्टकोद्धरणं कृत्वा आगमिष्ये तवान्तिकम् ॥
एवं विज्ञाप्य देवेश प्रणिपत्य जनार्दनम् ।

जगाम पतगेन्द्रो वै पश्चिमाभिमुखो बली ।
कृष्णोऽपि यदुभिः सार्धं विवेश मथुरा पुरीम् ॥
स्वैरेण चोग्रसेनश्च नागराश्चैव सर्वशः ।
प्रत्युद्गम्यागतं कृष्णमानर्चुर्जनसंकुलम् ॥

जनमेजय उवाच।

श्रुत्वाभिषिक्तं राजेन्द्र वहुभिर्वसुधाधिपैः ।
किं चकार महाबाहुरुग्रसेनो महीपतिः ॥

वैशंपायन उवाच ।

श्रुत्वाभिषिक्तं राजेन्द्र बहुभिर्वसुधाधिपैः ।
इन्द्रेण कृतसंधानं वृत चित्राङ्गदं कृतम् ॥
एकैकं नृपतेर्भाग शतसाहस्रसंमितम् ।
राजेन्द्रेष्वर्बुद दत्त मानवेषु च वै दश ॥
ये तत्र समनुप्राप्ता नरेन्द्रास्ते गृहं गताः ।
शक्रो यादवरूपेण प्रददौ हरिचिन्तितम् ॥
एव निधिपतिः श्रीमान्दैवतैरनुमोदितः ।

---

Ñ3 -राजेन्द्र ( for °न ) —( L. 934 ) K3 V1 D1 T4 G3 गमिष्यति, K4 °ष्यामि ( for °ष्येति ) D5 6 गमिष्यामीति चिन्तयन् ( for ° ) — Before line 926, some Mss ins गरुड उवाच —( L. 926 ) T4 नगरे ( for °रीं ) —( L. 927 ) K3 तत्र वै, D5 च पुरं ( for च गिरिं ) V3 B1 3 D5 D6 महत् ( for वनम् ) T4 नन्दन प्रतिनन्दनम् ( for ° ) —( L. 928 ) K Ñ1 3 V2 3 B1 3 Dn D5 D1 2 6 रक्षसो ( K Dn D1 3 रुक्मिणो )द्वासिता रम्या ( for ° ) K3 -जला श्रिताम् ( for तटा° ) —( L. 930 ) D5 वृक्ष°, G3 मृग ( for ऋक्ष ) —( L. 931 ) V3 गज ( for मृग ) —( L. 932 ) K1 3 D5 तान्समन्तात् ( D5 °त् ), V3 ता स यत्नात्, D1 ता समस्तां ( for ता समन्तात् ) Poona ed क्षमा क्षमा ( for क्षमाक्षमम् ) —( L. 933 ) K3 D3 4 T4 G3 भवतो, Ñ3 D2 °न ( for °ते ) K3 यदीप्सा भवतो रम्या ( for ° ) B3 3 Cal ed नगरावलि, D5 D6 °रावनि ( for °रीति च ) —( L. 934 ) V3 ततो ( for तव ) D3 3 [अ]न्तिके ( for [अ]न्तिकम् ) — Before line 935, some Mss ins वैशंपायन —( L. 936 ) D1 मुख ( for -मुखो ) —( L. 937 ) K1 3 Ñ2 3 V B3 3 Dn D5 D1 2 ( sup lin as above ) 4-6 G4 शुभाम्, K4 प्रति ( for पुरीम् ) —( L. 938 ) K3 स्वैरिणश्च, D1 3 सैन्येन ( for स्वैरेण ) K1 V3 B D6 उग्रसेनश्च ( for चो° ) K3 Ñ3 3 V1 3 Dn D5 D5 ( marg ) 3-4 T4 G3 स्वैरि( D5 सखे )ण्य उग्रसेनश्च ( for ° ) — K3-4 D1 om lines 939–941 including the ref K1 reads line 939 and D3 lines 939 940 on marg —( L. 939 ) K1 Ñ3 3 V3 3 B D5 D3 4 6 T1 G3 [अ]र्चयन्, V1 D6 [आ]र्चयत्, D4 च यत् ( for [आ]नर्चु ) Ñ3 3 V B D3 D3 6 T1 G3 प्रहृष्ट ( for आनर्चुर् ) —( L. 940 ) D1 राजान ( for राजेन्द्र ) K1 वसुधाधिपम् ( for °पै ) — Ñ1 om ( hapl ) lines 941 942 K1 reads line 941 on marg —( L. 941 ) K1 महावली ( for महीपति ) — After line 941, T4 ins

25** चारेणैवोग्रसेनश्च नागराश्चैव सर्वशः ।

— K1 D5 om line 942 —( L. 942 ) B3 बहुभि पार्थि वोत्तमै ( for ° ) —( L. 943 ) K3 मय ( for कृत- ) K4 इन्द्रेण नृपसंधाने ( for ° ) —( L. 944 ) V1 -निर्मितम् ( for संमि° ) — For line 944 G3 subst

26** एकैकं शतसाहस्रं संमितं राजमण्डलम् ।

—( L. 945 ) K3 3 4 N3 V1 3 B3 Dn D5 D1 3 T4 राजेन्द्रे तु, D1 राजेन्द्रम् ( for °न्द्रेषु ) D1 3 दत्त्वा ( for दत्तं ) D4 मनुष्येषु ( for मानवेषु ) — For line 945 K1 subst

27** गजेन्द्र चार्थयुक्तं च कृत्वा वै मानुषेषु च ।

—( L. 946 ) K1 2 नरेन्द्रा स्व ; K3 Ñ3 ( marg ) Dn D5 T1 न रिक्तास्ते, K1 सधनास्ते, Ñ3 3 V3 3 B D1 3-6 न रिक्ता स्व V1 न ते रिक्-, D1 ( also on marg ) सगृहास्ते, G3 ते रिक्ता न ( for नरेन्द्रास्ते ) D3 नरेन्द्रा स्वगृहान्( sup lin. °हं ग )ता ( for ° ) —( L. 947 ) D3 दोपेन्द्रो देव

इति श्रुत्वान्तिकजनाल्लोकप्रवृत्तिकाक्षरात् ॥
चकार महतीं पूजा देवतायतनेषु वै ।
वसुदेवस्य भवने तोरणोभयपार्श्वतः ॥
नटाना नृत्यगेयानि वाद्यानि च समन्ततः ।
पताकाध्वजमालाढ्य कारयामास सर्वतः ॥
कसराजस्य तु सभा विचित्राम्बरसुप्रभाम् ॥
पताका विविधाकारा दापयामास भोजराट् ॥
तोरण गोपुर चैव सुधापङ्कविलेपनम् ।
कारयामास राजेन्द्र राजेन्द्रस्यासनालयम् ॥
नटाना नृत्यगेयानि वाद्यानि च समन्ततः ।
पताकावनमालाढ्या. पूर्णकुम्भास्ततस्ततः ॥
राजमार्गेषु राजेन्द्र चन्दनोदकसेचिते ।
वस्त्रास्तरणक राजा दापयामास भूतले ॥
धूपपात्रोपगाः पार्श्वे चन्दनागरुगुग्गुलैः ।
गुडसर्जरसाश्चैव दह्यमानाः समन्ततः ॥
वृद्धस्त्रीजनसघैश्च गायद्भि· स्तुतिमङ्गलम् ।
अलंकृत्वा प्रतीक्षन्ते स्वेषु स्थानेषु योषितः ॥
एव कृत्वा पुरानन्दमुग्रसेनो नराधिपः ।
वसुदेवगृहं गत्वा प्रियाख्यान निवेद्य च ।
रामेण सह समन्य निर्गतो रथमन्तिकम् ॥
तस्मिन्नेवान्तरे राजञ्शङ्खध्वनिरभून्महान् ॥
पाञ्चजन्यस्य निनद श्रुत्वा मधुरवादिनः ।

---

स्पैण ( for ° ) D3 चिन्तनम् ( for चिन्तितम् ) D3 प्रददौ चिन्तित हरि ( for ᵇ ) —( L 948 ) Ñ3 स नृपति , D3 धन° ( for निधि° ) G3 अभिनन्दित ( for समुमोदित ) — Before line 949, D3 ( marg ) ins वैशंपायन —( L 949 ) K3 च सकलान्, K3 4 D3 निगदतो, Ñ3 V1 3 B1 3 Dn D3 D1 3 3 T1 G3 [आ]त्मिकजनात्, D2 [आ]धिक° ( for [आ]न्तिक° ) —( L 951 ) K3 4 Dn D3 4 भवन ( for °ने ) — Dn om line 952 —( L 952 ) T1 तत्रा नदितमेर्यादि ( for ° ) —( L 953 ) Ñ3 3 V2 3 B D3 D3 6 T4 मालाढ्या , D4 G3 °ढ्य ( for °ढ्य ) K1 D1 वै नृप , K3–4 V3 B1 Dn D3 3 T1 वै नृप D3 सर्वेश ( for °त ) —( L 954 ) Ñ3 V1 3 B3 D1 3 4 T1 सुप्रभै , B3 D3 स प्रभाम्, G3 सप्रभै ( *for* सुप्रभाम् ) K1 3 V3 D3 3 पताको विविधाकारा ( for ° ) K4 D4 कारयामास ( for दाप° ) D3 शोभयन् ( for भोजराट् ) —( L 956 ) Dn गोपुरे ( for °र ) K3 तोरणं गोपुरे चैव ( for ° ) K1 3 Ñ3 D3 वसुधापङ्कलेपनम्, D3 सुधापङ्कायकै° ( for ° ) —( L 957 ) K3 Ñ3 V3 D3 D4 T1 राजेन्द्रो V3 भोजो वै ( for राजेन्द्र ) — D6 om ( hapl ) lines 957ᵇ–960ᵃ V1 3 [आ]मात्यालयम्, D1 G3 सभा° ( for [आ]सना° ) — K Ñ3 3 V B3 D3 T1 G3 om line 958 —( L 959 ) V B3 ध्वज ( for वन ) K1 3 D3 मालाढ्य ( for °ढ्या ) Ñ3 V1 3 B1 3 D3 G3 समन्तत° ( for ततस्तत ) D3 पूर्णकुम्भामितस्तत ( for ᵇ ) —( L 960 ) K4 D3 4 G3 मार्ग च , D3 मार्गेण ( for °षु ) K3 D3 3 ( before corr ) सेवित , K3 °सेचनम्, K3 D3 3 °सेवितै ; Ñ3 3 V D3 T1 °सेविता ( V3 T1 °तान् ), B D33 D3 सेचिता , Dn सेवितम् ( for सेचिते ) —( L 961 ) Ñ3 ( marg as above ) V1 3 B वस्त्राभरणक राना ( for ° ) — After line 961, D3 ins

28** दाप पार्श्वोभये चैव दापयामास भूतले ।

—( L 962 ) D3 3 पात्रेऽभवत् ( for पात्रोपगा ) K1 4 D3 धूप चैवोभयो पार्श्वे, K3 तथैवोभयपार्श्वे च, Ñ3 3 V1 3 B

[illegible]

( for ° ) —( [illegible] ) [illegible] D1 3 4 4 सर्पैरस , K3 सार्जरसात् ( for स° ) V3 D3 T1 G3 गुड सर्जरस वै( V3 °साश्चै )च ( for ° ) K1 3 V1 दह्यमानं ( for °ना ) K4 Ñ3 V3 Dn D3 ततस्तत ( for समन्तत ) K3 V3 D1 4 दह्यमानस्ततस्तत , Ñ3 B D3 D3 6 T1 G3 °माने ततस्तत D3 °मानमितस्तत ( for ᵇ ) —( L 964 ) Ñ3 V1 3 B3 D3 D3 सघास्तु ( for °सघैश ) Ñ3 V3 B1 D3 D3 गायन्ति , B3 °न्ते ( for °द्भि ) D3 श्रुति ( for स्तुति ) T1 *G3 °मङ्गलै ( for °लम् ) K3 गायन्तीभि सुमङ्गलै ( for ᵇ ).* —( L 965 ) Ñ3 3 V3 Dn D1 T1 अर्घ्यं कृत्वा , V1 अर्घ्यं दत्त्वा , B D3 6 G3 अर्घ्यं कृत्वा ( for अलकृत्वा ) D3 प्रतीक्षन्ति ( for °क्षन्ते ) D3 अर्घ्यं कृत्वा प्रतीक्षन्ति ( for ° ) K1 3 B1 तेषु , D3 ( *sup lin as above* ) सुख ( for स्वेषु ) —( L 966 ) K3 4 महामति , Ñ3 3 V B D3 D3 G3 तु बुद्धिमान् ( for नराधिप ) K1 3 ( before corr ) 4 5 उग्रसेनेन धीमता ( for ᵇ ) —( L 967 ) K3 प्रियस्थानं ( for प्रियाख्यानं ) D3 न्यवेदयत् ( for निवेद्य च ) —( L 968 ) D1 निर्गम्य ( for समन्य ) K1 ( *sup lin* ) निर्गतो रथमन्तिकान्, K3 °तो नगरान्तिकम्, D1 3 °तो रथ संहित ( for ᵇ ) — After line 969, K3 ins an addl. colophon mentioning adhy name कृष्णागमनम् —( L 969 ) K3 [अ]न्तिके ( for [अ]न्तर ) K3 4 एतस्मिन्नन्तरे राजन् ( for ° ) Ñ3 V1 B1 3 D3 D3 महानभूत् ( by transp. ) —( L 970 ) Dn D1 माधुर , some Mss मधुर ( for मधुर° ) —( L 971 ) K3 4 Ñ3 V3 3 B3 Dn D1 3 4 4 T1 G3 स्त्रियो बालाश्च वृद्धाश्च ( for ° ) B3 T1 भृशा ( for भृश ).

स्त्रियो वृद्धाश्च बालाश्च सूतमागधनन्दिनः ॥
ते निर्ययुर्महासेना रामं कृत्वाग्रतो नृप ।
अर्घपाद्यं पुरस्कृत्य उग्रसेनो महीपतिः ॥
अवतीर्य रथाच्छुभ्रात्पादमार्गेण चाग्रतः ।
दृष्ट्वासीनं रथे दिव्ये दिव्यरत्नविभूषिते ॥
अङ्गेष्वाभरणं चैव दिव्यरत्नप्रभायुतम् ।
वनमालोरसे दिव्यं तपन्तमिव भास्करम् ॥
चामरव्यजनं छत्रं खगेन्द्रध्वजमुच्छ्रितम् ।
राजलक्षणसंपन्नमासन्नार्कसमोज्ज्वलम् ॥
श्रियाभिभूत देवेशं दुर्निरीक्ष्यतरं हरिम् ।
दृष्ट्वा स राजा राजेन्द्र हर्षगद्गदया गिरा ।
बभाषे पुण्डरीकाक्षं राम बलनिषूदनम् ॥
रथेन न मया गन्तुं युक्तपूर्वं विचिन्त्य वै ।
अवतीर्णो महाभाग गच्छ त्वं स्यन्दनेन च ॥
विष्णुना छद्मरूपेण गत्वेमां मथुरां पुरीम् ।
अत्र प्रकाशितात्मानं देवेन्द्रत्वं नृपार्णवे ।
तमहं स्तोतुमिच्छामि सर्वभावेन केशवम् ॥
प्रत्युवाच महातेजा राजानं कृष्णपूर्वजः ।
न युक्तं नृपते स्तोतुं प्रभवन्तं देवसत्तमम् ।
अस्तोत्रैरेव संतुष्टस्तव राजञ्जनार्दनः ॥
तुष्टस्य स्तुतिभिः किं ते दर्शनेन तव स्तुतिः ॥
राजेन्द्रत्वमनुप्राप्य आगतस्तव वेश्मनि ।
तस्य किं स्तुतवान्राजन्दिव्यैः स्तोत्रैरमानुषैः ।
एवमाभुनमाणौ तौ संप्राप्तौ केशवान्तिकम् ॥

—(L. 972) K3 4 N2 3 V B3 3 Dn D3 D5 3 5 6 T4 विनिर्ययुर्, B3 विनिर्यासुर् (for ते निर्ययुर्) D1 D1 G3 विनिर्ययौ महासेना (G2 °नो) निर्ययुर्महती सेना —(L 973) (for °) K3 B3 D1 3 G3 नृप (for नृप) —(L 973) N2 V3 D3 D5 अर्घं पाद्य, N2 V3 अर्घ्यपाद्य, V1 B1 3 Dn D3 G3 अर्घ्यं पाद्य, D3 अर्घ्यपाद्ये (for अर्घपाद्य) K3 च युद्धि मान्, V1 3 B1 3 D3 D4 6 इव धीमत (V1 °ता) (for मही पति) K1 3 4 V3 B3 Dn D1 3 T4 G2 उग्रसेनन धीमता (for °) — After line 973, all Mss. (N2 D4 om) ins
29** दृष्टिपथ्यानमासाद्य उग्रसेनो महीपति ।
[ K3 इति (for दृष्टि) T3 damaged for °)]
D3 om. line 974 — T4 damaged for lines 974–975 —(L 974) D3 रथोदग्राद् (for रथाच्छुभ्रात्) N2 3 V1 3 D3 3 3 [आ]गत°, B1 [अ] D3 [अ]व्रजत्, V3 B3 D3 (sup lin) [अ]गमत्, B3 [अ]ब्रवीत् T4 [अ]ब्रुवन् (for [अ]ग्रत) —(L. 975) D3 स स (for [आ]सीन) K3 N2 V B3 Dn D1 3 4 K1 3 (marg) 3 रम्ये, K4 शुभ्रे, N2 तस्य (for दिव्ये) K N2 Dn दृष्ट्वा श्रुते रथं रम्य (for °) D3 दिव्ये (for दिव्य) K3 विभूषितम् (for °ते) —(L 976) D3 रत्नं (for -रत्न) N2 V1 प्रभो -शुभायुतम्, N2 V3 B1 3 D3 D5 प्रभान्वि°, K3 उज्ज्वलम्, G1 प्रभाश्रितम् (for °युतम्) —(L 977) K3 3 N2 (marg) V1 D1 G3 माली रथ (for मालोरस) —(L 978) K4 N2 3 V1 3 B D3 पतन्तम् (for तप°) K3 खगेन्द्रध्वजमुद्रितम् V1 खगे- 3 6 T4 चामर (for °र) —(L 979) K N2 V3 न ध्वजमूर्जितम्, N2 B3 D3 3 खगेन्द्रध्वजमूर्जितम् (D3 °मूर्ध गम्, D4 3 °मूर्धितम्) (for °) D1 ध्वजलक्षणसंपूर्णम् Dn D3 5 T4 -संपूर्णम् (for -संपन्नम्) D3 वसन्ना° (for आसन्ना°) (for °) K3 4 आसीनार्कम्; K1 V1 D3 3 ज्वलन् V3 [उ]ज्ज्वलन् (for °लम्) —(L 980) N2 V3 D3 3 [अ]तिहर्न च, V1 D3 [अ]भियुक्तः D3 °युतं (for °भूत) —(L 981) K3 3 N2 3 B1 3 Dn D3 D5 3 T4 G2 राजेन्द्र, K3 D1 °न्द्रो (for °न्द्र) —(L. 983) V1 समागन्तु (for मया गन्तु) V3 [illegible] D31 D3 T4 -पूर्वेण, D1 पूर्वेण, D1 -पूर्वं तु (for पूर्वं वि) K1 N2 युक्त पूर्वेण (N2 °र्वं वि) चिन्त्य वै, D3 युक्तरूप विचिन्त्य वै (for °) —(L 984) N2 B3 D31 D6 अवतीर्य, D1 °तीर्णोऽहं (by permetric) (for °तीर्णो) K1 छत्र स्यन्दनमेव च (for °) —(L 985) V3 छद्म (for छद्म) K2 गत्वेमां, B3 गत्वेयं (for गत्वेमां) N2 माथुरीं (for मथुरां) K4 गत्वैतो मथुरा पुरात्, B1 3 D3 D6 गत्वैव मथुरापुरीं (for °) — After line 985 D1 3 read line 992 repeating it in its proper place —(L 986) K3 V1 D3 तत्र, B3 Dn T4 G3 अनु- D3 तत्र (for अत्र) K4 अनुप्रकाश्य चात्मानं (for °) K3 नृपेन्द्रत्वं, N2 (marg) V1 3 B1 3 D3 D5 G3 देवेशो (V3 °न्द्र) वै, V3 °न्द्रत्वे (for °न्द्रत्वं) —(L 987) D3 तेन (for तम्) B1 3 D1-3 श्रोतुम् (for स्तोतुम्) D3 transp स्तोतुमिच्छामि and सर्वभावेन —(L. 989) K1 श्रोतुं (for स्तोतुं) K3 विना स्तवः K4 प्रव स्व (for प्रभवन्त) —(990) K1 स्तोत्रार्णव च संतुष्टः K2 अस्तुतश्चैव संतुष्टः K3 4 Dn D3 विना (K3 सदा) स्तोत्रेण संतुष्टः (for °) —(L 991) D1 3 कृष्णस्य (for तुष्टस्य) B3 सार्धं (for किं ते) K3 4 तुष्टस्य किं भवेत्स्तुत्या (for °) —(L 992) V3 सद्मनि (for वेश्मनि) —(L. 993) K1 3 [illegible] D3 (sup lin.) T4 न त्वया, K4 तत्त्वं हि; N2 3 V D3 D1 3 यस्त्वया; D3 यस्त्वया; D3 त्वमेव, D3 त्वामेव (for तस्य किं) D3 तत्त्वया च स्तुत राजन्; G3

अर्घोद्यतभुजं दृष्ट्वा स्थापयित्वा रथोत्तमम् ।
उवाच वदतां श्रेष्ठ उग्रसेनं नराधिपम् ॥
यन्मया चाभिषिक्तस्त्वं मथुरेशो भवत्विति ।
न युक्तमन्यथा कर्तुं मथुराधिपते स्वयम् ॥
अर्घमाचमनीयं च पाद्यं चास्मन्निवेदनम् ।
न दातुमर्हसे राजन्नेतन्मे मनसः प्रियम् ॥
तवाभिप्रायं विज्ञाय ब्रवीमि नृपते वचः ।
त्वमेव माथुरो राजा नान्यथा कर्तुमर्हसि ॥
स्थानं भागं च नृपते दास्यामि तव दक्षिणम् ।
यथा नृपाणां सर्वेषां तथा ते स्थापितोऽग्रतः ॥
शतसाहस्रिको भागो वस्त्राभरणवर्जितः ॥
आरुहस्व रथं शुभ्रं चामीकरविभूषितम् ।
चामरव्यजनं छत्रं ध्वजं च मनुजेश्वर ।
दिव्याभरणसंयुक्तं मुकुटं भास्करप्रभम् ॥
धारयस्व महाभाग पालयस्व पुरीमिमाम् ।
पुत्रपौत्रैः परिवृतो मथुरां प्रतिपालय ॥
जित्वारिगणसंघानि भोजवंशं विवर्धय ॥
देवदेवायनन्ताय सौरिणे वज्रपाणिना ।
प्रेषितं देवराजेन दिव्याभरणमम्बरम् ॥
माथुराणां च सर्वेषां भागा दीनारिका दश ।
सूतमागधवन्दीनामेकैकस्य सहस्रिकम् ।
वृद्धस्त्रीजनसंघानां गणिकानां शतं शतम् ॥
नृपेण सह तिष्ठन्ति विकद्रुप्रमुखाश्च ये ।
दशसाहस्रिको भागस्तेषां धात्रा प्रकल्पितः ॥
एवं संपूज्य राजेन्द्रं माथुराणां चमूमुखे ।
कृत्वा सुमहदानन्दं मथुरां मधुसूदनः ॥

---

यस्त्वया स्तुन पूनामी ( for ° ) — ( L 994 ) D5 सत्सुप मानी, T1 नु भापमाणौ, G3 समुव° ( for माथुव° ) — ( L 995 ) D6 अर्घ्योद्दिन ( for अर्घोद्यत ) — ( L 996 ) D5 श्रेष्ठम् ( for श्रेष्ठ ) — ( L 997 ) N2 यन्मयास्य, Ñ3 V3 B1 3 D5 D3 6 G3 यन्मया हि, D1 यत्तन्मया, D5 यस्त्व मया ( for यन्मया च ) D1 [अ]पि उक्तम् ( for [अ]भिषिक्तस् ) V3 यन्मया भाषित पूर्वं ( for ° ) K3 V3 भविष्यसि, Ñ2 भवेदिति, D1 3 भवानिति ( for भवत्विति ) — ( L 998 ) G3 मथुराधिपतेः स्वयम् ( for ° ) — ( L 999 ) V2 B1 2 D5 T3 अर्घमाचमनं चैव ( for ° ) K1 2 D1 2 3 [अ]र्मी नि, K4 [अ]स्मिनि ( for [अ]स्मन्नि ) Ñ2 3 V2 3 B D5 D1 6 T1 G2 पाद्य चाथ ( N2 तथ, V1 3 याथ, B2 T3 चाथे, D1 मसी ) निवेदितम्, V2 पाद्य चाभिनिवेदितम्, D1-2 पाद्य चार्सी निवेशनम् ( for ° ) — ( L 1000 ) D1 3 अर्हसि ( for °से ) K1 2 N2 3 V B D5 D1 3 4 6 T1 G2 नृप मे मनसः प्रिय ( for ° ) — ( L 1001 ) K3 आज्ञाय, T1 आलोक्य ( for विज्ञाय ) K1 मत्वाभिप्रायमाज्ञाय ( for ° ) G3 तव ( for वच ) — ( L 1003 ) D3 यथा ( for स्थान ) — ( L 1004 ) D5 यत ( for अग्र ) — ( L 1005 ) D3 6 T3 साहस्रको ( for °स्रिको ) Ñ3 V3 सवृत, V1 D2 ( marg ) भूषित ( for वर्जित ) — ( L 1006 ) V1 आहरस्व, V2 G2 आरोहस्व, V3 आरूरोह ( for आरुहस्व ) B1 2 D5 शीघ्र, B3 G2 दिव्य ( for शुभ्र ) — ( L 1007 ) V1 B मथुरेश्वर ( for मनुजे° ) — ( L 1009 ) D5 पालयस्व ( for °यस्व ) — ( L 1010 ) K2 ( sup lin ) 3 3 Ñ3 ( marg as above ) V2 B2 Dn D1-4 T3 प्रमुदितो, D1 प्रमुदितो ( for परिवृतो ) पुत्रपौत्रैः प्रमुदितो ( for ° ) K4 Ñ2 3 V1 3 B2 3 D5 D6 T1 G2 परि ( for प्रति ) — ( L 1011 ) D1 जन ( for गण ) K3 V2 D2 सवाश्च, K4 राज्यानि, Ñ2 सस्यास्त्व, Ñ3 ( marg ) V1 3 D5 D1 6 समास्तव, T1 सर्वाश्च ( for संघानि ) Ñ2 जितारिगणसंघस्त्व, D5 जित्या स्वरातिसंघाश्च G3 जित्वारिगणमार्गौ त्व ( for ° ), K1-3 N2 V1 3 B1 2 Dn D5 D1-4 6 T1 प्र ( for वि° ), Ñ3 भोजवंशविवर्धन ( for ° ) — T1 om lines 1012–1013 — ( L 1012 ) K2 देवदेवेन यत्पूर्व, K3 देवाय देवानन्ताय, D3 देवाय या अन° ( for ° ) K1 D1 शूरिणे वज्रपाणिने ( for ° ) — ( L 1013 ) Ñ3 दिव्यास्तरणम् ( for °भरणम् ) — ( L 1014 ) K4 Ñ3 ( marg as above ) V3 B2 D2 दीनारका ( for °रिका ) — ( L 1015 ) K4 Ñ2 D5 6 G2 सहस्रकम्, D2 °स्रिक ( for °स्रिकम् ) — ( L 1016 ) D22 जन ( for वृद्ध ) — ( L 1018 ) K3 4 D1 3 धात्र ( for धात्रा ) K3 तेषां चात्र प्रकल्पितम् ( for ° ). — For line 1018, G3 subst

30[**] दशसाहस्रिको भाग तेषां धाता प्रकल्पयत् ॥

— Before line 1019, all Mss ins वैशंपायन — ( L 1019 ) B1 2 D1 6 T3 राजान ( for राजेन्द्र ) K3 4 माथुराणां ( for °राणां ) B D5 D5 G3 चमूत्तमे ( for चमूमुखे ) Ñ3 3 V1 3 मथुराणां ( V3 °णा ) चमूत्तमे, D3 मथुरायां च सत्तमौ ( for ° ) — ( L 1020 ) T1 आख्यान ( for आनन्द ) K2 कृत्वा च सुमहानन्दं, D3 कृत्वा तु सुमहानन्द ( for ° ). D2 माथुरो, D5 माथुरान् ( for मथुरां ) — ( L 1021 ) Ñ2 ( marg ) V1 त्रिभुवने ( for विटपनौ ) — ( L 1022 ) Ñ3 G3 देवैरिव, D देवैरपि, D3 देवेशेव ( for देवा इव ). K2 4 यथा स्वर्गत्रिविष्टपे, V1 3 B2 3 D5 D5 6 देवैरिव त्रिविष्टपे ( for ° ).

दिव्याभरणमाल्यैश्च दिव्याम्बरविलेपनैः ।
दीप्यमानः समन्ताच्च देवा इव त्रिविष्टपम् ॥
भेरीपटहनादेन शङ्खदुंदुभिनिस्वनैः ।
बृंहितेन च नागानां हयानां हेषितेन च ॥
सिंहनादेन शूराणां रथनेमिस्वनेन च ।
तुमुलः सुमहानासीन्नादो मेघरवोपमः ॥
बन्दिभिः स्तूयमानं च नमश्चक्रुरपि प्रजाः ।
दृष्ट्वा दानमनन्तोऽपि न ययौ विस्मयं हरिः ॥
स्वभावोन्नतभावत्वाद्दृष्टपूर्वस्ततोऽधिकम् ।
अनहंकारभावाच्च विस्मयं न जगाम ह ॥
दीप्यमानं स्ववपुषा आयान्तं भास्करप्रभम् ।
दृष्ट्वा मथुरवासिन्यो नमश्चक्रुः पदे पदे ॥
एष नारायणः श्रीमान्क्षीरार्णवनिकेतनः ।
नागपर्यङ्कमुत्सृज्य गतोऽयं मथुरां पुरीम् ॥
बध्वा बलिं महावीर्यं दुर्जयं त्रिदशैरपि ।
शक्राय प्रददौ राज्यं त्रैलोक्यं वज्रपाणये ॥
हत्वा दैत्यगणान्सर्वान्कंसं च बलिनां वरम् ।
भोजराजाय मथुरां दत्त्वा केशिनिषूदनः ॥
नाभिषिक्तः स्वयं राज्ये नोपविष्टो नृपासनम् ।
राजेन्द्रत्वमभीप्सन्वै मथुरामाविशत्ततः ॥
एवमन्योन्यसंजल्पं श्रुत्वा पुरनिवासिनाम् ।
सूतमागधबन्दिभ्य इदमूचुर्गुणा गिरः ॥
किं वा शक्ष्यामहे वक्तुं गुणानां ते गुणोदधे ।
मानुषेणैकजिह्वेन प्रभावोत्साहसंभवान् ॥
सहस्रभोगी नागेन्द्रः कदाचिद्दिव्यबुद्धिमान् ।
द्विसहस्रेण जिह्वानां वासुकिः प्रथयिष्यति ॥

— Ñ3 V1 transp line 1024 and line 1035 — (L 1024) G3 अश्वानां (for हयानां) — (L 1025) V3 B2 D6 नादैश्च (for नादेन) D5 G3 सिंहनादैश्च वीराणां (for °) G(ed) om lines 1026 1028 — (L 1026) D1 तु (for सु-) K1 2 4 Ñ2 3 V B D2 D T2 G3 महानेव, K3 महाघन (for नादो मेघ) Poona ed मेघनाद इवाम्बरे (for °) — (L 1027) K2 D3 स्तूयमानाय, Ñ3 V2 D3 °मानोऽपि, G1 °मानश्च (for °मानं च) — (L 1028) K3 4 Ñ2 3 V1 B1 3 Dn D3 4 5 T2 G2 अनन्त च (for °न्तोऽपि) V1 विस्मयं न ययौ हरि, B1 3 D2 D6 न विस्मयगतो हरि (for °) — (L 1029) D3 भावाच्च (for भावत्वाद्) V2 B1 3 D5 D3 5 दृष्टपूर्वस्, D1 °पूर्वं, D3 दृष्ट्वा पूर्वं (for दृष्टपूर्वत्) — (L 1030) T1 भावस्य (for भावाच्च) Ñ3 V1 B1 3 D2 D6 न विस्मयगतो हरि (for °) — (L 1031) K3 D32 च (for स्व-) D5 श्रिया स (for आयान्त) K2 D1 2 भास्करो-पमम् (for °प्रभम्) — (L 1032) V1 D1 4 माथुर (for म°) — (L 1033) Ñ3 (marg as above) B3 निवासिन (for निकेतन) D1 3 क्षीरोदार्णवकेतन (for °) — (L 1034) K3 4 Dn जगाम, V3 गत्वेमां, D1 गतो वै, T1 हा-गतो, Bom Poona eds प्राप्तोऽय (for गतोऽय) D3 मथुरां कृष्ण आगत, D3 मथुरामागमत्पुरीम् (for °) — K3 om lines 1035–1038 — (L 1035) V3 महावीर्यो (for °र्यं) — (L 1036) D1 च शक्राय (for शक्राय प्र) D3 त्रिदिवे (for त्रैलोक्य) — (L 1037) G3 संख्ये (for सर्वान्) — (L 1038) V1 वसुधां, G3 बलवान् (for मथुरां) — (L 1039) K1-3 B3 Dn D1 चासीनो, K1. 3 राजा (for राज्ये) K1-3 B3 Dn D1 चासीनो, T1 [उ]पासीनो (for [उ]पविष्टो) Ñ2 3 V1. 2 B3 D3. 4 G3 नृपासने (for °नम्) K3 V2 D3 4 5 न चासीनो नृपासने; D3 नोपसृष्टो नृपासन (for °) — (L 1040) K1 2 अभी-प्सन्त, D1 2 (marg as above) °त्स्यतो, D1 च समाप्य; G1 अवाप्स्यामी (for अभीप्सन्वै) D3 (marg as above) स्वयम्, G2 शुभाम् (for तत) K3 मथुरां नाविशासनात, K3 4 Dn °रातो विवेशितम्; Ñ3 V2 3 माथुरानभियात्वयद्; Ñ2 V2 B D3 D2 (marg) 3 6 मथुरामभिषा( V 2 °च पा) स्यत, D2 (marg) 4 °रामपि पाळयत्, D4 °रां न विशास्यम् (for °) — (L 1041) D3 मधुर (for पुरनि) G3-वासिन (for °नाम्) — (L 1042) K3 4 Dn वन्दीनां, V3 B3 T2 °नाम् (for °भ्य) Ñ3 3 V1 2 D3 D3 4 G1 वन्दिमागधसूता-नाम् (D3 °तांश्च) (for °) K1 2 D1 3 गणा यत, K3 4 D3 गुणाधिका, Ñ3 गणाधिपा, D31 G3 गुणा गिर, D3 गुणाय तम् (for गणा गिर) D3 इत्यमूचुर्गणाधिपा (for °) — (L 1043) K1 शक्ष्यावहे, Ñ3 3 (marg) V 3 3 B D3 D1 4 5 G3 शक्ष्यामहे; K3 शिक्ष्यामहे (for शक्ष्या°) K3 गुणांस्तव D3 गुणांस्ते वै (for गुणानां ते) K1 3 V 3 महोदधे, D3 D3 गुणोदधे, T3 महार्थे (for गुणोदधे) — (L 1044) K3 -वक्त्रेण (for जिह्वेन) K3 मानुषो यो द्विजिह्वस्तु for °) K3 Dn1 Ds2 G2 संभवात् (for °वान्) — (L 1045) B(m) Poona eds 1(ed.) स तत्र (for सहस्र) Ñ3 V1 भोगो, G3 शीर्षो (for भोगी) K1 राजेन्द्र (for नागेन्द्र°) K1 2 Ñ3 V B D3 D5 G3 बुद्धिना (for °मान्) — (L 1046) K1 3 V3 B3 4 D6 G3 जिह्वेन (for जिह्वानां); K3 जिह्वासहस्रद्वयेनैव (hypermetric); K1 सहस्रद्वयजिह्वेन; Ñ3 V1 3 B1 Dn D3 D4 5 द्विसाहस्रेण जिह्वेन (for °) K V3 Dn D1-4 G3 कथयिष्यति (for प्र°) — (L 1047) K1 2 om तु D3 [अ]द्भुतवर्म (for °विदे) — (L 1049) K1 2 भाषणे (for °सं) D3 गुणग्राहाणां स्वयम् (for

कि त्वद्भुतमिदं लोके मानवेन्द्रेषु भूतले ।
न भूतं न भविष्यं च शक्रादासनमागतम् ॥
सभावतरणं चैव फलदैरागतं स्वयम् ।
न श्रुतं न च दृष्टं वा तेन मन्यामहेऽद्भुतम् ॥
धन्या देवी महाभागा देवकी योषितां वरा ।
भवन्तं त्रिदशश्रेष्ठं धृत्वा गर्भेण केशवम् ॥
इति संजल्पमानानां शृण्वन्तौ पृथगीरितम् ।
उग्रसेनं पुरस्कृत्य भ्रातरौ रामकेशवौ ॥
प्राकारद्वारि संप्राप्तावर्त्तयामास वै तदा ।
अर्घमाचमनं दत्त्वा पाद्यं पाद्येति चाब्रवीत् ॥
उग्रसेनस्ततो धीमान्केशवस्य रथाग्रतः ।
प्रणम्य शिरसा कृष्णं रथमारुह्य वीर्यवान् ॥
धनेन तोयधारेण वर्षयं करकाम्बुभिः ।
धनौघैर्वर्षमाणस्तु संप्राप्तः पितृवेश्मनि ॥
मथुराधिपतिः श्रीमानुवाच मधुसूदनम् ।
राजेन्द्रत्वमनुप्राप्य न युक्तं पितृवेश्मनि ।
स्थापितं देवराजेन दत्तं सिंहासनं प्रभो ॥
नेष्यामि मथुरेशस्य सभे भुजबलार्जिते ।
प्रसादयिष्ये भगवन्न कोपं कर्तुमर्हसि ॥
देवकी वसुदेवश्च रोहिणी च विशां पते ।
न किंचित्करणे शक्ता हर्षक्रमविमोहिताः ॥
कंसमाता ततो राजन्नर्घमादाय केशवम् ।
नानादिग्देशजानीतं कंसेनोपार्जितं धनम् ।
देशकालं समालोक्य पादयुग्मे न्यवेदयत् ॥
उग्रसेनं समाहूय उवाच श्लक्ष्णया गिरा ।

कृष्ण उवाच ।

न चाहं मथुराकाङ्क्षी न मया विनकाङ्क्षया ।
घातितौ तव पुत्रौ वौ कालेन निधनं गतौ ॥

---

ᵇ) — (L 1050) K1 ते (for वा) D4 नैव श्रुतं न दृष्टं वा (for ᵃ) V3 वयम् (for ऽद्भुतम्) — (L 1052) T3 श्रेष्ठ (for श्रेष्ठं) G3 सुत त्रिभुवनश्रेष्ठ (for ᵃ) K3 धृतं (for धृत्वा) K4 गर्भेण धृतवत्यपि (for ᵇ) — After line 1052, D4 Bom Poona eds G(ed) ins

31** कृष्ण पद्मपलाशाक्ष श्रीपुण्यममराचितम् ।
नेत्राभ्यां स्नेहपूर्णाभ्यां वीक्षते मुखपङ्कजम् ॥

[(L 1) D2 कृष्ण कमलपत्राक्ष (for ᵃ) D4 -मुखम् (for ॰ङ्कजम्) Bom Poona eds G(ed) सदा (for नेत्र) ]
— (L 1053) D1 एव (for इति) G3 [इ]त्र (for स) K1 2 D1 शृणुत, K3 शृण्वान (for शृण्वन्तौ) K4 शृण्वान पृथिवीरितम्, D4 शृण्वन्तौ पृथिवीरितम्, G3 ॰न्तौ प्रियमीश्वरम् (for ᵇ) — (L 1054) K4 Dn G(ed) उग्रसेन (for ॰नं) K1 रामकेशवभ्रातरौ (for ᵇ) — (L 1055) Ñ2 V2 B Ds2 D5-4 6 T3 G3 द्वार (for द्वारि) K3 समाप्य, D2 2 ॰सम् (for ॰साव्) — (L 1056) ■ D5 D1 आचमनीं (for ॰नं) Ñ2 2 (marg) V1 अर्घ्यं (Ñ2 ॰र्घं) आचमनीयं च (for ᵃ) K1 2 पाद्येन (for ॰ति) D3 [अ]सकृत् (for [अ]ब्रवीत्) — (L 1057) K4 तदाग्रत , D3 [अ]ग्रतस्तथा (for रथाग्रतः) — (L 1058) K4 त्रिरुग्रु (for कृष्णं) K1 B1 Dn3 D1-6 T4 गजम्, K2-4 V2 जगाम (for रथम्) — (L 1059) K3 4 V2 Dn D3 G2 घनवत् (for धनेन) D3 घनेन धारातोयेन (for ᵃ) — (L 1060) D1 वर्षमाणैस्तु (for ॰णस्) D3 धारौघैर्वर्षमाणे तु (for ᵃ) — After line 1060, V3 reads line 1063 repeating it in its proper place K3 D3 om (hapl) lines 1061–1063 — (L 1061) Dn पति (for पते) K3 B3 Dn उवाच मधुसूदन (for ᵇ) — (L 1062) K1 स राजेन्द्रम् (for राजेन्द्रत्वम्) Ñ2 B1 युक्तं न (by transp), G2 युक्त ते D3 नृप (for पितृ) K3 4 Dn D1 2 (before corr) युक्तं मे नृपवेश्मनि (for ᵇ) — (L 1063) B2 Dn Ds1 स्थापितु (for ॰तं) — (L 1064) K3 नेष्यामि (for नेष्यामि) V2 3 सभे ते, D3 सुखे, D1 T4 सभा (for सभे) K1 बलार्जित, D1 ॰ताम् (for ॰ते) K3 सभुभूतबलार्जिताम्, K3 4 Dn D2 G2 सभां भुजबलार्जिताम्, B3 सत्रे बलभुजार्चिताम् (for ᵇ) — (L 1065) K1 अकस्या त्वा, K3 अक्तावा (for भगवन्) D1 2 कार्यं (for कोपं) — (L 1067) V B D3 D6 G3 विक्रम, D2 नृपवि, D3 कर्मवि (for क्रमवि) Ñ2 3 हर्षविक्रवकोपना (Ñ3 ॰मोहिता) (for ᵇ) — V3 om line 1068 — (L 1068) Ñ2 3 V1 2 ■ D5 D1 3 6 T4 G3 अर्चयामास केशवम् (for ᵇ) — (L 1070) K1 समासाद्य (for ॰लोक्य) V3 पादपृष्ठे (for ॰युग्मे) Ñ3 B D3 D1 2 (before corr) T4 निवेदितम्, D1 न्यवेदयत्, D3 निवेद्य च (for न्यवेदयत्) V1 2 पादमूलनि (V2 ॰पद्मे नि) वेदितम् (for ᵇ) — (L 1071) K3 4 स आहूय (for समा॰) G3 कृष्णो वचनमब्रवीत् (for ᵇ) — G2 भगवान् (for कृष्ण) — (L 1072) Ñ3 चाहं (for मया) V1 B1 3 Da De G3 -काम्यया (for काङ्क्षया) V3 न चाहं वित्तकाम्यया (for ᵇ) — (L 1073) B1 द्वौ, D1 यौ (for तौ) K1 2 D1 घातितावात्र पुत्रा ये, K4 4 Dn T4 ॰तस्तव पुत्रोऽस्य (T4 ॰त्रस्तु) (for ᵃ) K2 2 D1 गता, K2 4 Dn गत (for गतौ) — G(ed) om line 1074 — (L

को नु नामेदृशं कर्म चोरवच्च समाचरेत् ।
सुप्तेषु निशि सर्वत्र यादवेषु महात्मसु ॥
चोरोऽयं सर्वथा राजा न हि राजा बलान्वितः ।
यदि शक्तो न कुर्याद्धि चौर्यमेतन्नृपाधमः ॥
अहोऽस्य बालता राज्ञश्चोरकार्ये प्रवर्ततः ।
सर्वथा गमनं तस्य न हि पश्यामि सांप्रतम् ॥
इत्युक्त्वा सात्यकिर्वीरः प्रजहास महास्वनम् ।
विस्फार्य सुदृढं चापं सदधे कार्मुके शरम् ॥
आकर्ण्य वचनं वीरः सात्यकेस्तस्य धीमतः ।
वासुदेवो महावीर्यः पौण्ड्रको नृपसत्तमः ॥
आदाय निशितं बाणमागत्य पुरतो यदोः ।
बभाषे वासुदेवस्तु हसन्बहुविधं नृपः ॥
सात्यके शृणु मे वाक्यं यदि योद्धुं व्यवस्थितः ।
क्व नु कृष्णः क्व गोपालः पुनः स इह वर्तते ॥
स्त्रीहन्ता पशुहन्ता च क्व च स्वामीति शब्द्यते ।
स इदानीं क्व वर्तेत गृहीत्वा मम नाम सत् ।
हन्ता सख्युर्महावीर्यो नरकस्य महात्मनः ॥
ममैव नाम तद्ब्रूयाद्धते तस्मिन्दुरात्मनि ।

गच्छ त्वं कामतो वीर योद्धुं न क्षमते भवान् ॥
अथ वा तिष्ठ किंचित्तु ततो द्रक्ष्यसि मे बलम् ।
शिरस्ते पातयिष्यामि शरैर्घोरैर्दुरासदैः ॥
हतस्य तव वीरस्य भूमिः पास्यति शोणितम् ।
श्रोष्यते स तथा गोपो हतः सात्यकिरित्यपि ॥
यो गर्वस्तस्य गोपस्य सर्वदा वर्तते महान् ।
विनङ्क्ष्यति स तु क्षिप्रं हते त्वयि यदूत्तम ॥
त्वयि रक्षां समादिश्य गोपः कैलासपर्वतम् ।
गत इत्येवमस्माभिः श्रुतं पूर्वं महामते ॥
शरं गृहाण निशितं यदि शक्नोषि मत्पुरः ।
इत्युक्त्वा चापमादाय योद्धुं व्यवसितः किल ॥

*Colophon*

वैशंपायन उवाच ।
ततः क्रुद्धो महाराज सात्यकिर्वृष्णिपुंगवः ।
उवाच वचनं राजन्वासुदेवं स्मयन्निव ॥
मा वोच ईदृशं वाक्यं वासुदेवं नृपाधम ।
को नाम जगतां नाथमित्थं ब्रूयाज्जिजीविषुः ॥
मृत्युस्त्वां सर्वथा याति वदन्तं तादृशं वच ।

---

[ल]स्य Ms ₄ [ल]स्य (for [ल]ह) — (L 1620) Dn Ds₃ बलि, T₃ G₁ तव ; G₃ बहु (for बल) — (L. 1631) D₆ समारभेत् (for °चरेत्) — (L 1624) Dn Ds₂ T₁ G₆ Ms ₄ एव (for एतत्) M₃ नृपोत्तम (for नृपाधम) — (L. 1625) G₃ बलिनो (for बालता) — (L 1627) Dn Ds₃ T₄ M₃ [इ]त्युक्त्वा (for [इ]त्युक्तै) D₆ वीरै, T₄ वीरं (for वीर) Dn Ds₃ G₆ ₂ M₃ महाबल (for °स्वनम्) — (L. 1628) T₃ कार्मुकी, T₃ G₆ °क (for °के) — (L 1629) D₆ T₁ G₆ M₃ ₂ वीर (for वीर) — Dn Ds₃ G₆ om lines 1630 1633 — (L. 1630) M₄ राजसत्तम (for नृप°) — (L 1631) D₆ भाषया (for आदाय), T₃ आगत (for °त्य) — (L 1634) M₄ ₃ ऽत्रेह (for इह) Dn Ds₃ G₆ ₄ M₁ कुत सोऽय प्रवर्तते (for °) — (L. 1635) D₆ M₃₋₅ सर्वं, T₃ G₃ स्वत्र (for क्व च) Dn Ds₃ सेवित (for शब्दयते) — (L. 1636) T₃ नामकृत् (for नाम सत्) — (L 1648) Dn Ds₃ ममैव नाम युद्धेऽस्मिन् (for °) — (I 1639) G₃ क्षमसे (for क्षमते) — (L. 1641) G₃ शिरश्चोत्पातयिष्यामि (for °) T₁ ₂ G₁ ₃ महाबलैः (for दुरासदैः) — (L 1642) Dn Ds₃ वीरेह (for वीरस्य) — (L. 1643) D₆ स्मात् (for स) — (L. 1644) T₁ ₂ G₃ सर्वदा श्लाघते भवान् (for °) — (L. 1645) Dn₁ G₁ ₃ विनश्यति, Dn₂ Ds₃ °श्यतु (for °ङ्क्ष्यति) M₁ ₃ ₄ दुरात्मनि (for यदूत्तम) — (L. 1646) G₁ समावेश्य (for °दिश्य) D₆ T₁ G₃ ₂ गत, M₁ ₂ पुर्या (for गोप) — (L 1648) D₆ शक्तोऽसि (for शक्नोषि) Dn Ds₃ यदि शक्तोऽसि सात्वके (for °) — (L. 1649) Dn Ds₃ D₆ वधं (D₆ पौण्ड्रो) योद्धुं व्यवस्थित (for °)

Colophon — *Mention of the Epic* Ds₃ — *Mention of Khila* Dn Ds₃ D₆ T₁ ₂ ₄ G M — *Adhy name* Ds₃ M पौण्ड्रकवध — *Adhy no* Dn 279, T₁ G₃ 206, T₃ G₁ 203, T₄ 175, G₃ 201, G₄ 205, G₆ 207, M₁ ₂ 171

G₄ om the ref — (L 1650) G₃ नन्दन (for पुंगव) — (L 1651) Dn Ds₃ T₃ G₃ M₄ स्मरन् (for स्मयन्) — (L 1652) Dn Ds₃ अब्रोवद् G₃ M₁ ₂ ₄ मा वोचे (for मा वोच) M₄ यादृशं (for ईदृशं) D₆ T₁ ₄ G₃ ₄ M₁ ₂ वासुदेव (for °देवं) Dn Ds₃ नृपाधमम्, (for °धम) T₁ G₁ वासुदेवस्य मा त्व (for °) — (L. 1653) D₆ जगतो (for जगतां) — (L. 1154) G₄ M₆ मृत्युस्ते (for °स्त्वां)

जिह्वा ते शतधा दीर्यादृदतस्त्वादृशं वचः ॥
एष ते पातयिष्यामि शिरः कायाच्च पौण्ड्रक ।
यन्नाम वासुदेवेति तव सम्प्रति वर्तते ॥
यावत्पतति कायात्तु शिरस्तावत्तु वर्तताम् ।
स एव श्वो हि भगवान्वासुदेवो भविष्यति ॥
एक एव जगन्नाथः कर्ता सर्वस्य सर्वगः ।
दुरात्मन्सर्वथा देवो भविष्यति न संशयः ॥
एष ते त्वच्छिरः कायात्पातयिष्यामि राजक ।
यदसौ भगवान्विष्णुर्नामगमिष्यति सांप्रतम् ॥
अलं वीर्यं बलं चैव सर्वं दर्शय साम्प्रतम् ।
नातः परं बलं राजन्वीर्यं तव च वर्तते ॥
सर्वं दर्शय यत्नेन स्थितोऽस्मि व्यवसायवान् ।
शरी चापी गदी चक्री सर्वथाहमुपस्थितः ॥
नेतो नगरमायासि सत्येनैतद्ब्रवीम्यहम् ।
सर्वथा कृतकृत्योऽस्मि दृष्ट्वा त्वां वासुदेवक ।
तवाद्य निलयः कृत्वा श्वभ्यो दास्यामि राजक ॥
इत्युक्त्वा बाणमादाय वासुदेवं महाबलम् ।
आकर्णपूर्णमाकृष्य विव्याध निशितं शरम् ॥
स तेन विद्धो यदुना वासुदेवः प्रतापवान् ।
वमञ्छोणितमत्युष्णमङ्गात्रेजाग्निपोनम ॥
ततश्चुक्रोध स नृपो वासुदेवः प्रतापवान् ।
नवभिर्दशभिश्चैव शरैः सन्नतपर्वभिः ।
विव्याध सात्यकिं राजा नदश्च बहुधा रिपुः ॥
ततो नाराचमादाय निशितं यमसंनिभम् ।
धनुराकृष्य बलवान्वासुदेवो नृपोत्तमः ।
विव्याध सात्यकिं भूयो निर्दि प्रह्लादयन्स्वकान् ॥
नाराचेन समाविद्धः सात्यकिः सत्यसंगरः ।
ललाटे सुदृढं वीरो वृष्णीनामग्रणीस्तदा ।
निषसाद रथोपस्थे निश्चेष्ट इव सत्तम ॥
ततः स पौण्ड्रको राजा विद्ध्वा दशभिराशुगैः ।
सारथिं पञ्चविंशत्या हयांश्च चतुरो दृढम् ॥
ते हया रुधिराक्ताङ्गाः सारथिश्च समन्ततः ।
विह्वलाः समपद्यन्त वासुदेवस्य पश्यतः ।
वासुदेवो रथी चापी सिंहनादं समादधे ॥
तेन नादेन तत्राभूद्विबुद्धः सात्यकिस्तदा ।
विद्धान्हयांस्तथा दृष्ट्वा सारथिं च तथागतम् ॥
शैनेयोऽथ महावीर्यो रुषितो नृपसत्तम ।
अरे द्रक्ष्यामि ते वीर्यमित्युक्त्वा बाणमाददे ।

—T₁ G₁ ₂ ₄ M₂ ₃ om (hapl) line 1655 —(L. 1655) D₆ G₃ ₅ M₃ ₄ द्दीर्यें (for दीर्याद्) —(L. 1657) G₆ तव सपरिवर्तते (for ²) —(L. 1658) T₂ काय (for कायात्) Dn Ds₂ T₄ G₁ ₂ ते (for तु) Dn Ds₁ G₂ प्रवर्तते, G₄ प्रवर्तताम् M₁ तु वर्तते (for तु वर्तताम्) —(L. 1659) Dn Ds₁ न, D₆ G₃ ₅ ऽपि (for हि) Dn₁ T₄ G₁ ₄ ₅ M₄ भविष्यसि (for °ति) —(L. 1662) Dn Ds T₄ ऽह (for स्त्व) —(L. 1663) Dn₁ Ds₂ T₂ ₄ M₂ यद् (for यदि) —D₆ om line 1664 —(L. 1664) Dn₁ Ds₂ G₁ ₃ M₁ कस्य, Dn₂ कृत, T₁ कस्य (for कस्य) G₂ मम प्रदर्शय साम्प्रतम् (for ²) —(L. 1665) Dn Ds₂ G₁ परतर (पर बल) —(L. 1667) D₆ खड्गी (for शरी) G₃ रथी (for गदी) D₅ T₄ शूली, G₂ M धन्वी (for चक्री) —(L. 1668) Dn Ds₂ नैनत् (for नेतो) Dn Ds₂ T₁ ₂ G₃ ₅ M₂ यास्यामि (for °सि) M₃ न हि ते नगरं यासि (for ¹) Ds₂ T₂ G₂ ₃ सत्यम् (for सत्येन) D₆ T₁ ₂ ₄ G₁ M शपामि (for ब्रवीमि) G₁ तेनैव तत्करोम्यहम् (for ²) —(L. 1671) Dn Ds₂ G₂₋₄ M₄ महाबल —(L. 1672) D₆ G₂ विव्याध निशितैः शरैः (for ²) —T₄ G₁ ₅ om (hapl) lines 1674-1675 —(L. 1674) D₅ T₁ ₂ G₂ मत्युग्रम् (for °ष्णम्) D₅ T₁ ₂ G₁ M₂ ₃ सुदारुम् (for अङ्गान्) —(L. 1675) Dn Ds₂ G₁ नृपश्रेष्ठ, T₂ स नृपो (for स नृपो) —(L. 1677) T₁ ₂ ₄ G M₁₋₃ बहुश (for °धा) —(L. 1679) Dn Ds₂ D₆ G₁ ₂ भगवान् (for बलवान्) Dn T₁ ₄ नृपोत्तम, Ds₂ °त्तमम् (for °त्तम) —(L. 1680) M₄ वीरो (for भूयो). —(L. 1683) Ds₂ T₁ ₄ G₁ ₄ ₅ M₁ ₄ सत्तम° —After line 1683, G₂ ins

17** ततस्तत्पर्वतैव सतमोह प्रतापवान् ।
संक्रुद्ध शिनिवीरोऽसौ प्रहसन्निदमब्रवीत् ।
पातयिष्यामि ते वीर्यमित्युक्त्वा बाणमाददे ॥

—G₂ om lines 1684-1692 —(L. 1685) Dn₁ नृप; Dn₂ Ds₂ नृप (for दृढम्) —(L. 1686) D₆ तदा (for हया) D₅ T₁ ₂ M मम तदा (for समन्ततः) —(L. 1688) Dn Ds₂ G₁ ₄ रथे (for रथी) T₁ G₁ ₃ ₄ समादधे; T₂ °दधत् (for °दधे) —(L. 1689) D₆ प्रबुद्ध; T₂ G₃ विबुद्ध (for विबुद्ध) Dn Ds₂ नृप, D₅ रिपु (for तदा)

विव्याध तेन बाणेन वक्षस्येनं महाबलम् ॥
ततश्चचाल तेनाजौ वासुदेवः शरेण ह ।
सुस्रुवे रुधिरं घोरमत्युष्णं वक्षसो नृप ॥
रथोपस्थे पपाताशु निःश्वसन्वहुशो नृप ।
कृत्यं चापि न जानाति केवलं निषसाद ह ॥
सात्यकिस्तु रथं विध्वा दशभिः सायकैस्तदा ।
ध्वजं चिच्छेद भल्लेन वासुदेवस्य वृष्णिपः ।
हयांश्च चतुरो हत्वा बाणैः सारथिमेव च ॥
युयुधानोऽथ राजेन्द्र भल्लेन निशितेन ह ।
सारथेश्च शिरः कायादहरत्सात्यकिस्तदा ।
रथमन्थिं च चिच्छेद हयाश्च व्यसवोऽभवन् ।
अश्वांश्च चतुरो हत्वा चतुर्भिः पत्रिभिस्तदा ।
चक्रं च तिलशः कृत्वा बाणैर्दशभिरञ्जसा ।
जहास विपुलं राजन्वासुदेवो महाबलः ॥
सात्यकिश्च तदा राजन्रथादाप्लुत्य सत्वरम् ।
धनुरादाय विपुलं तस्थौ भूमौ यदूत्तमः ॥
ततो भल्लेन तीक्ष्णेन ज्यां च चिच्छेद सत्वरम् ।
निमेषादिव वीरस्तु सात्यकिः सत्यविक्रमः ।
धनुश्चिच्छेद भल्लेन सर्वान्विस्मापयन्निव ॥
ततस्त्यक्त्वा महाचापमन्यद्घोर महामृधे ।
अन्यत्कार्मुकमादाय विव्याध निशितैः शरैः ॥
वासुदेवोऽपि निःश्वस्य धनुरादाय सत्वरम् ।
शरांश्च कतिचिद्राजन्गदां खड्गं च गत्वतः ।
यानद्बलं समादाय ततो भूमौ व्यतिष्ठत ॥
भूमिष्ठो वासुदेवस्तु सात्यकिं सत्यविक्रमम् ।
शरैरनेकसाहस्रैरर्दयामास सत्वरम् ॥
सात्यकेर्ध्वजवंशं तु चिच्छेद रणमूर्धनि ।
रथं जघान निशितैः शरैर्दशभिराशुगैः ॥
सात्यकिः क्रूरकर्माणमिन्द्रो वृत्रवधे यथा ॥
ततश्च युयुधानस्तु वासुदेवं नृपोत्तम ।
दशभिर्दशभिश्चैव पञ्चभिः पञ्चभिस्तथा ॥
षड्भिः षड्भिस्तथाष्टाभिर्निर्बिभेद रणमूर्धनि ।
यथा देवासुरे युद्धे बलिं बलिरिपुर्नृप ॥
स च चापं महाघोरं पौण्ड्रो यदुधुपस्य ।
मुष्टिदेशे द्विधा कृत्वा बाणैर्दशभिरञ्जसा ।
जहास विपुलं राजन्वासुदेवो महाबलः ॥
ततोऽपरं महच्चापं सात्यकिर्वृष्णिपुंगवः ।
सज्यं कृत्वा बली साक्षात्सर्वक्षत्रस्य पश्यतः ।
शरैः सप्ततिसाहस्रैरर्दयामास सत्वरम् ॥
ते शराः शलभाकारा निपेतुः सर्वतस्तदा ।

---

— (L 1691) T3 महावीरो (for °र्यौ). — (L 1692) Dn Ds2 बल (for अरे) — (L 1693) Dn1 Ds2 T4 G5 महाबल (for °बलम्) — (L 1695) T1 2 G M3 सुस्राव (for सुस्रुवे) Dn Ds2 T2 G1 3 5 M वक्षसा (for °सो) M नृप — (L 1696) Dn Ds2 नि श्वसन्तुरगो यथा (for ᵇ) — (L 1701) Dn Ds2 बाणैः सारथिमेव च, Bom Poona eds पौण्ड्रकस्य च पत्रिभिः (for ᵇ) — (L 1703) T2 स रथी, T2 G3 M1-3 सारथी (for सात्यकिस्) — (L 1703) D6 G2 4 5 M1 2 स; T2 G1 वि (for च) G3 हयाश्च विषमद्धली (for ᵇ) — Dn Ds2 D6 om line 1704 — (L 1704) G3 4 5 चतुर्भिश्चतुरस्तथा (for ᵇ) — (L 1705) M3 चक्रे (for चक्रं) Dn Ds2 om (hapl) lines 1705ᵇ–1727ᵃ — (L 1706) T2 M1 2 राजा (for राजन्) G2 4 M3 वासुदेव (for °वो) — (L 1707) D6 T2 4 G3 3 M3 सत्वर, G1 सर्वेत (for सत्वरम्) — (L 1708) T4 G5 भुवि (for भूमौ) — (L 1709) G1 3 M3 चिच्छेद स (for च चिच्छेद) — (L 1712) D6 T1 2 4 G महाघोर (for °चापम्) D6 T1 2 4 G1 3 4 5 महाचापे (for अन्यद्घोर) M1-3 महाहवे (for °मृधे) — (L 1713) D6 T2 M सत्वं (for अन्यत्) M3 दशभि (for निशितै) — G4 om (hapl) lines 1715–1718. — (L 1715) G3 सत्तम (for गत्वतः) — (L 1719) D6 M रथवर्श, G3 चित्रितं (for ध्वजवंश) — (L 1721) T2 G3 M2 सात्यकिं (for °किः) D6 D5 M2 4 सम्य (for क्रूर) — (L 1722) D6 T1 2 G1 3-5 M1 2 4 नृपोत्तमस् (for °त्तम) — (L 1723) M2 om line 1723ᵃ G4 घोरै (for चैव) T2 दशभिश्चैव नाराचै (for ᵃ) — D6 T1 2 4 M om. lines 1725ᵇ–1726ᵇ — (L 1727) Dn Ds2 सहसा (for अञ्जसा) — (L 1728) Bom Poona eds G(ed) वासुदेवं (for °वो) — (L 1729) Dn Ds2 पर (for ऽपरं) Dn Ds2 महत्पाथ, D6 T1 2 4 G3 4 M1-3 महाचाप (for महच्चाप) Dn Ds2 D6 T4 G2 3 M नन्दन (for पुंगव). — (L 1731) Dn Ds2 T2 4 सत्याकैर् (for साहस्रैर्)

शिरस्तः पार्श्वतश्चैव पृष्ठतः पुरतस्तथा ॥
आस्ये चैव महाराज ऊर्वोर्जघने तथा ।
व्यथां च ददुरत्यन्तं वासुदेवस्य मर्मगाः ॥
संभ्रान्तः पर्वताकारो निश्चलः समपद्यत ।
नैवालं धैर्यनिचयस्तूपार्तः शरवान्यथा ।
यथा मनस्वी रिक्तश्च तथा तिष्ठति पौण्ड्रकः ॥
ततश्चुक्रोध बलवान्वासुदेवः प्रतापवान् ।
अर्धचन्द्रं समादाय विव्याध युधि सात्यकिम् ।
विध्वा सप्तभिरायान्तं क्रोधेन प्रस्फुरन्निव ॥
विद्धोऽथ सात्यकिस्तेन शरैः पञ्चभिराशुगैः ।
चापं चिच्छेद पौण्ड्रस्य सिंहनादं व्यनीनदत् ॥
वासुदेवो गदां गृह्य भ्रामयित्वा पदास्पदम् ।
त्वरितं पातयामास सात्यकेर्वक्षसि प्रभो ॥
सव्येन तां समाकृष्य करेण यदुनन्दन ।
शरं प्रगृह्य विव्याध सात्यकिर्युधि पौण्ड्रकम् ॥
तदन्तरे गृहीत्वाशु वासुदेवः प्रतापवान् ।
शक्तिभिर्दशभिश्चैव सात्यकिं निजघान ह ॥
ताभिर्विद्धो रणे वीरः सात्यकिः सत्यसंगरः ।
अपास्य धनुरत्नं तद्गदामादाय सत्वरम् ।
आजघान तदा वीरो वृष्णीनामग्रणीर्नृप ॥

Colophon

वैशंपायन उवाच ।
ततः क्रुद्धो गदापाणिः सात्यकिर्वृष्णिनन्दनः ।
वासुदेवं जघानाशु गदया तीक्ष्णया नृप ।
सात्यकिं वासुदेवस्तु गदयाभ्यहनद्बली ॥
तावुद्यतगदौ वीरौ शुशुभाते तदा रणे ।
हस्तौ यथा वने सिंहौ परस्परवधैषिणौ ॥
ततः स सात्यकिः क्रुद्धः सव्यं मण्डलमागमत् ।
जघ्नतुस्तौ तदा युद्धे गदाभ्यां गदिनौ नृप ॥
स्तनयोः पार्श्वयोः पृष्ठे ताडितौ गदधारिणौ ।
उभौ तौ रुधिराक्ताङ्गौ पुष्पिताविव किंशुकौ ॥
सिंहनादं प्रचक्रतुस्तौ प्रावृषीव महाघनौ ।
स्थित्वा तिष्ठति भापन्तौ परस्परवधैषिणौ ॥
दक्षिणं वासुदेवस्तु तं जघान स्तनान्तरे ।
युयुधानोऽथ वीरस्तु बाह्वोर्मध्यमताडयत् ॥
दृढं स ताडितो वीरो जानुभ्यामपतद्भुवि ।
तत उत्थाय भूयस्तु ललाटेऽभ्यहनद्यदुम् ॥
विषण्णः किंचिदायस्तस्तत उत्थाय सत्वरम् ।

— D5 om lines 1732–1733 — (L 1733) D3 T2 M2 शिरस (for शिरस्त) M1 3 पार्श्वयोश्च (for °श्च) T1 2 G1 3–5 M पृष्ठत स्तनयोस्तत (for ᵇ) — Dn D3 D5 om lines 1734–1736 — (L 1737) G5 तृणार्त, M3 तृष्णार्तो (for तृपार्तः) D5 T2 G1 4 5 शरवाणै (for शर°) — (L 1738) T2 G2 3 4 सत्तश्च (for रिक्तश्च) — (L 1741) T1 2 G1 3–5 शरै (for इव) — (L 1742) G5 4 आयसै (for आशुगै) — (L 1745) D5 T1 G3–5 प्रेषयामास (for पात°) — (L 1747) G5 स तां (for शरं) — (L 1748) D5 T2 G3 अनन्तरेण (for तदन्तरे) — (L 1749) T1 2 G1 3 शरैश्च शक्तिभिश्चैव (for ᵃ) — (L 1750) G2 शूर (for वीर) G2 सात्यकिर्वृष्णिनन्दन, G5 °कि सत्यविक्रम (for ᵇ) — After line 1750 G2 ins

1800* वासुदेव जगन्नाथ न्यहनत्सत्यसंगर ।

— (L 1751) Dn D5 M5 धनुरत्यजत् (for °रत्नं) Dn D3 T4 G1 5 M4 धनुर् (for तद्गदाम्) — (L 1752) G1 तस्यो विद्धो (for तदा वीरो)

COLOPHON — Mention of the Khila D3 — Mention of Khila Dn D5 T1 2 4 G M1–4 — Adhy name Dn G1 M3 4 पौण्ड्रकवध, D5 T4 पौण्ड्रकयुद्धम् — Adhy no Dn 280, T1 G2 107, T2 G1 209, T4 170; G3 202; G4 206, G5 208, M2–4 172

(L 1753) G1 पुंगव (for नन्दन) — (L 1755) T2 व्यहनद्, G1 °यद्द° (for [अ]भ्य°) — (L 1756) G2 शूरौ (for वीरौ) Dn D3 सुदारुणौ (for तदा रणे) — (L 1758) D5 आगत, T4 आयहन् (for आगमत्) — (L 1759) M2 महायुद्धे, M3 गदायुद्धे (for तदा युद्धे) D5 तु तौ (for नृप) — D5 om line 1760 — (L 1760) T2 गदया रणे, M3 गदया रणे (for °धारिणौ) — (L 1761) D5 उभौ रुधिरसिक्ताङ्गौ (for ᵃ) — (L 1763) D5 M5 वाशन्तौ (for भापन्तौ) — (L 1766) G2 भृश (for दृढं) — (L 1767) Dn D3 वीरस् (for भूयस्) Dn D3 गदाम्, T1 दृढम् (for यदुम्) — (L 1768) D5 निर्विण्ण (for विषण्ण) D5 आश्वस्य, G2 आश्वस्तस् (for आयस्तस्) — (L 1769) T1 G3 विक्रमम् (for सत्वरम्) — (L 1770) T1 4 G1 4 बलिद् (for बली) — (L 1772) M1 3 तत स (for स

गदयाभ्यहनद्वीरः सात्यकिः पौण्ड्रसत्तमम् ॥
वासुदेवो बली वीरः साक्षान्मृत्युरिवापर. ।
जघान गदया वृष्णिं निर्दहन्निव चक्षुषा ।
स तया ताडितो वृष्णिर्गदया बाहुमुक्तया ।
आलम्ब्य भूमिं सहसा मृत्योरङ्कगतो यथा ॥
सञ्ज्ञां पुनः समालम्ब्य पाणिभ्यां दृढमेव च ।
गदां तस्य महाराज गृहीत्वा प्रसहेण ह ॥
द्विधा कृत्वा महागुर्वीं गदां कालायसीं शुभाम् ।
उत्सृज्य सहसा वीरः सिंहनादं व्यनीनदत् ॥
तत उत्प्लुत्य राजा तु वासुदेवो महानल. ।
सव्येन सात्यकिं गृह्य दक्षिणेन करेण ह ॥
मुष्टिं कृत्वा महाघोरां वासुदेवः प्रतापवान् ।
ताडयामास मध्ये तु स्तनयो. सात्यकिं नृप ॥
शैनेयो वृष्णिवीरस्तु गदामुत्सृज्य सत्वरम् ।
तलेनाभ्यहनद्वीरो वासुदेवं रणाजिरे ॥
तलेन वासुदेवोऽपि सात्यकिं सत्यसंगरम् ।
तयोरेव महाघोरं तल्युद्धमवर्तत ॥
जानुभ्यां मुष्टिभिश्चैव बाहुभ्यां शिरसा तथा ।
उरसोरः समाहत्य जानुभ्यां शिरसा तथा ।
कराभ्यां करमाहत्य तौ युद्धं समचरतां ॥

बाल्ययोस्तत्र राजेन्द्र वृषभयोः सन्निकृष्टयो. ।
वने यथाभिरस्तत्रत्थैवासीत्सुदारुणः ॥
तावाजौ प्रथितौ वीरावुभौ पौण्ड्रसात्यकी ।
निशि स्तिमितमूर्च्छाया शस्त्रं त्यक्त्वा महाबलौ ।
युयुधाते महारङ्गे मल्लौ द्वाविव विश्रुतौ ॥
उभे सेने महाराज संशयं जग्मतुस्तदा ।
किं नु स्यात्सात्यकिर्वीरो हतोऽनेन दुरात्मना ।
आहोस्विद्वासुदेवस्तु हतोऽनेन भविष्यति ॥
अथ चैतौ महावीरौ परस्परवधैषिणौ ।
हत्वा परस्परं वीरौ वीरस्वर्गं गमिष्यत. ।
अन्यथा नोपरम्येतां युद्धाद्वीरौ सुविश्रुतौ ॥
अहो वीर्यमहो धैर्यमेतयोर्बलशालिनो ।
एतौ महाभटौ लोके नैतौ प्राकृतसमतौ ॥
नैव युद्धं महाघोरमासीद्देवासुरेष्वपि ।
न श्रुतो न च वा दृष्टः समामोऽयं कदाचन ॥
एव ते सैनिका भूयु सेनयोरुभयोरपि ।
रात्रौ निशावने घोरे दृष्ट्वा युद्धं सुदारुणम् ॥
अथ तौ बाहुभिर्घोरैः सन्निपेततुरोजसा ।
दशभिर्मुष्टिभिर्जघ्ने सात्यकिः पौण्ड्रनन्दनम् ।
पञ्चभि. सात्यकिं पौण्ड्र. समाजघ्ने महानल ॥

तथा) — G3 om lines 1774 1778 —(L 1774) D5 T1 M3 4 समालम्ब्य (for °लम्ब्य) G4 स सञ्ज्ञां पुनरालम्ब्य (for °) —(L 1776) D5 कालमयीं (for कालायसीं) —(L 1777) D5 T1 उत्सृज्य तां गदां भग्नां (for °) D5 व्यनदद् दयत् (for व्यनीनदत्) —(L 1778) Dn Ds2 T1 2 G1 2 M1 3 4 उत्सृज्य (for उत्प्लुत्य) —(L 1782) T1 नृप (for वृष्णि) G3 सत्वर —(L 1785) Dn T2 4 G2 प्रवर्तत, Ds1 G1 °र्तते (for अवर्तत) —(L 1789) D6 बद्धयो (for वृषभयो) Dn Ds1 G2 M1 3 सन्निकर्षयो (for °कृष्टयो) —(L 1790) Dn1 Ds1 D6 T2 G3 M3 4 निरभ्यवत (for [अ]भिर°) G6 [अ]भूत् (for [आ]सीद्) D5 G2 सुदारुणम्; T3 °रुणौ, M3 महारण (for सुदारुण) Dn Ds2 M1 2 4 तथैवाभू महास्वन (M3 4 °रण) (for °) —(L 1791) M1 4 उभौ तौ पौण्ड्रसात्यकी (for °) —(L 1793) G3 महाबलम् (for °बलौ) —(1794) T3 उभसेन (for उभे सेने) Dn Ds1 G4 महाराजौ (for °राज) —(L 1795) Dn Ds2 हतस्तेन भविष्यति (for °) —(L 1796) T1 3 M3 4 महामना, G1 4 दृढात्मना, G2 2 M1 3 दुरात्मना (for भविष्यति) —(L 1797) Dn Ds1 अथ, D5 तदा, T3 G3 हतौ (for अथ) T3 वैतौ; G1 4 5 द्वौ तौ (for चैतौ) D5 G3 4 5 M3 महावीर्यौ (for °वीरौ) —(L 1798) T1 4 G1 3 5 परस्परं (for °स्पर) Dn Ds2 नरौ (for वीर). —(L 1799) D5 T2 G2 अथ वा (for अन्यथा) D5 G3 तथा (for युद्धाद्) Dn Ds2 सुनिश्चितौ (for सुविश्रुतौ) —(L 1801) Dn Ds2 T1 2 4 M3 4 महाबलौ (for °भटौ) T3 तौ च (for नैतौ) Dn Ds1 एतौ प्रकृतिसत्तमौ, T1 2 G1 M4 नैतौ प्रकृतिसमतौ, T4 एतौ प्रकृतसमतौ; G3 न तौ प्राकृतसम्मितौ (for °) —(L 1804) T4 एते वै (for एव ते) T1 2 G1 2 उभयो सेनयोरपि; G4 5 उभयोरपि सेनयो (for °) —(L 1805) Dn Ds2 रात्रौ निशीथे मेघौघे, T2 G1 2 3 रात्रौ तु तिमिरे घोरे (for °) —(L 1806) Dn Ds2 वीरौ (for घोरै) Dn Ds2 T1 G2 अभ्रमा, G2 आसने (for आजसा) —(L 1807) Dn Ds2 सात्यकि पौण्ड्रक तदा (for °) —(L

तयोश्चटचटाशब्दो ब्रह्माण्डक्षोभणो महान् ।
प्रादुरासीत्तु सर्वत्र सर्वान्विस्मापयन्निव ॥

Colophon.

वैशंपायन उवाच ।

एतस्मिन्नन्तरे क्रुद्ध एकलव्यो निषादपः ।
बलभद्रमभिप्रेक्ष्य धनुरादाय सत्वरम् ।
आरुह्य स रथं वीरो ययौ यत्र हली स्थितः ॥
दृष्ट्वायान्तं निषादेशमेकलव्यं हली तदा ।
रथी गदी शरी भूत्वा तस्थौ तस्याभितो बली ॥
बलदेवं च विद्धाला जघान शरमालया ।
रथं दशभिराहत्य सूतं दशभिराशुगैः ॥
सिंहनादं प्रकुर्वाणो दशभिस्त्वथ सीरिणम् ।
धनुर्ज्यां दशभिश्छित्त्वा सिंहनादं व्यनीनदत् ॥
सज्यं च कार्मुकं कृत्वा बलदेवो निषादपम् ।
नाराचैर्दशभिर्भिन्ना बाणैश्च दशभिः शितैः ।
चिच्छेद धनुरर्धं तस्तसर्वक्षत्रस्य पश्यतः ॥
सूतं दशभिराहत्य रथं तिलशक्रिरेव च ।
ध्वजं चिच्छेद भल्लेन निषादस्य जगत्पते ॥

ततोऽपरं महच्चापं निषादो वीर्यवत्तमः ।
दृढमौर्वीसमायुक्तं दशतालप्रमाणतः ।
कामपाल शरेणाशु जघान स्तनदेशतः ॥
बलदेवो महावीर्यः शेषः सर्प इव श्वसन् ।
दशभिस्तद्धनुर्दिव्यं शरैः सर्वसहैर्बली ।
चिच्छेद मुष्टिदेशे तु माधवो माधवाग्रजः ॥
एकलव्यो निषादेशः खड्गमादाय सत्वरम् ।
प्राहिणोद्बलदेवाय निशितं घोरविग्रहम् ॥
तमन्तरे यदुश्रेष्ठो वृष्णिवीरः प्रतापवान् ।
तिलशः पञ्चभिर्बाणैश्चकार यदुनन्दनः ॥
ततोऽपरं महाखड्गं सर्वकालायसं शुभम् ।
प्राहिणोत्सारथेः कायमालोक्याथ निषादपः ॥
तं चापि दशभिर्वीरो माधवो यदुपुंगवः ।
बाणैर्निमेषमात्रेण निर्बिभेद महारणे ॥
ततः शक्तिं समादाय घण्टामालाकुलां नृप ।
निषादो बलदेवाय प्रेषयित्वा महानलः ।
सिंहनादं महाघोरमकरोत्स निषादराट् ॥
सा शक्तिः सर्वकल्याणी बलदेवमुपागमत् ॥

---

1810) Ds T1 G2 सर्वं (for सर्वान्)

COLOPHON — *Mention of the Epic* Ds3 — *Mention of Khila* Dn Ds2 Ds T1 2 4 G M — *Adhy name* Dn Ds2 पौण्ड्रकसात्यकियुद्धम्, G1 4 M पौण्ड्रयुद्धम् — *Adhy no* Dn Ds2 251, T1 G2, 208, T2 G1 210, T3 177, G3 202, G4 207, G5 200, M1 2 4 209, M2 173

(L 1812) Ds1 अभिप्रेक्ष्य (for °प्रेक्ष्य) — Dn om (hapl) lines 1813-18.0 — (L 1814) Ds T1 2 G M1 स्थ (for स) T1 G1 4 4 M घोर, G5 घोर (for वीरो) T2 G1 4 हरि (for हली) — (L 1814) Ds तु साङ्गली, T2 हरि सदा, G3 सदा हली (by transp) — (L 1815) T4 रथी शरी, G3 गदी रथी (by transp) Ds रथी शरी गदी खड्गी, G2 सदा रथी शरी गदी (for °) Ds T2 G2 भूत्वा (for तस्थौ) — G5 om lines 1816-1819 — (L 1817) Ds T1 G2 3 M आविध्य (for आहत्य) — (L 1819) M2 चैव (for छित्वा) Ds T2 G2 धनुर्दशभिश्छित्वा (for °) — (L 1820) M1 तु (for च) T2 G2 छित्वा (for कृत्वा). G1 3 निषादप — (L 1821) Dn Ds2 T1 2 G1 2 3 M शरै; T4 हते (for शितै) — (L 1822) Ds T1 2 M

धनुरग्र, G1 °रात्र (for °रर्धं) — (L 1824) Dn Ds2 T4 M1 3 जगत्पति (for °त्पते) — (L 1825) T3 G1 3 M1-3 महा (for महत्) G1 निषादो वीर्यवत्तमम्, Bom Poona eds G(ed) °दो वीर्यसमत (for °) — (L 1827) Bom Poona eds G(eds) मौर्व्या (for मौर्वी) — (L 1827) Dn Ds2 नपाल जगत्पव (for °) — (L 1829) Dn सहैर्धैरे, Ds2 सर्वसहैः; Ds T2 4 G1 2 4 5 M -सर्वैर्बली (for सहै°) — (L 1830) Ds माधवाग्रज (for °ज). —(L 1831) Dn Ds2 G2 सत्वर (for °रम्) — (L 1832) G2 दस्यवाराय, Bom Poona eds G(ed) देवाय) T2 घोर विक्रमं, T3 G1 °मुत्तमम्, G4 °रिप्रम (for °रिग्रहम्) — (L 1833) Dn यदुर्वीरो, Ds2 यदुवीरो (for यदुश्रेष्ठो) — (L 1835) Dn ततो महान्तं खड्गं (for °) — (L 1836) Ds G2 समालोक्य (for आलोक्याथ) Bom Poona eds G(ed) निषादप (for °दपः) — (L 1837) Ds पार्थ (for चापि) Dn Ds यदुनन्दन, Ds T1 2 4 G1 2 4 M वृष्णि पुंगव (for यदु°) — (L 1838) Dn Ds2 बाणैस्तत्रापि शैव, Ds T1 2 4 G M बाणैस्तत्र क्षणात् (for °) — (L 1841) Dn Ds2 G2 निषादप (for °दराट्) — (L 1843) Cal. ed सा शक्तिः प्रेषिता तेन (for °) — (L 1843) Dn Ds2

उत्प्लुत्य तां महाघोरां बलभद्रः प्रतापवान् ।
आदायाथ निषादेशं सर्वान्विस्मापयन्निव ।
तथैव तं जघानाशु वक्षोदेशे स माधवः ॥
स तया ताडितो वीरः स्वशक्त्याथ निषादपः ।
विह्वलः सर्वगात्रेषु निपपात महीतले ।
प्राणसंशयमापन्नो निषादो रामताडितः ॥
निषादास्तस्य राजेन्द्र शतशोऽथ सहस्रशः ।
अष्टाशीतिसहस्राणि निषादाः शस्त्रयोधिनः ।
गदिनः खड्गिनश्चैव महेष्वासा महाबलाः ॥
शरैरनेकसाहस्रैः शक्तिभिश्च परश्वधैः ।
गदाभिः पट्टिसैः शूलैः परिघैः प्रासतोमरैः ॥
कुन्तैरथ कुठारैश्च व्यद्रवन्राममोजसा ।
शलभा इव राजेन्द्र दीप्यमानं हुताशनम् ।
ते शरैः पातयांचक्रू रामं राममिवापरम् ॥
केचित्कुठारैराजघ्नुः केचित्कुन्तैः परश्वधैः ।
गदाभिः केचिदायान्ति शक्तिभिश्च तथापरे ।
निजघ्नुः सहसा रामं स्फुरन्तं पावकं यथा ॥
ततः क्रुद्धो हली साक्षाद्धलमुद्यम्य सत्वरम् ।
सर्वांस्तान्कर्षयामास मुसलेन व्यपोथयत् ॥
ते हन्यमाना रामेण निषादाः पर्वताश्रयाः ।
निपेतुर्धरणीपृष्ठे शतशोऽथ सहस्रशः ॥
क्षणेन तान्महाराज हत्वा सर्वान्महाबलान् ।
सिंहवद्विनदंस्तत्र तस्थौ रामो महाबलः ॥
ततो रात्रौ महाघोराः पिशाचाः पिशिताशनाः ।
आकृष्य मांसयूथानि भक्षयन्तः समासते ।
पिबन्तः शोणितं कोष्णं सकृत्य च शर्म बहु ॥

Colophon.

वैशंपायन उवाच ।
क्रव्यादाः सर्व एवाशु भक्षयन्तस्तदा शवम् ।
हसन्तो विविधं घोरं नादयन्तो वसुंधराम् ॥
राक्षसाः पिशिताशाश्च पिबन्तो रुधिरं बहु ।
आशिषं युञ्जते राजन्शवस्य पिशिताशनाः ॥
नृत्यन्ति स्म तदा राजन्नगर्यां रणतोषिणः ।
काका बलाश्च गृध्राश्च श्येना गोमायुकास्तथा ।
भक्षयन्तः प्रधावन्तस्ततश्चैवाथ दारुणम् ॥
एतस्मिन्नन्तरे वीरो निषादो लब्धसंज्ञकः ।
हतान्सर्वान्समालोक्य निषादानथ सीरिणा ॥
गदामादाय कुपितो राममेव जगाम ह ।

बलपतर्दी, T4 उत्पत्य ता (for उत्प्लुत्य तां) D6 T4 G2 महाराज (for °घोरां) D6 T3 4 G2 4 बलदेव (for °भद्र) —(L 1844) G3 सामासाद्य (for आदायाथ) —(L 1845) Dn Ds2 D5 T3 G2 4 तथैव (for तथैव) — T1 om (hapl) lines 1849b–1855a G3 om (hapl) lines 1850–1863 —(L 1850) Dn Ds2 तस्य (for तस्य) —(L 1851) Dn Ds2 खड्गिनस्तु (for खड्गि°) — T2 om (hapl) lines 1853–1857 —(L 1854) Dn Ds2 बाहुवाना महीत्रसाम्, G2 बलभद्र महौजसम् (for °) —(L 1858) Dn Ds2 आयान्ति (for आयान्ति) —(L 1861) Dn Ds2 T1 G2 M1 सर्वानाकर्षयामास (for °) Dn Ds2 T1 M1 2 हि पीडयन्, D6 व्यपोथयत्, G2 व्यपोथयत्, M2 4 निर्पीडयन् (for व्यपोथयत्) —(L 1863) Dn Ds2 राजेन्द्र (for रामेण) —(L 1865) व्यनदत् (for विनदन्) —(L 1868) Dn Ds2 M1 कोष्णम्, G2 क्षोभात् (for कोष्णं) Dn Ds2 D6 T1 G2 M1–2 (inf lin as above) 3 सहित, T2 सगृह्य (for सकृत्य)

Colophon — Version of the Epic Ds2 — Version of Khila Dn2 D5 D6 T1 2 4 G M — Adhy name Dn Ds2 एकलव्यदैत्यवध° — Adhy no Dn 283, Ds2 283, T1 G3 209, T2 G2 204, G4 M1 2 4 210, M3 174

T2 G1 om the ref —(L 1869) T1. 2 G1 3–4 शवं बहु (for तदा शवम्) —(L 1870) D1 2 हसन्ते (for °न्तो) T1 2 G1 3–5 नाद, M हास (for घोरं) —(L 1871) Bom Poona eds G(ed) च पिशाचास् (for पिशिताशास्) Dn Ds2 G2 शोणितं (for रुधिरं) —(L 1872) Dn Ds2 G1 2 4 M1 3 आशिषो (for °षं) Dn Ds2 T4 G2 M4 युञ्जते (for यु°) T1 राम T2 G1 3 5 रात्रे (for राजञ्) D6 T4 G2 III रामस्य, T1 2 G1 3–5 जयेति (for शवस्य) —(L 1873) D1 2 G1 3 4 M3 तोषिता (for °णः) —(L 1874) Dn Ds2 G1 3 बलाकाः, D6 चकाश्च, T1 व्यालाश्च, G2 M4 बलाश्च (for बलाश्च) Dn Ds2 D6 T1 4 G2 M1 2 गोमायवस् (for °युकास्) —(L 1875) Dn Ds2 T1 2 G1 3 4 M प्रवर्तन्ते (for प्रधावन्तस्) Dn Ds2 D6 हसन् (for ततस्) Dn Ds2 राक्षसाश्चैव दारुणा (for °) —(L 1876) T2 संज्ञित, T4 G2 संज्ञिक (for संज्ञक).

जघान गदया राजन्ननुदेशे निषादपः ॥
ततो रामो गदी राजन्निषादं बाहुशालिनम् ।
आजघ्ने गदया क्रूरं मदमत्तो हलायुधः ।
तयोश्च तुमुलं युद्धं गदाभ्यां समवर्तत ॥
आकाशे शब्द आसीत्तु तयोर्युद्धे महारवः ।
समुद्राणां यथा घोषः सर्वेषां संनिगच्छताम् ॥
कल्पक्षये महाराज शब्दः स तुमुलोऽभवत् ।
क्षुभितो नागलोकश्च नागाः क्षोभं समाययुः ।
पृथिवी चान्तरिक्षं च सर्वं शब्दमयं बभौ ॥
ततः स पौण्ड्रको राजा सात्यकिं वृष्णिनन्दनम् ।
गदयैव जघानाशु सत्वरं रणकोविदः ।
युयुधानो बली राजन्वासुदेवं जघान ह ॥
तयोश्च तुमुलः शब्दः प्रादुरासीन्महारणे ।
चतुर्णां युध्यतां राजन्परस्परवधैषिणाम् ।
ब्रह्माण्डक्षोभणो राजञ्शब्द आसीत्सुभैरवः ॥
ततो रजः प्रादुरभूत्तस्मिन्संग्राममूर्धनि ।
तारका निष्प्रभा आसंस्तमस्येवं क्षयं गते ॥
उषसि प्रविशुद्धायां तमो निःशेषतां ययौ ।
उदितो भगवान्सूर्यश्चन्द्रश्च क्षयमाययौ ॥
ततो युद्धं प्रादुरभूच्चतुर्णां बाहुशालिनाम् ।
देवासुरसमं राजन्नुदिते भास्करे महत् ॥

Colophon

वैशंपायन उवाच ।

ततः प्रभाते विमले भगवान्देवकीसुतः ।
गन्तुमैच्छज्जगन्नाथ पुरीं बदरिकाश्रमात् ॥
नमस्कृत्य मुनीन्सर्वान्ययौ द्वारवतीं प्रभुः ।
आरुह्य गरुडं विष्णुर्वेगेन महता प्रभुः ॥
सुमहाञ्छुश्रुवे शब्दस्तेषां युद्धं प्रकुर्वताम् ।
गच्छता देवदेवेन पुरीं द्वारवतीं नृप ॥
अचिन्तयज्जगन्नाथः को न्वयं शब्द उत्थितः ।
संग्रामसंभवो घोर आर्यशैनेयसंयुतः ॥
व्यक्तमागतवान्पौण्ड्रो नगरीं द्वारकामनु ।
तेन युद्धं समभवत्पौण्ड्रकेण दुरात्मना ॥
यदूनां वृष्णिवीराणां युध्यतामितरेतरम् ।
शब्दोऽयं सुमहान्वृत्तो नात्र कार्या विचारणा ॥
इत्येवं चिन्तयित्वा तु दध्मौ शङ्खं महास्वनम् ।

— Dn1 om lines 1877–1878 — (L 1877) T1 एवान् (for इतान्) D5 बौरिणा, M1 सीरिणम् (for सीरिणा) Dn1 निषादासगदारिण, Ds2 °कगधारिण T2 °न्निषदसीरिणान् (for °) — (L 1878) T2 G1 [आ]जगाम (for जगाम) — (L 1879) T1 2 G1 4 घोरं (for राजन्) Dn Ds2 M1 व्यद्देशे (for अनु°) — (L 1880) Cal ed हद (for गदी) — (L 1883) Dn Ds2 महाभुज, G1 सुदारुणम् (for महारव) — (L 1884) D5 G2 महाघोर, G5 महाघोष (for यथा घोष). — (L 1885) Dn Ds2 T1 2 4 M तु (for स) G1 महान् (for ऽभवत्) — (L 1886) D5 T1 G1 3 M1 क्षोभितो, G1 क्षुभितो (for क्षुभितो) Dn Ds2 G1 क्षो(G2 क्षु)भितो नागराजश्च (for °) M1 2 परं ययु (for समाययु) — (L 1887) T1 शब्दमय (for शब्द°) D5 सर्वे लोका स दिश (for °) — (L 1889) D5 T1 G2 कोविदम् (for °द). — (L 1891) G2 समन्ततः (for महारणे) — (L 1893) Dn Ds2 T1 G1 4 सुदारुणः; M1 तु भैरव (for सुभै°) — (L 1894) D5 G2 M रज (for रजः) G1 M1 2 आसीद् (for अभूत्) — (L 1895) Dn Ds2 T1 2 G1 M गतेषु (for आसंस्) G2 [ह]ते (for [व]र्गे) — (L 1896) G1 इव वा (for °वि) Dn Ds2 T2 G M1 ततो (for तमो) — (L 1897) D5 इयम् (for क्षयम्) — (L 1898) T1 2 G1 3 4 चन्द्रशालिनाम् (for बाहु°) — D5 T1 2 4 G om line 1899

Colophon — Mention of the Epic Ds2 — Mention of Adhy. Dn Ds2 D5 T1 2 G M — Adhy name Dn Ds2 D5 पौण्ड्रकयुद्धम्, T2 G4 M1 2 4 पौण्ड्रकवध — Adhy no Dn Ds2 293, T1 G3 210, T2 G1 4 M1 2 4 211, T4 179, G2 205, G5 200, M3 175

T2 G2 3 om the ref — (L 1901) G3 om (hapl) 1901b–1906a Dn Ds2 M4 पुरे (for पुरीं) — (L 1902) T2 G1 4 समस्कृत्य (for °स्कृत्य) Dn Ds2 G2 नृप; D5 प्रीत, T2 G1 4 प्रभो M1 2 हरि (for प्रभु) — G4 om lines 1903–1905 — (L 1903) T1 2 4 G1 4 5 हरि (for प्रभु) — (L 1904) D5 T1 2 G1 2 3 M1 2 शुश्रुवे (for शुश्रुवे) — (L 1906) M उत्थम (for उत्थित). — (L 1907) D5 T1 सध्वनि (for संभवो) G1 संयुग (for संयुत) M1 शैनेयेन च संयुत (for °) (L 1909)

पाञ्चजन्यं हरिः साक्षात्प्रीणयन्वृष्णिपुंगवान् ॥
रोदसी पूरयामास तेन शब्देन केशवः ।
यादवा वृष्णयश्चैव श्रुत्वा शङ्खस्य त रवम् ॥
व्यक्तमायाति भगवान्पाञ्चजन्यरवो ह्ययम् ।
इति ते मेनिरे राजन्वृष्णयो यादवास्तथा ।
निर्भयाः समपद्यन्त वृष्णयो यादवा नृप ॥
तस्मिन्नेव क्षणे ह्यत्रस्तार्क्ष्यश्च पतता वरः ।
ततश्च देवकीसूनुर्दृष्टस्तैर्यादवेश्वरैः ॥
सूताश्च मागधाश्चैव पुरो यान्ति जगत्पते ।
स्तुत्या स्तोतुं हरिं विष्णुमीश्वरं कमलेक्षणम् ॥
ततश्च यादवाः सर्वे परिवव्रुर्जनार्दनम् ।
कृष्णस्तु गरुडं भूयो गच्छ त्वं मेरुमुत्तमम् ॥
इत्युक्त्वा गरुडं विष्णुर्विसृज्य यदुपुंगवः ।
दारुकं पुनराहेदं रथमानय मे प्रभो ॥
स तथेति प्रतिज्ञाय रथमानीय सत्वरम् ।
रथोऽयं भगवन्देव किमतः कृत्यमस्ति मे ।
इत्युक्त्वा रथमादाय प्रणम्यास्मि स्थितो हरेः ॥
गतेऽथ गरुडे विष्णू रथमारुह्य सत्वरम् ।
यत्र युद्धं समभवत्तत्र याति स्म केशव ॥
तत्र गत्वा महाराजे युध्यतां च महात्मनाम् ।
पाञ्चजन्यं महाशङ्खं दध्मौ यदुनृपोत्तम ॥
पौण्ड्रोऽथ वासुदेवस्तु कृष्णं दृष्ट्वा रणोत्सुकम् ।
सात्यकिं पुरतः कृत्वा वासुदेवमुपागमत् ॥
क्रुद्धोऽथ सात्यकी राजन्वारयामास पौण्ड्रकम् ।
न गन्तव्यमितो राजन्नेष धर्मः सनातनः ॥
जित्वा मां गच्छ राजेन्द्र परं योद्धुं महारणे ।
क्षत्रियोऽस्ति महावीर स्थिते मयि रणोत्सुके ॥
एष ते गर्वमखिलं नाशयिष्यामि संयुगे ।
इत्युक्त्वा धावतस्तस्थौ गच्छतो यादवेश्वरः ॥
पौण्ड्रस्य शिनिनप्ता ॥ पश्यतः केशवस्य ह ।
अवज्ञाय शिनेः पौत्रं कृष्णमेव जगाम ह ॥
निर्भर्त्स्य सहसा भूयः सात्यकिः क्रोधमूर्छितः ।
गदया प्राहरत्पौण्ड्रं वासुदेवस्य पश्यतः ।
यथाशक्ति यथायोगं सात्यकिः सत्यविक्रमः ॥
दृष्ट्वाथ भगवानेव सात्यकिं प्रशशंस ह ॥
निवार्य सात्यकिं कृष्णो यथेष्टं क्रियतामसौ ।
उपारमद्यथायोगं सात्यकिः कृष्णवारितः ॥
ततः स पौण्ड्रको राजा वासुदेवमुवाच ह ।
भो भो यादवगोपाल इदानीं क्व गतो भवान् ॥
त्वां द्रष्टुमद्य संप्राप्तो वासुदेवोऽस्मि साम्प्रतम् ॥
हत्वा त्वां सबलं कृष्ण बलैर्बन्धुभिरन्वितः ।
गतेऽथ यमलोकं तु त्वयि केशव बन्धुभिः ।
अहमेको भविष्यामि वासुदेवो जगत्पतिः ॥
यच्चकं तव गोविन्द प्रथितं सुप्रभं महत् ।

Cal. ed महात्मना (for दुरा°) — (L 1910) G3 वृष्णि पर्याणः — (L 1911) Dn Ds2 T1 G3 °यन्तो (for वृष्णो) — (L 1912) T3 प्रतापवान् (for महारवम्) — (L 1915) D6 G2 M1 यदवो (for यादवा) Ds2 T2 ते (for त) — (L 1916) G2 स्वनो (for रवो) — (L 1918) G2 निर्णय समवाप्यन्त (for °) Dn Ds2 T1 G3 M1 3 च ते (for नृप) — (L 1920) Dn Ds2 T3 G4 यादवेश्वर T1 °वैर्नृप (for °वेश्वरैः) — (L 1921) G3 आगता (for सूताश्च) — (L 1922) Dn Ds2 G3 स्तुत, D6 T3 G1 स्तुत्य, T1 2 G1 4 [अ]स्तुवन् (for स्तोतु) — (L 1923) T1 4 G1 3 M1 2 4 गताह् (for ततह्) — (L 1924) Dn Ds2 नारकम् (for मेरुम्) — (L 1925) D6 T3 G3 व्यसृजद् (for विसृज्य) Dn Ds2 M1 3 नन्दन (for पुंगव) — (L 1927) Dn Ds2 T2 G3 M2 (*inf lin* as above) आदाय (for आनीय) — (L 1929) T3 हरि (for हरे॰) — (L 1931) D6 T1 2 G2 3 ततो (for तत्र) — (L 1932) Dn Ds2 T3 G3 महाराज (for °राजे) G2 परस्परम् (for महात्मनाम्) — (L 1934) T2 G1 4 पौण्ड्रको (for पौण्ड्रोऽथ) — G2 om lines 1935 1939 — (L 1942) Cal ed पौण्ड्रकस्य शिनेर्नप्ता (for °) — (L 1946) Dn Ds2 यथाप्राण (for यथाशक्ति) D6 T1 2 G M यथाप्राणं (for यथायोग) Cal ed. सात्यकिः क्रोधमूर्छित (for °) — (L 1947) T2 G1 3 स, M1 [आ]नु (for [आ]थ) T2 G1 3 4 सात्यकि॰ (for °किं) — (L 1948) Dn2 विष्णो (for कृष्णो) — (L 1949) G3 °पालित॰ (for °वारित) — (L 1950) Dn Ds2 M1 2 स ततः (by transp) T2 ततः स पौण्ड्र राजा तु (for °) — Dn2 D6 M1 2 om line 1954 — (L 1955) Dn Dn2 G1 2 महीतले (for जगत्पति) — (L.

अनेन मम चक्रेण पादितोऽस्मि च तद्रणे ॥
चक्रमस्तीति यद्वीर्यं तव माधव सांप्रतम् ।
नाशयिष्यामि तत्सर्वं सर्वक्षत्रस्य पश्यतः ॥
शार्ङ्गीति मां विजानीहि न त्वं शार्ङ्गीति शब्द्यसे ।
शङ्खी चाहं गदी चाहं चक्रीति च जनार्दन ।
मामेन हि सदा भूप राजानो वीर्यशालिनः ॥
आदौ त्वं यद्गनैर्वृद्धो हत्वा स्त्रीबालकान्बहून् ।
गाश्च हत्वा महागर्वस्तव सप्रति वर्तते ॥
तच्चेऽहं व्यपनेष्यामि यदि तिष्ठसि मत्पुरः ।
शस्त्रं गृहाण गोविन्द यदि योद्धुं व्यवस्थितः ।
इत्युक्त्वा बाणमादाय तस्थौ पार्श्वे जगत्पतेः ॥
एवद्वचनमाकर्ण्य वासुदेवस्य भाषितम् ।
स्मितं कृत्वा हरिः कृष्णो बभाषे पौण्ड्रक नृपम् ॥
कामं वद नृप त्वं हि पातकयसि सदा नृप ।
गोघाती बालघाती च स्त्रीहन्ता सर्वथा नृप ॥
चक्री भव गदी राजञ्शार्ङ्गी च सततं भव ।
नामासीद्यद्वृथा मह्य वासुदेवेति च प्रभो ॥
शार्ङ्गी चक्री गदी शङ्खीत्येवमादि वृथा मम ।
किं तु वक्ष्यामि किंचित्तु शृणुष्व यदि मन्यसे ॥
क्षत्रिया बलिनो ये तु स्थिते मयि जगत्पतौ ।
यथा नु भुवने त्वा हि जीवन्त्येव मयि प्रभो ॥
यच्चे चक्र महाघोरं सर्वकालायसं महत् ।
तत्तुल्यं मम चक्रस्य वृत्ततो न तु वीर्यतः ।
आयुधेष्वथ सर्वेत्र शब्दमात्रद्वयमस्ति ते ॥
गोपोऽहं सर्वदा राजन्प्राणिना प्राणदः सदा ।
गोप्ता सर्वेषु लोकेषु शास्ता दुष्टस्य सर्वशः ॥
कत्थन सर्वदा कार्यं जित्वा शत्रून्रणे नृप ।
अजित्वा किं भवान्ब्रूते स्थिते मयि च शक्तिणि ॥
हत्वा मां ब्रूहि राजेन्द्र यदि शक्तोपि पौण्ड्रक ।
स्थितोऽहं चक्रमाश्रित्य रथी चापी गदासिमान् ॥
रथमारुह्य युद्धाय सनद्धो भव मानद ।
इत्युक्त्वा भगवान्विष्णुः सिंहनादं व्यनीनदत् ॥

Colophon

वैशंपायन उवाच ।

तत शर समादाय वासुदेवः प्रतापवान् ।
पौण्ड्रं जघान सहसा निशितेन शरेण ह ॥
पौण्ड्रोऽथ वासुदेवस्तु शरैर्दशभिराशुगै ।
वासुदेवं जघानाशु वार्ष्णेयं वृष्णिनन्दनम् ॥
दारुकं पञ्चविंशत्या हयान्दशभिरेव च ।
सप्तत्या वासुदेवं तु यादवं वासुदेवक ॥
ततः प्रहस्य सुचिरं केशवः केशिसूदनः ।
धृष्टोऽसीतीह मनसा सपूज्य यदुनन्दनः ॥

19.7 ) पीडितो ( for पादितो ) — ( L 1960 ) Dn Ds2 शिष्यसे ( for शब्द्यसे ) — ( L 1961 ) Dn Ds2 आनन्तो ( for राजानो ) — T1 om line 1963 — ( L 1963 ) Dn Ds2 आदौ त्वं बलवद्वृत्रान् G3 आदौ तु शल्यवेपस्त्वं ( for ° ) — ( L 1972 ) T2 G3 नृप ( for भव ) — ( L 1973 ) Dn Ds2 T2 नामधेय, G2 M2 नाममात्र, M1-3 नामधेयो ( for नामासीद्यत ) — G5 om lines 1971-1976 — ( L 1974 ) Dn यथा ( for वृथा ) Ds T1 3 4 G2 4 M2 नृप ( for मम ) — ( L 1977 ) Ds T2 M1 3 न ( for तु ) — ( L 1978 ) Ds2 असुरान्तकरं महद ( for ° ) — ( L 1979 ) T1 3 G1 3 4 चक्र तु, G2 M2 वीर्यस्य ( for चक्रस्य ) — ( L 1980 ) T3 G1 3-5 मे ( for ते ) — ( L 1981 ) G1 सर्वथा, G3 5 प्राणिना ( for सर्वदा ) G4 5 सर्वदा ( for प्राणिना ) Ds T3 G3 त्वमेव सर्वदा राजन्प्राणद सर्वदेहिनाम् — ( L 1982 ) G4 5 गोप्ता सर्वस्य लोकस्य ( for ° ) Dn Ds2 M सर्वदा ( for सर्वदा ) — ( L 1983 ) Bom Poona eds G(ed ) कत्थनं सर्वकाले हि ( for ° ) Dn1 Ds2 नृपाधम ( for रणे नृप ) Dn2 जित्वा राजनृपाधम ( for ° ) — ( L 1984 ) T1 शत्रुणा, G2 शार्ङ्गिणि ( for शक्तिणि ) — ( L 1985 ) Dn Ds2 G2 M2 4 शक्तोऽसि ( for शक्तोपि ) G1 3 शक्तोपि ( G3 °क्तोऽसि ) यदि पौण्ड्रक ( for ° ) — ( L 1986 ) T2 शरी ( for रथी ) — Ds T3 G2 om line 1988 — ( L 1988 ) G4 5 M2 इत्युक्तो ( for °क्त्वा ) G4 5 कृष्ण ( for विष्णु )

COLOPHON — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 Ds T1 3 4 G M — *Adhy name* Dn Ds2 कृष्णपौण्ड्रकयुद्धम्; Ds T1 M1 4 पौण्ड्रकवध• — *Adhy no* Dn Ds2 231, T2 G3 201, T3 G1 213; T4 180, G2 206, G5 212, M1-3 176; M4 112

( L 1992 ) Ds जगहाय ( for जघानाशु ) — ( L 1994 ) Ds T3 G2 यादवान् ( for °व ) — ( L 1995 ) G2 केवल ( for केशव ) Dn2 -नाशन ( for -सूदन ) — ( L 1996 ) Ds2

आकृष्य शार्ङ्गं बलवान्संधाय रिपुमर्दनः ।
नाराचेन सुतीक्ष्णेन ध्वजं चिच्छेद केशवः ॥
सारथेश्च शिरः कायादाहृत्य यदुपुंगवः ।
अश्वांश्च चतुरो हत्वा चतुर्भिः सायकोत्तमैः ॥
रथरज्जूः समाहृत्य तथोभौ पार्ष्णिसारथी ।
चक्रं च तिलशः कृत्वा हसन्किंचिदवस्थितः ॥
पौण्ड्रको वासुदेवस्तु रथादाप्लुत्य सत्वरम् ।
आदाय निशितं खड्गं प्राहिणोत्केशवाय ह ॥
स खड्गं शतधा कृत्वा शरैर्दशभिरेव च ।
बालचक्रेशवोऽतिष्ठन्निमील्य नयने हरिः ॥
ततः शक्तिं समादाय निशितां घोरविग्रहाम् ।
प्राहिणोद्वृष्णिवीराय सिंहनादं ससर्ज ह ॥
तां चापि तिलशः कृत्वा तूष्णीमासीत्स केशवः ॥
ततोऽपरं महाघोरं परिघं कालसंनिभम् ।
गृहीत्वा वासुदेवाय वासुदेवः प्रतापवान् ॥
प्राहिणोद्वृष्णिवीराय सर्वक्षत्रस्य पश्यतः ।
तद्द्विधा जगतां नाथश्चकार यदुनन्दनः ॥
ततश्चक्रं महाघोरं सहस्रारं महाप्रभम् ।
त्रिंशद्भारसमायुक्तमयसा निर्मितं महत् ।
आदायाथ महाराज केशवं वाक्यमब्रवीत् ॥
पश्येदं निशितं घोरं तव चक्रविनाशनम् ।
अनेन तव गोविन्द दर्पं दर्पवतां वर ।
अपनेष्यामि वार्ष्णेय सर्वक्षत्रस्य पश्यतः ॥
त्वामुद्दिश्य महाघोरं कृतं मम दुरासदम् ।
यदि शक्तो हरे कृष्ण दारयैनं महास्पदम् ॥
इत्युक्त्वा तच्छतगुणं भ्रामयित्वा महाबलः ।
चिक्षेपाथ महावीर्यः पौण्ड्रको नृपसत्तम ।
हरिमुद्दिश्य सहसा विनदन्भैरवं रवम् ॥
ततः प्रहस्य भगवानापतन्तं महायुधम् ।
गृहीत्वा बलवद्घोरं तेनैव प्राहिणोद्धरिः ॥
दृष्ट्वा तं महदायान्तं पौण्ड्रको नृपसत्तमः ।
अवप्लुत्य ततो देशात्तदुत्सृज्य महाबलः ।
सिंहनादं महाघोरं व्यनदद्वीर्यसंस्तरः ॥
ततो विस्मयमापन्नो भगवान्देवकीसुतः ।
अहो वीर्यमहो धैर्यमस्य पौण्ड्रस्य दुःसहम् ।
इति मत्वा जगन्नाथः स्थित एव रथोत्तमे ॥
ततः शिलाः समादाय प्रेषयामास केशवे ।
ताः शिलाः प्रेषयामास तस्मै यादवनन्दनः ॥

---

स्रो; Cal ed हृत्रो (for धृत्रो) Ds2 G5 M1 3 ऽस्तावीति, T2 G2 ऽस्तीति हि, M3 4 ऽस्तीति च (for ऽस्तीति ह) G5 मृदुना (for मनसा) — (L. 1997) Dn Ds2 T2 4 G1 3 M1 2 4 °सूदन (for मर्दन) — T3 om line 1999 — (L.1999) G3 om lines 1999ᵇ-2001ᵃ Dn Ds2 आहृत्य यदुनन्दन (for ᵇ) — (L 2001) Dn Dn2 रथं राज, D6 रथरज्जुं, T1 °रज्जवा, T3 °रथ्या (for रज्जू) M1 2 4 प्राष्टि-; M2 प्राष्टि- (for पार्ष्णि-) G3 तस्थौ प्रातिष्ठसारथी (sic) (for ᵇ) — (L 2002) Dn1 T1 4 G2 4 M इव स्थित ; D6 इवास्थित (for अव°) — (L 2003) G3 M3 4 उत्पुत्य (for आप्लुत्य) G4, 5 M3 सत्वर (for °रम्) Dn Ds2 रथादुत्प्लुत्य सत्वर (for ᵇ) — (L 2004) Dn Ds2 स (for ह) — (L. 2005) T1, 2 G1 3-5 M3 दशधा (for शतधा) Dn Ds2 G3 4 om 2005ᵇ-2009ᵃ — (L 2009) Dn Ds2 T1 4 G3 M3 आसीच्च, T3 G1, 4 5 M2-4 °त (for °त्स) — (L. 2010) Dn Ds2 M3 4 संमितम् (for संनिभम्) — (L. 2011) वासुदेवं (for °देव) — (L 2013) M2 द्विधा त (for तद्द्विधा) T2 G1 3-5 तद्द्विध (G3 4 °धा) तु जगन्नाथश्च (for °) — (L 2015) D6 T1 3 4 G M विंशद्भार (for त्रिंश°). T3 2 4 G5 बृहत् (for महत्) Dn Ds2 M4 आयसास्यमभिग्रहा; M1 2 अयसस्यमभिग्रहा (for ᵇ) — (L. 2016) D6 T4 G3 आदाय पौण्ड्रको राजा (for ᵃ) — (L 2017) G3 [इ]म M3 त्वं (for [इ]दं) T4 पश्यैतन्निशितं घोर (for ᵃ). D6 सहस्रार महाप्रभम् (for ᵇ) — (L. 2018) T2 पौण्ड्र- (for दर्पं) G3 दर्पविशा (for °वतां) — (L. 2020) Dn Ds2 M4 कृतमन्यद्, G3 कृतवर्मे (for कृतं मम) — (L. 2021) Dn Ds2 G3 दारयेदं, D6 धारयेद, T1 3 4 G1, 3-5 M1-3 दारयैन (for दार°) D6 T1 3 G1 M1-3 समास्पदम्, G3 महत्स्वनम् (for महास्पदम्) — Dn Ds2 om (hapl) lines 2024-2027 — (L 2026) D6 प्राहरद् (for प्राहिणोद्). — (L 2027) G3 चक्र (for दृष्ट्वा) — (L 2031) Dn T3 वर्यिम् (for धैर्यम्) G3 दुष्प्रसम् (for दुःसहम्) — (L. 2032) Dn Ds2 उत्थितश्च रथोत्तमात् (for ᵇ) — (L. 2033) Dn Ds2 G3 2 शिला (for शिलाः) Bom Poona eds G(ed) केशवम् (for °वे) — (L. 2934) Dn Ds2 T1 G1 4 ता शिलौ (for ताः शिलाः) Dn Ds2 तस्मै यदुकुलोद्वह, G3 कृष्णो

पौण्ड्रेण सुचिरं कालं विक्रीड्य भगवान्हरिः ।
ततश्चक्रं समादाय निशितं रक्तभोजनम् ॥
दैत्यमांसप्रदिग्धाङ्गं नारीगर्भविमोचनम् ।
शातकुम्भनिभं घोरं दैत्यदानवनाशनम् ॥
सहस्रारं शतारत्निमद्भुतं दैत्यभीषणम् ।
वैष्णवं परमं चक्रं नित्यं सुरगणार्चितम् ॥
विष्णुः कृष्णो रथी शार्ङ्गी नित्ययुक्तः सदा हरिः ।
जघान तेन गोविन्दः पौण्ड्रकं नृपसत्तमम् ॥
तस्य देहं विदार्याशु चक्रं पिशितभोजनम् ।
कृष्णस्याथ करं भूयः प्राप सर्वेश्वरस्य ह ।
ततः स पौण्ड्रको राजा गतासुः प्रापतद्भुवि ॥
निहत्य भगवान्विष्णुर्विद्वेषगामिः प्रभुः ।
प्रविवेश सुधर्मां तु यादवैः पूजितो हरिः ॥

Colophon.

वैशंपायन उवाच ।

निषादेशं ततो रामः शक्त्या वीर्यवतां वरः ।
आजघान स्तनद्वंद्वे सिंहनादं व्यनीनदत् ॥
ततः क्रुद्धो निषादेशो रामं सत्वं महाबलम् ।
गदया लोकविख्यातो जघान स्तनवक्षसि ॥
आहतः स तु तेनाशु बलभद्रो महाबलः ।
उभाभ्यां चैव रामस्तु कराभ्यां वृष्णिपुंगवः ।
गदां गृह्य महाघोरां निषादाय समाददे ॥
तां दृष्ट्वा महतीं घोरामायान्तीं प्राणहारिणीम् ।
दुद्रावाथ निषादेशः समुद्रं मकरालयम् ।
अन्वधावत्ततो रामो धावन्तं मकरालयम् ॥
धावत्स्येवं तदा राजन्नेकलव्ये निषादपे ।
धावत्येन च रामोऽपि यत्र यातो निषादपः ॥
सागरं स प्रविश्याशु गत्वा योजनपञ्चकम् ।
भीत एव तदा राजन्नेकलव्यो निषादपः ।
कंचिद्द्वीपान्तरं राजन्प्रविश्य जडवत्स्थितः ॥
ततो रामो निषादेशं जित्वा यादवनन्दनः ।
तां सभां मणिरत्नाढ्यां प्रविवेश हलायुधः ॥
सात्यकिर्युद्धसरक्तस्तां सभां प्रविवेश ह ।
अन्ये च यादवा राजन्यथायोगमुपस्थिताः ॥
आसीनेषु च सर्वेषु वृष्णिवीरेषु सर्वतः ।
अभिवाद्य यथायोगं वृद्धान्सर्वान्स केशवः ।
उवाच वचनं काले भगवान्देवकीसुतः ॥
दृष्टः कैलासशिखरे शंकरो नीललोहितः ।
स तु मह्यं यदुवरा प्रीतिमांश्च ददौ वरम् ॥
तत्र देवाः समायाता मुनयश्च तपोधनाः ।
दृष्ट्वा मां शंकरं चैव प्रीतास्तुष्टाः समाययुः ॥
अत्यद्भुतं मया दृष्टं रात्रौ यादवसत्तमाः ।

---

देवकिनन्दन (for °). — (L. 2037) M1 -प्रदीप्ताङ्गं (for -प्रदिग्धाङ्गं). — (L. 2038) Dn Ds1 शातकुम्भमयं घोरं (for °). G4 + -नाशनम् (for -नाशनम्). — (L. 2039) Dn Ds1 T4 शतारं वद्; T1 2 G1 3–5 सहस्राशुम् (for शतार-त्निम्). T4 मारणम् (for भीषणम्). M4 भूतदैत्यविभीषणम् (for °). — (L. 2040) Dn Ds1 वैष्णवं धर्मं परमं. M वैष्णवं परमं धर्मं (for °). — (L. 2041) Dn Ds1 T1 M1 3 तथा (for रथी). G1 गदी चक्री (for नित्ययुक्तः).

Colophon. — *Mention of the Epic*: Ds1. — *Mention of Khila*: Dn Ds1 D5 T1 2 4 G M. — *Adhy. name*: Dn D5 T1 2 G1 3 4 M1 4 पौण्ड्रकवध; Ds1 वासुदेववध. — *Adhy. no.*: Dn Ds1 255; T1 G3 213; T3 G1 214; T4 170; G2 207; G4 211; G5 213; M1–3 177; M4 213.

Dn1 G1 om. the ref. .

°देश) — (L. 2049) D5 स्तनद्वंद्वे (for °द्वे). — (L. 2050) G2 स्तोत्रमतं (for रामं सत्वं). M2 3 महाबल° (for °बलम्). — (L. 2052) T1 आहत्य स्तन एवाशु (for °). T4 बलदेवो (for °भद्रो). — Dn Ds1 D5 om. line 2057. — (L. 2057) G2 M3 अन्वधावत (for अन्वधावत्). T4 G2 समुद्रं (for धावन्तं). D5 निषादेशं जिघांसया (for °). — (L. 2058) Dn Ds1 M1 तदा राजन्, T4 अथाद्राजन्; T1 G2 ततो राजन् (for तदा राजन्). T4 G1 3 4 M2–4 एकलव्ये निषादप (for °). — (L. 2059) D5 ततो राजन्; M3 तदा रामो (for च रामोऽपि). D5 एकलव्ये; T4 G1 यत्र रामो (for यत्र यातो). — (L. 2062) Dn Ds1 प्रविश्य स्थितवान्जडः (for °). — (L. 2063) Dn Ds1 जित्वाथ यदुनन्दन (for °). — G1 om. line 2065. — (L. 2065) Dn Ds1 G1 T4 3 M1 -संगतम्; D5 -सैनवधः; T4 -संयुक्तम् (for संरक्तः). — (L. 2069) Dn … — (L. 2070) Dn Ds1

पिशाचौ द्वौ महाघोरौ वदन्तौ मामिकां कथाम् ॥
मृगयां चक्रतुस्तौ तु चिन्तयन्तौ तु मां सदा ।
दृष्ट्वा मां तौ तु राजेन्द्र प्रीतिमन्तौ तपस्विनौ ।
भक्तिनम्रौ महात्मानौ प्रणामं चक्रतुस्तदा ॥
ततोऽहं सर्वथा प्रीतस्तौ दृष्ट्वा स्वर्गमुत्तमम् ।
तोषयित्वा महादेवमहा चाहं ततो गतः ॥
ततस्ते वृष्णयः सर्वे देवदेवं प्रशंसिरे ।
सर्वथा कृतकृत्यास्ते वृष्णयः केशवाश्रयाः ।
यादवाः सर्व एवात्र स्वं स्वं जग्मुर्यथालयम् ॥
अभ्यन्तरं जगन्नाथः प्रविश्य हरिरीश्वरः ।
रुक्मिणीसत्यभामाभ्यामाचचक्षे यथाभवत् ॥
ते प्रीते प्रीतियुक्तेन केशवेन समन्विते ।
एतत्ते सर्वमाख्यातं केशवस्य च चेष्टितम् ॥
शशास पृथिवीं कृत्स्नां दुष्टान्हत्वा महाबलः ।
नरकं घोरकर्माणं पौण्ड्रं च नृपसत्तमम् ॥
हयग्रीवं निशुम्भं च तथा सुन्दोपसुन्दकौ ।
ररक्ष विप्रान्देवेशो मुनीन्मुनिवरार्चितः ॥
विप्रेभ्यश्च ददौ वित्तं गाश्च रत्नानि केशवः ।
अग्निहोत्रं प्रयुञ्जानो ब्राह्मणांश्च सुतर्पयन् ॥
मुनींश्च ब्रह्मचर्येण देवान्यज्ञेन केशवः ।
स्वधया च पितॄन्सर्वान्प्रीणयत्येव सर्वदा ॥
तस्मिञ्शासति देवेशे राज्यं निष्कण्टकं बभौ ।
सुखमेव प्रजाः सर्वा जीवन्ति ब्राह्मणोत्तराः ॥

Colophon

जनमेजय उवाच ।

भूय एव द्विजश्रेष्ठ शङ्खचक्रगदाभृतः ।
चरितं श्रोतुमिच्छामि विस्तरेण तपोधन ।
न हि मे तृप्तिरस्तीह शृण्वतः केशवीं कथाम् ॥
को नु नाम हरेर्विष्णोर्देवदेवस्य चक्रिणः ।
शृण्वन्कथां स्मरन्वापि तृप्तिं याति दिवानिशम् ॥
पुरुषार्थोऽयमेवैको यत्कथाश्रवणं हरेः ॥
कथमासीज्जगद्धेतोर्हंसस्य डिभकस्य च ।
समितिः सर्वभूताना सदा विस्मयदायिनी ॥
विचक्रस्य कथं युद्धं दानवस्य महात्मनः ।
स तयोर्मित्रतां यात इत्येतमनुशुश्रुम ॥
तौ नृपौ वीर्यसंपन्नौ शिष्यौ भृगुसुतस्य ह ।
सर्वास्त्रकुशलौ वीरौ हराल्लब्धवरौ किल ॥
संग्रामः सुमहानासीदित्युक्तं भवता पुरा ।

T1 G1 2 M1 4 दृष्ट (for दृष्ट्वा) Dn Ds2 G5 दृष्ट्वा कैलासशिखर (for °) —(L. 2071) T2 यथा (for ददौ) —(L 2073) Dn Ds2 शंकरस्य (for °ं) G5 प्रीत° स्तुत्वा समाययौ (for °) —(L. 2075) वदन्तौ (for वदन्तौ) D6 G3 वदन्तौ मामिका कथा (for °) —(L. 2076) D6 प्रीणयन्तौ (for चिन्त°) —(L. 2077) T2 G1 4 5 राजेन्द्र —(L 2078) D6 भक्तिमन्तौ (for °नम्रौ) —(L 2079) Dn Ds2 नीतौ (for दृष्ट्वा) —(L. 2080) D6 T1 4 G3 5 M प्रेषयित्वा (for तोष°) T1 G1 2 3 महामानात् T2 °त्मानम् (for महादेवम्) T1 आत्मा, T2 वशी (for महा) Dn Ds2 मया चाद्य समागतम् (for °) — Before line 2081, some Mss ins वैशंपायन उवाच —(L 2081) Dn Ds2 M शशंसिरे (for प्रशं°) — G5 om lines 2082-2084 —(L 2082) D6 T4 G2 M1-3 केशवाश्रयात् (for °श्रया) —(L. 2083) G1 5 यथागतम् (for °लयम्) —(L 2086) M तनये (for ते प्रीते) — After line 2086 G(ed.) ins an irrelevant narrative, not connected with the topic —(L. 2087) Ds2 D6 T1 2 4 G1 2 4 M हि (for च) —(L. 2088) D6 T1 2 4 G2 3 सर्वां (for कृत्स्नां) Dn Ds2 G6 M महाबलात् (for °बल) —(L 2089) Dn Ds2 पौण्ड्रकं (for पौण्ड्रं च) —(L 2092) D6 T3 G2 तदा, G1 यथा (for ददौ) G4 5 रत्न (for वित्तं) Dn Ds2 G3 दत्त्वा स, G6 वित्तं च; M1-3 रत्नांश्च (for °नि) —(L 2094) Dn Ds2 देवान्यज्ञैरनेकधा (for °) —(L 2095) D6 T1 G3 M प्रजया (for स्वधया) Dn Ds2 D6 T4 G2 M प्रीणयन् (for °यति) D6 केशव (for सर्वदा) —(L 2096) Dn Ds2 D6 T4 G2 M प्रभो (for बभौ) —(L. 2097) Dn Ds2 M1 3 ब्राह्मणादय, D6 °णोत्तमा (for °णोत्तरा)

COLOPHON — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 T1 2 4 G M — *Adhy name* Dn Ds2 M पौण्ड्रकवध, T1 2 G1 3 एकलव्यपराजय — *Adhy no* Dn Ds2 286, T1 G3 213, T2 G3 215, T4 188; G4 112, G6 314, M1-3 178, M4 234

(L 2103) T4 G2 M4 तथा (for कथां) Bom Poona eds G(ed) शृण्वतस्तस्य स्मरतापि (for °) —(L 2104) D6 T2 G1 4 5 जगद्धातुर, G2 °स्यापि (for °द्धेतोर्) —(L.

तयोश्च नृपयोर्विप्र केशवस्य जगत्पतेः ॥
कस्य पुत्रौ समुत्पन्नौ किंवीर्यौ किंपराक्रमौ ।
सर्वमेतद्द्विजश्रेष्ठ वक्तुमर्हसि सुव्रत ॥

वैशंपायन उवाच ।

शृणु राजन्महाबाहो कथां पापप्रणाशिनीम् ।
यथा संग्राम आसीत्तु तयोश्चक्रधरस्य च ॥
यथा च तौ समुत्पन्नौ यथाभूद्विग्रहो महान् ।
अष्टाशीतिसहस्राणि दानवानां महात्मनाम् ॥
बलान्यथ विचक्रस्य शितशूलधराणि च ।
आसन्युद्धे महाराज दानवस्य महात्मन ॥
यदूनामन्तरं प्रेप्सुर्विचक्रो युद्धलालसः ।
देवासुरे महायुद्धे देवानजयदन्तरे ।
तद्वधार्थं सदा यत्नमकरोच्चैव केशवः ॥

Colophon.

वैशंपायन उवाच ।

आसीत्साल्वेषु राजेन्द्र ब्रह्मदत्तो नृपोत्तमः ।
नाम्ना राजन्स भूतात्मा सर्वभूतदयापरः ॥
पञ्चयज्ञपरो नित्यं जितामित्रो जितेन्द्रियः ।
ब्रह्मविद्वेदविच्चैव सदा यज्ञपरः शिवः ॥
तस्य भार्ये महीपाल रूपौदार्यगुणान्विते ।
बभूवतुः सुसपत्ने अनपत्ये नृपोत्तम ।
स ताभ्यां मुमुदे राजा शच्या शक्र इवाम्बरे ॥
नाम्ना मित्रसहो नाम सखा चासीद्द्विजोत्तमः ।
तस्य राज्ञो महायोगी वेदवेदाङ्गपारगः ।
अनपत्यः स विप्रेन्द्रो यथा राजा बभूव ह ॥
स राजा सहितस्ताभ्यामर्चयामास शंकरम् ।
पुत्रार्थं शूलिनं शर्वं दश वर्षाण्यनन्यधीः ।
स विप्रो वैष्णवं सत्रं पुत्रार्थं समयोजयत् ॥
अर्चितस्तेन राजेन्द्र शंकरो नीललोहितः ।
आत्मानं दर्शयामास स्वप्ने राजानमब्रवीत् ।
प्रीतोऽस्मि तव भद्रं ते वरं वरय सुव्रत ॥
अथ राजा जगन्नाथमुवाचेदं स्वपन्नपि ।
पुत्रौ मम भवेतां हि तथेत्युक्त्वा वृषध्वजः ।
अन्तर्धानं गतः शंभुः स च प्रीतोऽभवन्नृपः ॥
सोऽपि मित्रसहो विद्वान्देवं केशवमव्ययम् ।
पद्मनाभं जगन्नाथमर्चयामास भक्तितः ॥
अर्चितस्तेन विप्रेण देवदेवो जनार्दनः ।

---

2105) M3 सदा (for सह) —(L 2107) G2 तनयौ मित्रश्चा- पश्च (for °) —(L 2108) Dn Ds2 मुनी (for नृपी) —(L 2109) Dn Ds2 T1.2.3 G M3 हरेद् (for हरान्) —(L 2110) M3 स (for सु) —(L 2111) T1.3 G1 ... वीर (for विप्र) — Dn Ds2 om (hapl) 2112b–2116a —(L 2113) T4 एव (for एतद्) —(L 2117) Dn Ds2 T1 G2.3 M1.2.4 तस्मिन्नास् (for महात्म°) —(L 2118) G1.3 ज्ञान (for शित) G2 धरस्य (for धराणि) —(L 2119) M1.3 दुरात्मन, Cal ed जयैषिण (for महात्मन) —(L 2120) Dn D6 M2.3 अन्तर, M1 अन्तरे (for अन्तरं) Dn Ds2 T1 M1 यदूनां (for विचक्रो) —(L 2121) Dn Ds2 M3 देवाञ्जयति दुर्धरं (for b) —(L 2122) T3 G1.3 तदा (for सदा) — D5 [ए]व (for [ए]व)

Colophon — *Mention of the Epic* Ds2 — *Mention of khila* Dn Ds2 D6 T1.2.3 G M — *Adhy name* Dn Ds2 T1.2.3 G M हंसडिम्भकोपाख्यानम् — *Adhy no* Dn Ds2 237, T1 G3 215, T2 G1 216, T4 183, G2 209, G3 215, M1.3 179, M4 215

(L 2123) Dn1 ब्रह्मदत्तो (for ब्रह्म°) —(L 2124) Dn Ds2 पूतात्मा (for भू°) —(L 2125) D5 M1.3 जिता- मात्यो (for °मित्रो) Dn Ds2 T1.3.4 G जितात्मा विजिते- न्द्रिय (for b) —(L 2126) Bom Poona eds G(ed) पञ्चमख (for °पर) D6 T4 शिवं (for शिव) —(L 2127) M1.3 महाराज (for महीपाल) —(L 2128) G2 समु- त्पन्ने, Cal ed सुमपत्ते (for °पत्ने) — G1 om lines 2129–2133 T1 om (hapl) lines 2129–2130 —(L 2130) D6 G3 मित्रसखो (for °सहो) Cal ed महामते (for द्विजो- त्तम) —(L 2131) Dn2 T4 तत्पर (for -पारग) Dn1 D6 T1 G2.4.5 वेदवेदान्ततत्पर (for b) —(L 2134) G2 ज्ञान (for दश) M1.3 [अ]नन्यभाक् (for °धीः) —(L 2135) M1.3 समकल्पयत् (for °योजयत्) —(L 2137) M1.3 दर्शयित्वा (for °यामास) —(L 2139) Dn Ds2 स्वपन्निव, T1.2 G1.3–5 स्वयमिव (for स्वपन्नपि) —(L 2140) D6 T4 M1–3 भवेयातां (for °तां हि) —(L 2141) Dn Ds2 M1.3 प्रतिबुद्धस्ततो नृप (for d) —(L 2142)

पुत्रमेकं ददौ तस्मै स्वात्मना सदृशं हरिः ॥
ते भार्ये गर्भमाधत्तां तेजसा शंकरस्य ह ।
विप्रभार्या महाराज वैष्णवं तेज आदधात् ॥
महिष्यौ ते महावीर्यौ पुत्रौ शंकरसमितौ ।
असूयेतां महीपाल क्रमेणैव नृपस्य ह ॥
स तयोश्च महाराज जातकर्मादिकाः क्रियाः ।
चकार विधिवत्सर्वा विप्रसाथ महद्धनम् ॥
स च विप्रो विनीतात्मा पुत्रमेकं प्रजज्ञिवान् ।
साक्षादिव जगन्नाथं स्थितं पुत्रात्मना नृप ॥
जातकर्मादिकं सर्वं करणं स चकार ह ।
तौ कुमारावयं चैव त्रय. समयमोऽभवन् ॥
वेदानधीत्य ते सर्वाञ्शास्त्राणि चान्वीक्षिकीं तथा ।
धनुर्वेदे तथास्त्रे च निपुणास्तेऽभवंस्तदा ॥
हंसो ज्येष्ठो नृपसुतो डिभकोऽनन्तरोऽभवत् ।
स च विप्रसुतो राजञ्जनार्दन इति स्मृतः ॥
अन्योन्यं मित्रतां याताः सर्वे चैव कुमारकाः ॥

Colophon.

वैशंपायन उवाच ।
हंसश्च डिभकश्चैव तपश्चर्तुं महामती ।
मनश्चक्रतुरात्मांशौ शंकरस्य नृपोत्तम ॥
गत्वा तु हिमवत्पार्श्वं तपश्चक्रतुरञ्जसा ।
उद्दिश्य शंकरं शर्वं नीलग्रीवमुमापतिम् ॥
वीर्यात्ये चैव नौ स्यातामित्याधाय तु मानसे ।
एकाग्रौ प्रयतौ भूत्वा वाय्वम्बुभक्षिणौ नृप ॥
नमस्ते देवदेवेश शंकरेति दिवानिशम् ।
हर शर्व शिवानन्द भैरवेश उमापते ॥
वृषध्वज विरूपाक्ष हर्यक्ष जगतां पते ।
भक्तप्रिय गिरीशेश वामदेव शिवाच्युत ॥
सद्योजात महादेव देवदेव गुहाशय ।
भूतभावन भूतेश प्रणतात्मन्सदाशिव ॥
इत्यादिनामभिर्नित्यं स्तुवन्तौ शंकरं भवम् ।
इति कृत्वा निरुपाश्र्वं तपस्तेपतुरञ्जसा ॥
निर्ममौ निरहंकारौ मौनव्रतसमाश्रितौ ।
पर्णाणीह तदा राजन्यच्च चक्रतुरोजसा ॥

Ds एवं ( for देव ) — ( L. 2145 ) G3 शिवः ( for हरिः ) — ( L. 2147 ) Dn Ds3 T2 3 4 M3 आदधत् ( for °धात् ) — ( L. 2148 ) Dn T2 3 4 G3 5 6 M3 4 महावीर्ये ( for °वीर्यौ ) M1-3 ते राजभार्ये गर्भिण्यौ ( for ° ) Dn Ds3 T2 3 4 G1 2 3 M4 निर्मितौ ( for समितौ ) — ( L. 2149 ) T3 G1 असुवातां ( for असूयेतां ) G3 कर्मणा ( for क्रमेण ) — ( L. 2150 ) Ds स तयोः पुत्रयो राजन्; T4 स तयोः पुत्रयो राजन् ( for ° ) Dn Ds T3 4 G3 M3 नाम ( for जात ) — ( L. 2151 ) Ds T3 4 G3 सर्वं ( for सर्वा ) Dn Ds3 M3 4 विप्रेभ्योऽदात्; G3 विप्रेभ्यश्च ( for विप्रसाथ ) — ( L. 2152 ) G3 पुत्रो ( for विप्रो ) Dn Ds3 M3 4 हि लब्धवान्; M3 4 लब्धवान् ( for प्रजज्ञिवान् ) — ( L. 2153 ) M विप्रात्मना ( for पुत्रा° ) — ( L. 2154 ) Dn Ds3 T2 3 4 G3 5-6 M3 ब्राह्मण ( for करणं ) D3 G3 जातकर्मादिकं सर्वम् ( for ° ) — ( L. 2155 ) G3 तौ कुमारद्वय सोऽपि ( for ° ) M3 4 क्रमेण ( for त्रय स ) Cal ed त्रय सुखपुत्रोऽभवन् ( for ° ) — ( L. 2157 ) T3 तथास्त्रेषु M3 4 तथा शास्त्रे ( for तथास्त्रे च ) — ( L. 2158 ) G3 डीभिको ( for डिभको ) — ( L. 2159 ) M सुत ( for स्मृत ) — ( L. 2160 ) Ds T3 M3 अन्योन्य ( for °न्यं )

Colophon — *Mention of the Epic* Ds3 — *Mention of Ākhy* Dn Ds3 Ds T2 3 4 G3-6 M — *Adhy name* Dn Ds3 T2 3 4 G3-6 M हंसडिभकोपाख्यानम् — *Adhy no* Dn 297; Ds3 298, T2 G4 215, T3 G3 217; T4 184; G5 214, G6 216, M1-3 180, M4 216

— ( L. 2161 ) Ds महीं यतौ ( for महामती ) G( ed.) हंसश्चैव तपश्चर्तुं यथा डिभको महानिति — ( L. 2162 ) Dn3 Ds आत्मांशौ. T3 अप्येतौ ( for आत्मांशौ ) — ( L. 2163 ) G3 M3 4 गत्वा हिमवतः पार्श्वे ( for ° ) Dn3 चक्रतुः ( for चक्र° ) — ( L. 2165 ) T2 हितार्थे ( for वीर्यार्थे ) G3 om lines 2166b 2171a — ( L. 2168 ) Ds G3 शिवेशान; T4 शिवेशान, M3 4 शिव शान्त ( for शिवानन्द ) — ( L. 2170 ) Dn3 भक्तिप्रिय ( for भक्त° ) Ds T3 G3 वासुदेव ( for वाम° ) — ( L. 2171 ) G3 गुहाच्युत ( for °शय ) — ( L. 2172 ) Bom Poona eds G(ed ) देवेश ( for भूतेश ) — G3 om lines 2173 74 — ( L. 2173 ) M3 4 हरम् ( for भवम् ). — ( L. 2175 ) M3 4 समन्वितौ, M3 4 परायणौ ( for समाश्रितौ ) — G3 M3 4 om line 2175 — ( L. 2176 ) Ds महाराज ( for तदा राजन् ) G3 तदा यत्र पर्णानि ( for ° ) Ds पत्रमात्रभुजौ तथा ( for ° ) — G3 om lines 2177-2181 — ( L. 2178 ) G3 वायौ ( for नैवे ) Ds तस ( for स्थान )

ततः प्रीतोऽभयच्छर्यस्ताभ्यां संयमनेन च ।
स ददौ दर्शनं नेजं व्याघ्रचर्माम्बरो हरः ।
त्रियक्षः शंकरः शर्वः शूलपाणिरुमापतिः ॥
अग्रतः संस्थितं शर्वं चन्द्रार्धकृतशेखरम् ।
तौ दृष्ट्वा प्रीतमनसौ नमश्चक्रतुरञ्जसा ॥
भगवानुवाच ।
वरं वरयतां भद्रौ यथेच्छा वां तथास्तु वै ॥
सावूचतुस्तदा राजन्प्रीतस्त्वं भगवन्यदि ।
देवासुरमनुष्येभ्यो रक्षोगन्धर्वदानवैः ।
आवामजेयौ सर्वास्मिन्नेष नौ प्रथमो वरः ॥
द्वितीयो नौ विरूपाक्ष रौद्रास्त्राणां च समदः ।
माहेश्वरं तथा रौद्रमस्त्रं ब्रह्मशिरो महत् ॥
अभेद्यं कवचं दिव्यमच्छेद्यं चापि कार्मुकम् ।
परशुं च तथा शर्व सदा रक्षार्थमेव च ॥
सहायौ द्वौ महादेव भूतौ युद्धे हि गच्छतोः ।
एवमस्त्विति देवेश आह ध्रुकिरिटी हरः ॥
कुण्डोदरं विरूपाक्षं सर्वप्राणिहिते रतम् ।
युवामथ च भूतेशौ सहायौ सततं रणे ॥
संग्रामं गच्छता घोरमेतयोर्बलशालिनोः ।
इत्युक्त्वा भगवाञ्छर्वस्तत्रैवान्तरधीयत ॥

ततस्तौ वीर्यसंपन्नौ हंसो डिभक एव च ।
कृतास्त्रौ शस्त्रसंपन्नौ चापिनौ वीर्यवत्तरौ ॥
आमुक्तकवचौ वीरावजेयौ देवदानवैः ।
अलब्धभक्तौ देवेशे शंकरे नीललोहिते ॥
नित्योत्सवकरौ देवे भस्मोद्धूलनशोभिनौ ।
कृतत्रिपुण्ड्रकौ नित्यं जटामुकुटशिरोधरौ ।
रुद्राक्षार्पितसर्वाङ्गौ व्याघ्रचर्माम्बरावृतौ ॥
नमः शिवाय शान्ताय महादेवाय धीमते ।
इत्यादिभिः सदा देवं स्तुवन्तौ नामभिः शिवम् ।
साक्षादिव महादेवौ रेजतुः शूलधारिणौ ॥
ततः स्वभवनं गत्वा पितुः पादावगृह्णताम् ।
पितुश्च सख्युर्नलिनौ मातुश्च चरणौ तदा ॥
जनार्दनोऽपि धर्मात्मा कालेन महता नृप ।
विद्यापारं महाबुद्धिर्यत्नेनासावुपेयिवान् ॥
स च विष्णु हृषीकेश पीतकौशेयवाससम् ।
ब्रह्मतत्त्वपरो नित्यमुपास्ते विजितेन्द्रियः ॥
हंसश्च डिभकश्चैव कृतदारौ बभूवतुः ।
जनार्दनश्च धर्मात्मा कृतदारो बभूव ह ॥
सर्वे ते यज्ञपरमाः पञ्चयज्ञपरास्तथा ।
स्वदारनिरताः सर्वे गुरुशुश्रूषणे रताः ।

—(L. 2179) D5 T2 G2 त्र्यक्ष स, T3 त्र्यक्षर (for त्रियक्ष) —(L. 2181) T1 2 G2 4 M2 प्रीति (for प्रीत) — D6 ईश्वर (for भगवान्) —(L. 2182) T1 2 G1 3 4 वरयतं D6 T2 4 G1–4 भद्र (for भद्रौ) Dn Ds2 वर वरय भद्र वा (for °) T4 G2 यथेच्छेता, M2 °च्छेद (for °च्छा वा) D6 T4 G2 M1–3 वाम् (for वै) —(L. 2184) D6 सुरघ्नौ (for सुरथैर्) M4 यक्ष (for रक्षो) M1 3 सत्तमै (for दानवै) —(L. 2185) D6 M1–3 अजय्यौ, D6 नो समौ (for एष नौ) —(L. 2188) D5 T4 M3 देव (for त्रियम) —(L. 2189) G4 5 शार्व (for शर्व) — T2 om (hapl) lines 2190–2123 —(L. 2190) M1 3 युद्ध तु, M4 युद्धस्य (for युद्धे हि) Dn Ds2 T1 G1 3–5 M3 4 गच्छताम् (for °तो) —(L. 2191) M1 2 सर्वेश, M2 4 भूतेश (for देवेश) D6 G3–4 M ध्रुकिरिटि, T4 °रिट, G1 °रिटी (for °रिटी) —(L. 2192) D6 द्वितीयो नौ (for कुण्डोदरं) D5 T1 G2 M1 3 विरूपाक्ष (for °पाक्ष) D6 T1 2 G2 4 M1–3 रत (for रतम्). —(L. 2194) D6 T1 G2 M2 गच्छतोर्, T2 G1 5 6 °त, M2 4 °तो (for °ता) —(L. 2194) D6 कृतास्त्र (for °स्त्रौ) Dn1 Ds2 दास्त्र, M सत्र (for सत्र) G2 वीर्यवत्तमौ (for °तरौ) — T1 om lines 2198–2201 —(L. 2198) Dn Ds2 T2 G1–4 M4 अजय्यौ (for अजेयौ) —(L. 2199) D6 T1 G5 6 M4 देवेन (for °शे) —(L. 2200) M1 3 नित्योपासकरौ (M3 °करे) देवे (for °) D6 भस्मोद्धूलितसोभिनौ (for °) —(L. 2201) T2 कृतत्रिपुण्ड्रौ नित्य च (for °) G4 6 शिरोरुहौ (for °धरौ) —(L. 2203) G2 शर्वाय (for धीमते) —(L. 2204) Dn Ds2 महादेवं (for सदा देव) —(L. 2205) Dn Ds2 T1 G6 M2 जट (for शूल) T2 G1 2 पाणिनौ (for धारिणौ) —(L. 2206) T1 G2 2 अगृह्णताम्, T2 G4 अवन्द (for अगृह्ण°) — D6 om (hapl) lines 2206b–2213a —(L. 2209) G3 विद्यासार (for °पार) Dn G2 5 6 M4 5 युक्तेन, Cal ed योगेन (for यत्नेन) T1 यत्नेन समुपेयिवान् (for °) —(L. 2210) M1 2 पीतवाससमच्युतम् (for °). —(L.

धर्म एव परं श्रेय इति ते मेनिरे नृप ॥

Colophon.

वैशंपायन उवाच ।

ततः कदाचित्तौ वीरौ मृगयां चक्रतुः किल ।
जनार्दनेन सहितौ रथैरश्वैर्गजैरपि ॥
वनं गत्वा तौ वीरौ सिंहव्याघ्रांश्च जघ्नतुः ।
शितैर्बाणैर्महाराज वराहांश्च सर्वशः ।
व्यालानन्यान्मृगान्हिंस्रानश्वैभिश्च सहितौ नृप ॥
एष आयाति विपुलो वराहो दीर्घलोचनः ।
एनं बाणेन सछिन्धि याति चायं मृगाधिपः ।
अयमन्योऽथ महिषः शृङ्गप्रोतसरीसृपः ॥
एते खलु मृगाः सार्धं शनैर्धावन्ति सर्वतः ।
एतद्भ्रमति सर्वत्र भीतं शशकुलं महत् ॥
शार्दूलद्वन्द्वैः सार्धं न हन्तव्यमिदं शुभम् ।
महीवव्यमिदं सर्वं निरुध्य श्वगणैरिह ॥
इत्यादिशब्दः सुमहान्मृगया कुर्वता नृप ।
क्षत्रियाणां नृपश्रेष्ठ व्याधानां चैव धावताम् ॥
हत्वा मृगान्सुबहुशो व्याघ्रान्सिंहान्नृपोत्तमौ ।
श्रमं च जग्मतुर्वीरौ मध्यं गच्छति भास्करे ॥
अलं हि मृगयास्माकं श्रमः समुपजायते ।
इत्यूचतुर्महाराज पुष्करं जग्मतुः सरः ॥
सरःसमीपमागम्य मुनिसिद्धनिषेवितम् ।
वीजन्मारुतसानूपं श्रमात्तत्र सुखं स्थितौ ॥
ततो जनाः सरः सर्वे विगाह्य श्रमकर्शिताः ।
बिसान्प्रवालान्पद्मानां भक्षयामासुरार्तवत् ॥
जनार्दनेन सहितौ हंसो डिभक एव च ।
सरः क्वचित्समाश्रित्य श्रमं सत्यज्य तिष्ठतः ॥
विश्रम्य सरसस्तीरे तदासाते सुखं नृपौ ।
अशृण्वतां परं ब्रह्म मुनिभिरुच्चैः समीरितम् ।
माध्यंदिनं तथा सर्वैः सवनं सस्वरं नृपौ ॥
ततः प्रीतौ नृपौ भूत्वा श्रुत्वा वेदध्वनिं तदा ।
वेच्छेतां तौ तदा द्रष्टुं यत्नं मुनिगणं तदा ॥
स्थापयित्वा ततः सेनां सर्वां मृगसमन्विताम् ।
आदाय च महाचापे शरान्कतिचिदेव च ॥
जनार्दनस्तदा वीरौ हंसो डिभक एव च ।
पद्भ्यामितौ महाराज जग्मतुराश्रमं किल ॥

2211) G2 निवनेन्द्रिय, M संशते (for त्रिशिते) — (L. 2213) Dn Ds2 T1 G2 3 4 ऽपि (for च) (L. 2214) Dn Ds2 निरता (for परमं) D6 M1 3 पाक (for पक्ष) G2 -परायणा, M4 स्तास्तथा (for -परास्तथा) — (L. 2216) M1 श्रेय (for श्रेय) G4 नृपा

Colophon — Ver 1. f the I pur Ds2 — Mention of Khila Dn Ds2 D6 T1 2 4 G M — Adhy name Dn Ds2 (a) हंसडिभकोपाख्यानम् T1 G2 हंसडिभको पाख्याने वरप्राप्ति, T3 G1 हंसडिभकवरप्राप्ति, M4 हंसडिभकम् — Adhy no Dn 288, Ds2 299, T1 G2 216, T2 G1 218, T4 185, G3 211, G4 215, G5 217, M1 3 181, M4 217

T2 om the ref — (L. 2217) Dn2 Ds2 T1 2 G1 3 4 भटतुः; Dn1 भटतः; D6 G2 जग्मतुः (for चक्रतुः) G2 तदा (for किल) — (L. 2218) Poona ed अश्वैः (for अश्वैर्) — (L. 2219) M1 सिंहान् (for सिंह) — (L. 2220) M1 शरैर् (for शितैर्) D6 T1 G2 च महावल (for [स]र्व सर्वशः) — (L. 2221) D6 सिंहान् (for हिंस्रान्) — (L. 2223) T1 2 G1 3 4 M पृथुलो, G2 वेगेन (for विपुलो) G1 विपुलो (for वराहो) — (L. 2223) D6 G2 पार्श्वतो, T4 यास्यतां; M1 3 व्याघ्रतो, M4 अध्वतो (for याति च) — (L. 2224) D6 शृङ्गेश्वर (for °प्रोत) — (L. 2225) Dn1 धावन्ति (for धावन्ति) Dn Ds2 T1 G2 3 M3 4 सर्वशः (for °तः) — (L. 2227) T1 2 स्तनधर्यै (for तद्द्वन्द्वैः) Bom Poona eds G (ed) शाव स्तन पिबन्मातुः (for °) — (L. 2229) T1 2 G2 3 कुर्वतो, T4 °ते (for °ता) G4 5 सदा (for नृप) — (L. 2231) G2 G2 सर्वान् (for सिंहान्) — (L. 2232) M1 गच्छतुः (for जग्मतुः) Dn Ds2 G2 मध्ये याते दिवाकरे (for °) — (L. 2236) T1 व्रजन्, G4 कूजन् (for वीजन्) M1 3 नवतीत (for सानूपं) — (L. 2238) D6 सर्वान् (for बिसान्) D6 M पद्मांश्च (for पद्मानां). Dn1 विश्रम्य सरसस्तीरे (for °) — (L. 2239) — For line 2240, D6 T4 G2 subst

19** विगाह्य तत्सरः स्वादु शीतं पीत्वा जलं च तौ ।

— (L. 2241) D6 T4 G2 समाश्रित्य सरस्तीरे (for °) D6 T4 G2 नृपोत्तमौ (for सुखं नृपौ) — (L. 2243) D6 माध्यंदिने (for माध्यंदिनं) — (L. 2244) D6 ततः प्रीतौ महाबाहू (for °) — (L. 2246) D6 T1 4 G1 5 M3 सर्वां सेनां (by transp) Dn1 समन्वितौ (for °ताम्) — (L.

महर्षेः काश्यपस्याथ सत्रं वैष्णवसंज्ञितम् ।
यजतो मुनिभिः सार्धं जपहोमपरायणैः ॥

Colophon.

वैशंपायन उवाच ।

जनार्दनश्च धर्मात्मा हंसो डिभक एव च ।
सदः प्रविश्य सत्रस्य नमश्चक्रुर्मुनींस्ततः ॥
तानागतान्महात्मानो मुनयः शिष्यसंयुताः ।
अर्घ्यपाद्यासनादीनि चक्रुः पूजां च यत्नतः ॥
तौ नृपौ स च विप्रेन्द्रः सम्यक् प्रतिगृह्य च ।
श्रीवात्मानौ महात्मानौ आसते सुसुखं नृप ॥
ततो हंसो बभाषे तान्मुनीन्संयतवाङ् नृप ।
पिता हि नौ मुनिश्रेष्ठा यष्टुमिच्छत्ससाधनः ।
गन्तव्यं तत्र युष्माभिः सत्रान्ते मुनिसत्तमाः ॥
राजसूयेन यज्ञेन कृत्वा दिग्विजयं वयम् ।
याजयिष्यामहे विप्राः पितरं धार्मिकं नृपम् ।
आयान्तु तत्र विप्रेन्द्राः सशिष्याः सपरिच्छदाः ॥
वयमेव सहिता दिशो जेष्यामहे ध्रुवम् ।
शक्ता हि वयमेवैतत्कर्तुं सैनिकसंचयैः ॥
आवयोः पुरतः स्थातुं न शक्ता देवदानवाः ।
कैलासनिलयाद्देवाद्वरं लब्धाः स यत्नतः ॥
अजेयाः शस्त्रसंघानामस्त्राणि विविधानि च ।
इत्युक्त्वा विरराम हंसो बलमदान्वितः ॥

मुनय ऊचुः ।

यदि स्यात्तत्र गच्छामो वयं शिष्यैर्नृपोत्तम ।
आस्महे चान्यथा राजन्नित्यूचुः किल तापसाः ॥

वैशंपायन उवाच ।

ततो देशान्महाराज गन्तुं निश्चितमानसौ ।
पुष्करस्योत्तरं तीरं दुर्वासा यत्र तिष्ठति ॥
यतयो यतयो भूत्वा यत्र ब्रह्मनिषेविणः ।
ब्रह्मसूत्रपदे सक्ताः सदर्थालोकतत्पराः ॥
निर्ममा निरहंकाराः कौपीनवसनावृताः ।
समास्थानं जगद्योनिं विष्णुं विश्वंभरं शिवम् ॥
ब्रह्मरूपं शिवं शान्तमक्षरं सर्वतोमुखम् ।
वेदान्तमूर्तिमव्यक्तमनन्तं शाश्वतं शिवम् ॥

---

2247) K6 T4 महाचाप; M °चापौ (for चापे) — (L. 2249) G3 महावीर (for °राज) — (L. 2250) Dn2 संज्ञकम्; T1 G3 -संहितम् (for संज्ञितम्). — (L. 2251) M1 3 चरतो (for यजतो).

Colophon om in Ds2 — *Mention of Khila* Dn Ds T1, 3 4 G M. — *Adhy name* Dn हंसडिम्भको-पाख्यानम्, T1 G1 हंसडिभकमृगयायां काश्यपदर्शनम्; T4 G3 काश्यपदर्शनम्; G3 मृगयाया काश्यपदर्शनम् — *Adhy no.* Dn 289; T1 G3 213; T4 G1 319; T3 116, G3 212; G4 216; G5 M1 3, 4 218; M2 182.

Ds2 om lines 2252–2253. — (L. 2252) G3 सर्वात्मा (for धर्मात्मा). — (L. 2253) D6 प्रकाश्य (for प्रविश्य) T3 सर्वत्र (for सत्रस्य). Dn G2 4 5 मुनीश्वरान् (for मुनींस्ततः) — (L. 2254) D6 T4 G3 मुनयः संशितव्रता (for °) — (L. 2255) D1 अर्घ्यपाद्यासनाभ्यां हि, T4 °द्यां हि: M2 3 °द्यादि, M3 °दीभि (for °) — (L. 2256) T1 ते नृपा (for तौ नृपौ). D6 M2 3 संप्रपूज्य; T4 G1 5 संप्रगृह्य; T4 M3 संप्रपूज्य, M4 प्रतिपूज्य (for °गृह्य). — (L. 2257) T4 स; Bom Poona eds G(ed) स (for सु). — (L. 2259) नृपश्रेष्ठा (for मुनि°). D6 प्रष्टुम् (for यष्टुम्). Dn Ds2 G3 M4 ससाधनम्; G3 सनातन (for ससाधन) — (L. 2262) G3 विप्रौ (for विप्रा) D4 यागयिष्यामहे विप्रा (for °). — (L. 2264) T4 G1 4 5 आवाम् (for वयम्) Dn Ds2 T1 2 G1–4 M4 सहितौ (for °ता) D5 T4 G4 5 सर्वे; T1 G3 5 M1–3 सर्वा, T3 G5 स्वयम्, M4 वयम् (for ध्रुवम्). — (L. 2265) T1 G3 5 शक्ता वयमिदैवैतत् (G3 °तं), T4 G1 4 5 शक्तौ हि वयमेवैतत् (for °) — (L. 2266) D6 शक्ता देवा न दानवा (for °) — (L. 2268) Dn Ds2 M4 अजय्यौ. D6 अयोधा; G3 अजेये (for °या) — (L. 2269) Dn Ds2 T1 3 [illegible] M4 हंसो मदबलान्वित (for °). — D5 T4 G3 5 M om the ref — (L. 2270) G4 शिष्यैः सह (for वयं शिष्यैर्) — D5 T1 3 4 G1–4 M om. the ref — (L. 2272) G3 तस्मात् (for ततो). T1 G3 मानसा (for °सौ) — (L. 2273) G4 पुष्करस्योत्तरे तीरे (for °). — (L. 2274) D5 T1 यत्र ये (for the first यतयो). Dn Ds2 T3 2 G1 3–5 M4 नियता (for the second यतयो) Dn Ds2 T1 G3 M4 ब्रह्म (for यत्र) D6 ब्रह्मतत्त्वनिषेवणा (for °) — (L. 2275) M1, 3 सदा-लोकनतत्परा (for °) — (L. 2276) Ds2 निर्मला (for निर्ममा) Dn Ds2 T1 3 4 G1 3–5 कौपीनाच्छादनप्रवृता (T1 G3 °नावृता) (for °) — (L. 2277) M2 3 समुद्योर्नि (for जग°). Dn Ds2 G3 विभुम्; T1, 3 G1 3 5 प्रभुम् (for

नित्ययुक्त विरूपाक्ष भूताधारमनामयम् ।
ध्यायन्त सर्वदा देव मनसा सर्वतोमुखम् ॥
दुर्वासस सदोपास्य वेदान्तैकरस गुरुम् ।
तर्कनिश्चिततत्त्वार्थज्ञाननिर्मलचेतस ॥
हसा परमहसाश्च शिष्या दुर्वासस प्रभो ।
गत्वा तत्र महात्मानौ दृष्ट्वा तानूर्ध्वरेतस ॥
दुर्वासस महाबुद्धि विचिन्त्यान पर पदम् ।
क्रुद्धो यदि स दुर्वासा दग्धु लोकानिमान्क्षम ॥
देवा अपि च य द्रष्टु क्रुद्ध चेन्न क्षमा सदा ।
रोषमूर्ति सदा यस्तु निश्चात्मा निश्चरूपधृक् ॥
रक्तकौपीनवसनो हस परम एव च ।
दृष्ट्वैन च तयोरेव बुद्धिरासीन्महामते ॥
को नामासौ महाभूत आपायी वर्णवित्तम ।
कश्चायमाश्रमो नाम विहाय च गृहाश्रमम् ॥
गृहस्थ एव धर्मात्मा गृहस्थो धर्मवित्तम ।
गृहस्थो धर्मरूपस्तु गृहस्थ स्वर्ग एव च ॥
गृहस्थश्च सदा माता प्राणिना जीवन सदा ।
त विनान्येन रूपेण वर्तते यो हि मूर्खवत् ॥
उन्मत्तोऽय विरूपोऽयमथ वा मूर्ख एव च ।
ध्यायन्ति सदा चायमास्ते वञ्चयितापि वा ॥
किमेते प्राकृतज्ञाना ध्यायन्त इव किंचन ।
वयमेतान्दुरारोहानाश्रमान्तरकल्पितान् ॥
स्थापयिष्यामहे सर्वान्मन्दबुद्धीनिमान्गृहे ।
बलादेव द्विजानेना मूढनिज्ञानतत्परान् ।
असद्ग्राहगृहीताश्च बालिशान्दुर्मतीनिमान् ॥
एषा शास्ता च को मूढो न विप्रो वयमत्र ह ।
धर्म्ये वर्त्मनि सस्थाप्य पुनर्यास्याव निर्वृतौ ॥
इति सचिन्त्य तौ वीरौ विप्रेण सहितौ नृप ।
जनार्दनन राजानौ मोहाद्भाग्यक्षयान्नृप ॥
समीप तस्य राजेन्द्र यते सशितचेतस ।
गत्वा च प्रोचतुरभौ दुर्वाससमतीन्द्रियम् ।
यतींश्च नियतान्क्रुद्धौ राजानौ राजसत्तम ॥

Colophon

शिवम्) — (L 2278) Dn Ds2 D6 T4 शुभ T1 2 G विभु (for शिव) — T1 2 G1 2 3 om (hapl) lines 2279 2281 — (L 2279) D6 विभुम् (for शिवम्) — (L 2280) D6 T4 M1 3 विभु वसु (for विरूपाक्ष) — (L 2281) Dn3 D6 M1-3 ध्यायन्त (for न्त) M1 2 अगत (for मनसा) — (L 2282) Dn Ds2 T1 2 ■ M3 दुर्वा सस्मा (for सस) Dn3 -पर (for रस) — (L 2283) Cal शुचि (for ज्ञान) — G4 om lines 2284–2285 G3 om line 2284 — (L 2285) T3 G2 M4 रेतसम् (for °स·) Dn Ds2 G 1 सौ दृष्ट्वा तूर्ध्वरेतसम् (for °) — (L 2288) Dn Ds2 T1 G1 2 वै (for चेन्न) — (L 2289) D6 T4 G2 लोक (for रोष) Dn Ds2 T1 दृष्ट्वा मा (for विश्वात्मा) — (L 2291) D6 एक T4 देव (for एव) — (L 2293) G2 स M1 2 4 [अ]यं (for [अ]सौ) — (L 2295) Dn Ds2 T1 2 4 G1 2 3 वर्णे G4 धर्मे (for स्वर्ग) Ds2 स M1 4 हि (for च) — (L 2296) M1 2 नवित्र- (for न) G4 धनम् (for सदा) — (L 2297) G2 तत (for [अ]न्येन) — (L 2299) T4 सन्त G4 सन्त (for [अ]पि वा) — (L 2301) Dn Ds2 T4 G2 M -कल्पकान् G3 -कर्शितान् (for कल्पितान्) — (L 2303) G2 विद्वानेतद् (for बलादेव) — (L 2304) D6 T4 G2 असद्भहविास्तु सदा (for °) D6 बालस्कन्दमतीनिमान् T4 G3 M1 2 बाला-मन्दमतीनिमान् (for °) — (L 2305) G2 मूर्खा (for मूढो) Dn1 विशा (for विप्रो) — (L 2306) Dn धर्मे Ds2 T1 G1 3 M1 4 धर्मे (for धर्म्ये) D6 G2 धर्मे ह्येवा समास्थाप्य (for °) D6 T2 4 M1 2 4 यास्याम (for °व) D6 T2 4 G2 M1 2 4 निर्वृता (for तौ) — (L 2309) Dn Ds2 T1 G1 4 6 सयत (for सशित-) — (L 2310) D6 गत्वा विप्रो चतुर्भद्री T4 गत्वा च भूचतुर्भद्री (sic) G3 गत्वा प्रोचतुरेवाम्रे (for °) — (L 2311) D6 G4 सत्तमा T4 °मौ (for °म)

Colophon — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 D6 T1 2 4 G M — *Sub parvan* T2 भविष्यपर्व — *Adhy name* Dn Ds2 T2 हसडिमकोपाख्यानम् T1 G2 मुनिसन्दर्शनम् T4 M3 4 हंसडिमकम् G3 हसडिमकोपाख्याने मुनिसदर्शनम् — *Adhy no* Dn Ds2 291 T1 G2 218, T2 107, T4 1 0 G1 220 G2 213, G4 217, G3 M4 219, M1-3 103

Before the ref., T1 4 G2 4 ins also वैशंपायन G1 om lines 2310–2351 G3 reads line 2312 twice. — (L 2312) T1 ज्ञानलेश D6 M1 2 विनीतात्मन् (for विहीना)

पिबेयं वा विषं घोरं पतेयं वा महोर्मिषु ॥
आत्मानं वात्र संत्यक्ष्ये शृण्वतां पश्यतां नृपौ ।
इत्युक्त्वा विललापैवं मा मृतेति सदा वदन् ॥

Colophon

वैशंपायन उवाच ।

ततः क्रुद्धोऽथ दुर्वासा धक्ष्यन्निव तयोरसून् ।
एकेनाक्ष्णाथ दुर्वासा रौद्रेणाभियुजा सदा ॥
पश्यन्तौ च दुरात्मानौ रोषव्याकुलितेन्द्रियः ।
कुर्वन्निव तदा लोकान्भस्मभूतानिमान्नृप ॥
ब्राह्मणं चक्षुषा पश्यन्सौम्येनान्येन केवलम् ।
उवाच वचनं राजन्ध्वस्तौ ध्वंसतेति ह ॥
इतो गच्छत राजानौ किं विलम्बथ माचिरम् ।
न वां वचनसमूतं रोषं धारयितुं क्षमः ॥
अन्यथा यो महीपालान्सर्वान्दग्धुमहं क्षमः ।
किमतः साहसं यत्तु यश्च शक्नोति मत्पुरः ॥
दर्पं वा लोकविख्यातः शङ्खचक्रगदाधरः ।
व्यपनेष्यति मन्दत्मौ किं वा वक्ष्यामि सांप्रतम् ॥

तत उत्थाय धर्मात्मा गन्तुमैच्छद्यतीश्वरः ।
ततो निषेद्धुं हंसस्तं यतते स्म यतीश्वरम् ॥
तस्य बाहुं समादाय हंसो नृपवरोत्तमः ।
कौपीनं चिच्छिदे क्रूरः कृतान्त इव सत्तम ॥
यतयोऽन्ये पलायन्ति दिशो दश विचेतसः ॥
कष्टं हेति वदन्विप्रो मित्रभावाज्जनार्दनः ।
न्यवारयद्यथाशक्ति किमिदं साहसं त्विति ॥
दुर्वासाः सत्यधर्मस्तु हन्तुमीशोऽपि तं ततः ।
गन्दं गन्दगुणाचेदं हंसं डिभकमेव च ॥
शापेनाहं समर्थोऽपि हन्तुं राजकुलाधमौ ।
तथापि न करोम्येनं यतयो ह्यत्र ते वयम् ॥
यो हि देवो जगन्नाथः केशवो यादवेश्वरः ।
शङ्खचक्रगदापाणिर्गर्वं वां व्यपनेष्यति ॥
लोके तस्मिन्यदुश्रेष्ठे रक्षत्येव जगत्पतौ ।
युवयोः सर्वथा जीवः सुजीव इति मे मतिः ॥
जरासंधोऽपि वा बन्धुः स च वक्तुं न चेच्छति ।
ईदृशं लोकविद्विष्टं स हि धर्मपथे सदा ॥

M3 यदिष्ट (for यथेष्ट) — (L 2347) D6 T2 G2-4 M1-3 कालस्य (for पापस्य) T1 2 G3 5 M1, 4 -पापम् (for रूपम्) — (L 2348) D6 वात्स्यावो, T3 वात्स्येऽहं (for वात्स्ये वा) Ds3 शिरणानघम् (for °तलं) — (L 2350) Dn Ds2 G2 पुन, T1 4 G4 पुर, G3 पुरा, G5 तदा (for नृपौ) — (L 2351) D6 ब्रुवन् (for वदन्) Dn Ds2 T2 G2-5 मा मृतमिति तौ (G4 त) वदन्, T3 तूष्णीमास जनार्दन (for ᵇ)

Colophon — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds2 D6 T1 2 4 G2-5 M — *Adhy name* Dn Ds1 T1 3 G4 हंसडिभकोपाख्यानम्, D6 M हंसडिभकम् — *Adhy no* Dn2 291, Ds2 292, T1 219, T2 2'1, T3 181, G1 214, G3 219, G4 218, G5 220, M1 3 184, M4 204

(L 2353) D6 M1-3 ■ (for [अ]थ) M रौद्रेणारण्यवासा (for ᵇ) — (T 23>5) D6 M1 2 भस्मीभूतान् (for भस्म°) — (L 2356) D6 T2 G2 सदा सौम्येन केवलम् (for (for ᵇ) — (L 2358) Ds2 ततो (for इतो) Dn1 Ds1 M2 3 चिरस्थत (for °थ) — (L 23>9) M मवद्वचनसभूत (for ᵃ) Dn Ds2 G2 क्षमे, T2 G4 5 M4 क्षमम् (for क्षम) — (L 2361) G2 शक्तो हि (for शक्नोति) — (L 363) D6 T1 M मन्दात्मन् (for मन्दत्मौ) D6 वां, T1 4 M वो (for वा) — D6 om lines 2364–2366 — (L 2364) G2 मन्दात्मा (for धर्मात्मा) G2 यतीश्वरम् (for °श्वर) — (L 2366) M1 बाह्वो, M3 बाहो (for बाहुं) M1 2 -वरोत्तम (for °म) T2 हंसो वरनृपोत्तम (for ᵃ) — (L 2367) T1 G2 4 सत्तम — (L 2371) D6 M3 4 सत्यसंधस् (for °धर्मस्) G2 न हं जनम्; G2 ऽपि सत्तम°; M1-3 न तत्कृतम् (for ऽपि तं ततः) — (L 2372) D6 हंसो (for हंस) — (L 2373) D6 M1 ऽस्मि (for ऽपि) — (L 2374) Dn Ds2 T1 G1 3 4 [अ]स्त, T4 M1 3 4 [ए]तद् (for [ए]वं) M3 तथापि तत्क्षमे राजन् (for ᵃ) — (L 2376) D6 T2 M दर्पं (for गर्वं) D6 M2 3 वो, Cal. ed ते (for वां) — (L 2377) T2 4 G1 3 4 5 M1-3 लोकैः (for लोके) D6 यदुश्रेष्ठो, T3 G1 नृपश्रेष्ठ, G2 5 नृपश्रेष्ठे; M3 यदुश्रेष्ठ (for °श्रेष्ठे) D6 जगत्पती (for °त्पतौ). — (L 2378) G1 सजीव (for सुजीव) M3 इति मे निश्चिता मतिः (for ᵇ) — (L 2379) T1 om (hapl) 2379ᵇ–2381ᵃ D6 T2 G2 M1-3 स च नेच्छ( D6 °ष्य)ति केवलम् (for ᵇ) — G2 om lines 2380–2384 T3 G1 3 om. line 2380 — (L 2380) D6 G4 5 धर्मे (for लोक) D6 T2 धर्मरत, G4 5 M धर्मपथ (for °पथे) — (L 2381) Dn Ds2 T1 3 4 G1 3 न हि, G4 5 स हि (for न स),

एतावता स वा बन्धुर्न स भूयो भविष्यति ।
विद्वेषो हस्तु वां तस्य मागधस्य महीपतेः ॥
श्रुत्वेद घोररूपं ॥ स हि बन्धुः सहेत चेत् ।
धर्मनाशो भवेत्तस्य नात्र कार्या विचारणा ॥
इत्युक्त्वा गच्छ गच्छेति हंसं प्राह पुनः पुनः ।
जनार्दनमुवाचेदं दुर्वासा यतिसत्तम ॥
स्वस्त्यस्तु तव विप्रेन्द्र भक्तिरस्तु जनार्दने ।
संगतिस्तव तस्यास्तु शङ्खचक्रगदाभृतः ।
अद्य श्वो वा परश्वो वा साधुरेव सदा भवान् ॥
न हि साधोर्विनाशोऽस्ति लोकयोरुभयोरपि ।
गच्छ सर्वं पितुर्ब्रूहि ज्ञात्वा वृत्तं यथाखिलम् ॥

Colophon.

वैशंपायन उवाच ।
ततस्तौ हंसडिभकौ क्रुद्धौ कालेन चोदितौ ।
शिक्यं कमण्डलुं चैव विदल दारुमेव च ॥
दण्डान्पात्रनिषेपांश्च छित्त्वा भित्त्वा च सर्वशः ।
तस्मिन्देशे महाराज व्याधेर्मांसान्यदीवहन् ।
भक्षयित्वा ततो देशात्स्वपुरं तौ प्रजग्मतुः ॥
जनार्दनश्च धर्मात्मा स्नेहाद्दत्तुययौ नयो ।
नष्टाविमाविति तदा स मेने दुःखितः परम् ॥
गतेषु तेषु सर्वेषु दुर्वासा यतिसत्तमः ।
पलायनपरान्सर्वानिदमाह यतीश्वरान् ॥
इतो देशाद्विनिर्गत्य पुष्करात्पुण्यसयुतात् ।
मन्द मन्द समाश्वस्य विश्रम्य च ततस्ततः ।
प्रविश्य द्वारका देव शङ्खचक्रगदाधरम् ।
दृष्ट्वा च तस्मै प्रभवे वक्ष्यामो यतिसत्तमा ॥
स हि रक्षत्विदं धर्मवर्त्मनि सस्थितः ।
आद्यो लोकगुरुर्विष्णुर्येत्मात्मा तत्त्वविद्प्रियः ।
उद्धृत्य कण्टकान्सर्वाञ्छशास पृथिवीमिमाम् ॥
स च पापान्महाघोरान्सर्वान्पापकृतान्प्रभुः ।
रक्षेन्नः सकलान्सर्वाञ्ज्ञानेषु नियतात्मनः ।
इदमद्य क्षम विप्रा यानमत्र विधीयताम् ॥
साहस यत्कृत ताभ्या पात्रभेदादि सत्तमाः ।
एतत्सर्वमशेषेण वदाम जनार्दनम् ॥
तथेति ते प्रतिज्ञाय यतयो ज्ञानचक्षुषः ।
छिन्नास्ताभ्या समादाय शिक्य दारुमयं तथा ॥
द्विदलं कर्पटं चैव कौपीनमथ वल्कलम् ।
कमण्डलुं तथा राजन्नर्धप्रोतकपालकम् ।

—(L 2383) Ds T₁ M₁ ₃ सहेयदि, M₃ ₄ भवेयदि (for सहेत चेत्) —(L 2385) Ds हस प्राहुर्मुनीश्वरा (for °) —(2391) Dn₁ Ds₃ सर्वे (for सर्वं) Ds T₁ G₁ वृथा (for ब्रूहि) Ds T₁ M ज्ञानमस्तु तवाखिलम् (for °)

Colophon —*Mention of the lyre* Ds₂ —*Mention of Ahula* Dn Ds₁ T₁ ₂ ₄ G M —*Adhy name* Dn Ds₂ हसडिभकोपाख्यानम्, T₁ ₂ G₁ ₃ हसडिभकदुर्वासदर्शनम्, M हसडिभकम् —*Adhy no* Dn 292, Ds₂ 293, T₁ G₃ 220, T₂ G₁ 222, T₃ 189, G₂ 215, G₄ 219, G₅ M₄ 221, M₁₋₃ 185

(L 2393) Dn Ds₂ T₁ ₃ G₁ ₂ ₆ द्विदल, G₃ वल्कल (for विदल) T₁ ₃ G₁ ₂₋₅ दारुम्; T₄ धाम (for दारुम्) —(L 2395) Ds T₃ G₂ M₁ ₃ मासम् (for मासानि) —(L 2396) Dn Ds₂ G₄ स्वपुरीं (for °र) —(L 2397) G₂ ताभ्याम् (for स्नेहाद्) —(L 2398) Ds दुःखित —(L 2399) G₁ ₃ दुःखितो (for दुर्वासा) M₂ ₄ मुनि (for यति) —(L 2400) T₁ G₁ ₂ प्राह (for आह) —(L 2401) G₂ इदमाह (for इतो देशाद्) T₂ G₁ सच यात (for सयुतात्) T₁ G₃ M₁ पुष्करात्पुण्यसयुतात् (for °) —(L 2402) Ds T₂ समाश्वास्य (for °श्वस्य) G₃ ₅ विश्वस्य (for विश्रम्य) G₃ स्थित (for तत) —(L 2405) Ds₂ T₂ ₃ M₂ धर्मे, M₂ धर्त्रे (for धर्म) —(L 2406) G₂ आर्यो (for आद्यो) Ds G₃ साक्षात् (for विष्णुर्) Ds T₂ ₃ G₁₋₃ M स्वस्था मा (for यत्मात्मा) Ds M स्वस्थवित्, T₃ सर्व° (for तत्त्व°) —(L 2407) T₁ दुष्टकान् (for °कण्टकान्) —(L 2408) Ds M₁ ₃ महाघोराद् (for °रान्) Ds अस्मा-दृश, M₁ ₃ अस्मान्क्षत्र, Cal ed पापकर्म (for सर्वान्पाप) Ds T₁ G₂ बहु (for प्रभु) —(L 2409) T₂ G₁ ₃ सन्यवान् (for सकलान्) G₂ लोकान् (for सर्वान्) G₃ पुण्य निश्चित मानसान, G₃ ज्ञानेषु नियतात्मवान् (for °) —(L 2410) G₁ क्षण (for क्षम) Ds T₁ G₃ सन्मयात्र, T₁ M यानमत्र; T₂ G₁ ₃ यानामत्र (for यानमत्र) —(L 2411) M₁ ₃ वक्ष, M₄ वस्तु (for पात्र) —(L 2412) Ds G₂ जनार्दने —(L 2414) T₂ G₃ ₄ ₅ छित्त्व, G₁ भित्त्व M₄ भित्त्वास (for छिन्नास्) M₁ ₃ महाराज (for समादाय) —(L 2415) Ds M₁ ₃ विदलं (for द्विदलं) —(L 2417) Ds

एतानन्यान्समादाय द्रष्टुं केशवमाययुः ॥
पञ्च चैव सहस्राणि पुरस्कृत्य महामुनिम् ।
दुर्वाससं तपोयोनिमीश्वरस्यात्मसंभवम् ॥
अहोरात्रेण ते सर्वे द्वारकां कृष्णपालिताम् ।
ययुर्दान्ता महात्मानो लोमशाः केशवर्जिताः ॥
प्रातः प्रविश्य राजेन्द्र वापिकाया यतीश्वराः ।
स्नात्वोपस्पृश्य शुचयो यत्नेन महता तदा ॥
द्रष्टुमभ्युद्यता विष्णुं घण्टघोद्धृतितत्परम् ।
एकरूपं समास्थाय सुधर्माद्वारमाययुः ॥

Colophon

वैशंपायन उवाच ।

अथ सर्वेश्वरो विष्णुः पद्मकिञ्जल्कलोचनः ।
श्यामः पीताम्बरः श्रीमान्प्रलम्बाम्बरभूषणः ॥
किरीटी श्रीपतिः कृष्णो नीलकुञ्चितमूर्धजः ।
अव्यक्तः शाश्वतो देवः सकलो निष्कलः शिवः ॥
क्रीडाविहारोपगतः कदाचिदभवद्धरिः ।
कुमारैरपरैः सार्धं साम्बप्रमुखैर्नृप ॥
गोलक्रीडा सुधर्माया मध्ये यादवसत्तमः ।
चकार प्रियकृत्कृष्णो युयुधानेन केशवः ॥
ममाय प्रथमो गोलस्य पश्चाद्भविष्यति ।
इति ब्रुवंस्तदा विष्णुः सात्यकिं कमलेक्षणः ॥
पार्श्वस्था यादवास्तस्य वसुदेवपुरोगमाः ।
उद्धवप्रमुखा राजन्नासेदुः कचिदत्र वै ॥
अन्यव्यापाररहितो भूतात्मा भूतभावनः ।
विजहार यथा रामः सुग्रीवेण पुरा नृप ॥
मध्यंदिने महाविष्णुः शैनेयेन सहाच्युतः ।
विक्रीड्य सुचिरं कृष्ण उपासीत्सयादवः ॥
द्वाःस्थेन वारिताः पूर्वं द्वार्येव च समास्थिताः ।
इदमन्तरमित्येव विविशुस्तां सभां नृप ॥
यतयो दीर्घतपसः पुरस्कृत्य तपोधनम् ।
दुर्वाससं सुमनसो ददृशुर्यादवेश्वरम् ॥
गोलक्रीडासमायुक्तं करसंस्थितगोलकम् ।
विक्षिपन्तं जगन्नाथं पादाङ्गुष्ठेन गोलकम् ॥
पद्मपत्रविशालाक्षं वीक्षन्तं सात्यकिं हरिम् ।
एकेनाक्ष्णा ह्लादयन्तं परेणालोक्य गोलकम् ॥
यतयश्च महाराज प्रत्यदृश्यन्त तत्पुरः ।
कृष्णाय पुण्डरीकाक्ष, सात्यकिर्निलभद्रकः ।
वसुदेवस्तथाक्रूर उग्रसेनस्तथा नृपः ॥
अन्ये च यादवाः सर्वे सभ्रमं प्रतिपेदिरे ।
इदं किमिदमित्येव व्याससक्तमनसोऽभवन् ॥
पृष्ठतोऽप्यनुगच्छन्त विपक्षन्त जगत्त्रयम् ।
अर्धकोपीनवसनं स्मरन्त कमपि द्विजम् ॥

---

सर्वान् ( for अन्यान् ) — ( L. 2418 ) T1 पञ्च ( for चैव ). G1 s नमस्कृत्य ( for पुर° ) Dn Ds3 T1 G2 महामुनीन्, G4 s M3 °मुनि ( for °मुनीन् ) — ( L. 2421 ) T2 G2 s M1-s शान्ता, G3 क्रान्ता ( for दान्ता ) D6 केशवर्जिता ( for °वर्जिता ) — ( L. 2423 ) D6 [उ]पस्पृश्य, T2 G2 °स्पृश्य ( for °स्पृश्य ) — ( L. 2425 ) T1 G1-s सुधर्मायामवस्थितम् ( for ° )

Colophon — *Mention of the Epic* Ds2 — *Mention of Khila* Dn Ds1 D6 T1, 2 4 G M. — *Adhy name* Dn Ds1 हसडिमकोपाख्यानम्, T1 G2 यतीनां द्वारकाप्रवेश । M हंसडिभकम् ; — *Adhy no* Dn 293; Ds1 294, T1 G2 2-1; T2 G1 223, T4 190, G2 216, G4 220, G5 222, M1-s 196

( L. 2427 ) D6 श्याम पीताम्बरधर ( for ° ) — ( L. 2431 ) T2 G1 4 नृपे ( for नृप ) — ( L. 2433 ) D6 T2 G2 चकार प्रियकृत्पुष्टो ( for ° ) — ( L. 2436 ) G4 सर्वे ( for तस्य ) — ( L. 2440 ) G2 M1 s मध्यदिनात् ( for °दिने ) — ( L. 2442 ) D6 T2 [आ]वेदिता ( for वारिता ) D6 द्वारे चैव ( for द्वार्येव च ) M समाश्रिता ( for °स्थिता ) — ( L. 2446 ) Ds3 G2 M समासक्त ( for °युक्त ) — Dn Ds1 om line 2447 — ( L. 2448 ) Dn Ds3 M4 विष्णुं त ( for वीक्षन्त ) — ( L. 2449 ) D6 M2 ह्लादयन, T2 M1 s °यता ( for °यन्त ) Dn T1 s G [अ]न्येन, Ds2 [अ]नेन ( for [आ]लोक्य ) G2 प्रत्यदृश्यन्ततत्पुर ( for ° ) — ( L. 2451 ) T2 G2 M4 वृष्णिप ( for कृष्णाय ) T1 2 4 G1 2 4 5 M4 पुण्डरीकाक्ष ( for °क्ष ) — ( L. 2452 ) D6 दृष्ट्वा, M1 s कद्ध ( for [अ]क्रूर ) — ( L. 2453 ) T4 G2 तत्रे ( for अन्ये ) M1-s संप्रपेदिरे ( for प्रति° ) — ( L. 2455 ) G1 T1 s पृष्ठतोऽप्यनुसर्पन्ते ( G1 °न्ति ), G2 °तो ह्यनुसर्पन्त, G1 4 °तो ह्यवसर्पन्ति; M2 °तोऽप्यनुगच्छन्ति ( for ° ) G2 जनार्दनम् ( for जगत्त्र

अन्तस्तापसमायुक्तं छिन्नदण्डधरं यतिम् ।
अतिज्वलन्तं रोषेण हंसासादितकल्मषम् ॥
नेत्रोत्थितमहावह्निं प्रेक्षन्तं यादवेश्वरम् ।
दुर्वाससं ते ददृशुर्भीता यादवसत्तमाः ॥
किं करिष्यत्ययमो क्रुद्धः किं वा वक्ष्यति नः प्रभुः ।
इति प्राञ्जलयः सर्वे यादवाः समपेदिरे ।
इदमासनमित्येवं किंचिदुत्थाय वृष्णयः ॥
ततः कृष्णो हृषीकेशः किंचिदुत्थाय सत्पुरः ।
इदमासनमित्येवं स्थीयतामिह निश्चितः ।
अहमत्र स्थितो विप्र किं करोमीति चाब्रवीत् ॥
ततः किंचिदिवासीन आसने यतिविग्रहः ॥
आसने संस्थिते तस्मिन्यतयो वीतमत्सराः ।
आसनानि यथायोगं भेजिरे निर्वृताः किल ॥
अर्घ्यादिसमुदाचारं चक्रे कृष्णः किरीटभृत् ।
आह भूयो हृषीकेशो यतिं दुर्वाससं प्रभुम् ।
किमर्थं ब्रूहि विप्रेन्द्र अस्मिन्प्रत्यागमो हि वः ॥
दृष्टं वाप्यथ वा किंचित्कारणं योऽस्ति वा महत् ।
मन्यासिनो द्विजश्रेष्ठा यूयं विगतकल्मषाः ॥
निःस्पृहाश्च सदा यूयमसक्तो द्विजपुंगवाः ।
प्रार्थ्यं नाम न चैवास्ति स्पृहा नैवास्ति यो यत ॥
स्पृहाप्रेरितकर्माणः क्षत्रियान्यांस्ति सुव्रताः ।
निरस्यमाणमस्माभिर्विप्र किंचिन्न दृश्यते ॥

न जाने कारणं ब्रह्मन्युष्मदागमनं प्रति ।
एतावता चानुमेयं किंचित्कारणमस्ति हि ।
तद्ब्रूहि यदि विद्येत शक्तो धारयामहे वयम् ॥
इत्युक्तवति देवेशे चक्रपाणौ जनार्दने ।
तस्यापि राजन्विप्रस्य भूयः कोपो महानभूत् ।
तस्मादभ्यधिकः पूर्वात्कोपः संजायते महान् ॥
दिधक्षन्निव लोकांस्त्रीन्भक्षयन्निव पश्यतः ।
रोषरक्तेक्षणः क्रुद्धो ह्मन्निव दहन्निव ।
उवाच वचनं विष्णुं दुर्वासाः क्रोधमूर्छितः ॥
न जान इति कस्मात्त्वं ब्रूषे नो यादवेश्वर ।
जानामि त्वामहं देव वञ्चयन्निव भाषसे ।
पुरातना वयं विष्णो पूर्ववृत्तान्तवेदिनः ॥
तथा हि देवदेवोऽसि मायामानुषदेहधाम् ।
निगूहसे प्रभुस्तः कस्मान्नो जगतीपते ॥
सोऽसि ब्रह्मविदां मूर्तिस्तदेतत्परमं पदम् ।
यदव्यक्तं परं ब्रह्म यच्च ज्ञाता वयं पुरा ॥
यतो विश्वमिदं भूतं तदेतत्परमं पदम् ।
यच्च स्थूलं विजानन्ति पुरा तत्त्वेन चेतसा ॥
पुराविदोऽथ विश्वेश तदेतत्परमं वपुः ।
कर्मणा प्राप्यते यत्तु यत्स्मृत्वा निर्वृता वयम् ॥
प्रत्यक्षमपि यद्रूपं नैव जानन्ति मानुषाः ।
न हि मूढधियो देव न वयं तादृशा हरे ॥

पम्) —(L 2458) Dn Ds3 T1 2 4 G अन्तर्ज्वलन्तं (for अतिज्व°) D6 °कश्मलम् (for °कल्मषम्) T1 G5 हंस स्मारितकल्मषम्, T4 G4 हंससमादित° (for °). —(L 2459) G3 नेत्रोद्भूत (for °त्थित) —(L 2461) D6 T4 संक्रुद्ध ; G3 [अ]संक्रुद्ध (for [अ]सौ क्रुद्धः). —(L 2463) Dn Ds3 T1 3 G3 3-5 प्रतिपेदिरे (for समप°) —(L 2464) D6 G1 उत्पत्य (for तत्थुत्य) T3 G2, 3 तत्पर (for सत्पुर) —(L 2465) D6 G1 इति (for इद). —(L 2466) M1 4 अथ (for अत्र) Dn Ds3 D6 T1 2 4 [illegible] —(L 2469) Ds3 यथा [illegible] (for कृष्ण) [illegible] —(L 2472) M1 2 अस्मान् (for अस्मिन्) G3 नृप (for हि वः) —(L 2473) D6 T6 G2 [अ]भवत् (for महत्). —(L 2474) D6 M1 मत्सरा (for कल्मषा). —(L 2475) D6 T1 M1-3 -पुंगव (for °वा°) —(L 2476) D6 T4 G3 प्रार्थ्य (for प्रार्थ्यं). — D6 om lines 2477-2481. —(L 2477) M धर्माणि (for कर्माणि). —(L 2478) G4 विद्यते (for दृश्यते). —(L 2479) G3 M1-3 मया (for प्रति). —(L 2484) D6 T1 G3 M मम ह (for महान्). —(L 2486) M3 दुर्वासाय हसन्निव (for °) —(L 2489) Dn Ds3 T1, 2, 4 G1, 2, 4 देव (for देव). —(L 2491) T1 देवेशो (for देवोऽसि) —(L 2493) T1 4 G1 4 5 तदेवम् (for तदे तत्) —(L 2494) Dn यदा भाव्यं पुरा महा ; Ds3 T1, 2, 4 G M1 यदव्यक्तं पुरा (T1 परं) महा ; D6 यदव्यक्तंपुरा महा (for °). —(L 2497) D6 T4 यदम् (for यत्तु). —(L

सत्येनैव शपाम्यद्य मा रोषवशमन्वगाः ।
रक्षां वोऽहं करिष्यामि हत्वा तौ च नृपाधमौ ॥
जानामि तौ दुरात्मानौ युष्मद्दोषकरौ हि तौ ।
श्रुतं च पूर्वमस्माभिस्तीक्ष्णदण्डधराविति ॥
अत्यन्तबलिनौ मत्तौ गिरीशवरदर्पितौ ।
नाल्पप्रयत्नससाध्यौ जरासंधहितैषिणौ ॥
प्राणानपि तयो राजा दास्यत्येव न संशयः ।
जरासंधो महीपालो विनानेन यतेमहि ॥
जये तयोर्विप्रवर्य तत्र श्रेयो भवेत नः ।
यत्र यत्र च तौ गत्वा स्थिताविरयलुत्तम ।
तत्र तत्र च हन्ताहं नात्र कार्या विचारणा ॥
गच्छध्वं यतयः स्वैरं निजकार्यपरायणाः ।
अचिरेणैव कालेन जेष्यामि रणपुंगवौ ॥
ततः प्रीतः प्रसन्नात्मा यादवेश्वरमाह सः ।
स्वस्त्यस्तु भवते कृष्ण जगतां स्वस्ति सर्वदा ॥
किं नु नाम जगन्नाथ दुःसाध्यं तव केशव ।
त्रिलोकेश त्रिधामासि सर्गसंहारकारकः ॥
देवानामपि देवेश सर्वत्र समदर्शनः ।
विष्णो देव हरे कृष्ण नमस्ते चक्रपाणये ॥
नमः स्वभावशुद्धाय शुद्धाय नियताय च ।
शब्दागोचर देवेश नमस्ते भक्तवत्सल ।
अज्ञानादथ वा ज्ञानाद्यन्मयोक्तं क्षमस्व तत् ॥
त्वमेवाहं जगन्नाथ नावयोरन्तरं पृथक् ।
अतः क्षमस्व भगवान्क्षमासारा हि साधवः ॥

भगवानुवाच ।

क्षन्तव्यं भवता विप्र क्षमासारा वयं सदा ।
सन्यासिनः क्षमासाराः क्षमा तेषां परं बलम् ॥
क्षमा मोक्षकरी नित्यं तत्त्वज्ञानमिव द्विज ।
क्षमा धर्मः क्षमा सत्यं क्षमा दानं क्षमा यशः ॥
क्षमा स्वर्गस्य सोपानमिति वेदविदो विदुः ।
तस्मात्सर्वप्रयत्नेन क्षमां पालयत स्वकाम् ॥
प्रत्यक्षज्ञानसंयुक्ता यूयं सर्वे यतीश्वराः ।
एते ते यतयो विप्राः पूजनीया मयाद्य वै ॥
भोक्तव्या यतयो विप्रा भिक्षुकाः सर्व एव हि ।
तथेति ते प्रतिज्ञाय भोक्तुमैच्छन्हरेर्गृहे ॥
ततः स्वभवनं विष्णुः प्रविश्य हरिरीश्वरः ।
चतुर्विधं तदाहारं कारयित्वा यथाविधि ।
भोजयामास तान्सर्वान्यतीन्यतिवरार्चितः ॥
छित्त्वा छित्त्वा च देवेशो दुकूलानि मृदूनि सः ।
ददौ तेभ्यस्तदा विष्णुः सर्वेभ्यो जनमेजय ।
ते च प्रीता यथायोग यतः पूर्वं ततो गताः ॥

Colophon

Dn Ds2 क्षमापरो, G3 शान्ति° (for क्षम°) — (L. 2573) D6 T1 G3 ब्रह्मा वा चतुराननं (for °) — (L. 2574) Ds3 G3 M1-3 सानुजौ (for °रौ) — (L. 2575) M3-4 [अ]त्र (for [अ]द्य) Dn Ds1 T3-4 G1-2-3 मा रोषवशगो भव (for °) — (L. 2577) D6 T3 युष्मद्द्वेष (for °दोष-) D6 T1 वधे; T2 G3 M1-3 यते (for हि तौ) — (L. 2579) D6 T1-2 G1-4 M -गर्वितौ (for दर्पितौ) — (L. 2580) M1 -साध्यौ तौ (for ससाध्यौ) — (L. 2582) Dn D6 T1 G3 M1-3 तेन (for [अ]नेन) Bom Poona eds G(ed.) त्रिना तौ जयते महीम् (for °) — (L. 2583) D6 G2 ताभ्यां (for तयोर्) M4 भविष्यति; Bom Poona eds G(ed.) भवेत्तव (for भवेत न) — (L. 2585) D6 T4 मत्त्वा (for हन्त्वा). — (L. 2587) G3 नर (for रण-) — (L. 2588) G3 प्रीतौ (for प्रीत) — (L. 2589) Dn Ds2 T1-2 G2-3 M4 कुर्वते (for सर्वदा). — (L. 2591) D6 T2 G2 सर्व- (for सर्ग)
M4 -कारण (for -कारक) — (L. 2595) Dn Ds2 D6 T1-2 G2-4-5 M1 शब्दगोचर (for शब्दा°) — D6 कृष्ण (for भगवान्) — (L. 2602) Cal ed कर्म (for सत्यं) and सत्यं (for दानं) — (L. 2605) D6 G1 नित्यं यूयं (for यूयं सर्वे) — (L. 2606) Dn1 Ds2 ■ एते (by transp), Dn2 Ds2 M4 य एते D6 G3 M1-2-4 त्रिप्र (for विप्रा). D6 T4 प्रमाद्य, T1 G4-5 समाद्य (for मयाद्य) — (L. 2607) D6 T2 M2 त्रिप्र — (L. 2611) D6 T4 G2 त्रिमान् (for सर्वान्) Dn2 सुरार्चित (for -वरा°) — (L. 2612) T3 G1-4 भित्त्वा भित्त्वा; T4 छित्त्वा भित्त्वा (for छित्त्वा छित्त्वा). D6 बहूनि (for मृदूनि) — (L. 2614) T3 G1-4-5 M1-3 यथा (for यथ-) G4 यतयस्तत्र ते गता (for °)

COLOPHON — *Mention of the Epic* Ds1 — *Mention of Khila* Dn Ds1 D6 T1-2-4 G M — *Adhy name* Dn Ds1 T1 हंसडिभकोपाख्यानम्, D6 M4 हंसडिभकम्; T4

वैशंपायन उवाच ।

दुर्वासास्त्वथ तत्रैव नारदेन सहायवान् ।
चिन्तयन्ब्रह्मणस्तत्त्वं विजहार यथासुखम् ।
भगवानपि गोविन्दस्तयोर्वधममन्यत ॥
ततस्तौ हंसडिभकौ तस्मिन्काले महीपते ।
ब्रह्मदत्तं महीपालं पितरं वीर्यशालिनम् ।
प्रावोचतामिदं वाक्यं सामन्तजनसंसदि ॥
राजसूयं महायज्ञं पितः कुरु सुयन्त्रितः ।
अस्मिन्मासि नृपश्रेष्ठ यतामो यज्ञसिद्धये ॥
आवां तेऽद्य महाराज दिशां विजयतत्परौ ।
यतिष्यावो बलैः सार्धं रथैर्नागैर्हयैरपि ॥
संभारा यज्ञसिद्ध्यर्थमानेतव्या नृपोत्तम ।
तथेति स महाराजो ब्रह्मदत्तोऽब्रवीत्तदा ॥
जनार्दनस्तु विप्रेन्द्रो दृष्ट्वा साहसतत्परौ ।
अशक्यमिति मन्वानो वयस्यं हंसमब्रवीत् ॥
शृणु हंस वचो मह्यं श्रुत्वा निश्चित्य वीर्यवान् ।
आयुष्मन्साहसं कर्तुं निश्चितोऽसि नृपोत्तम ॥
स्थिते भीष्मे जरासंधे बाह्लीके च नृपोत्तमे ।
किं च वीरेषु सर्वेषु यादवेषु नृपोत्तम ॥
भीष्मो हि बलवान्वृद्धः सत्यसंधो जितेन्द्रियः ।
त्रिःसप्तकृत्वः पृथिवीं यो जिगाय भृगूत्तमः ।
तं युद्धे जितवान्भीष्मः सर्वक्षत्रस्य पश्यतः ॥
जरासंधस्य माहात्म्यं लब्धवान्वेत्ति संयुगे ।
वृष्णिवीरास्तु ते सर्वे कृतास्त्रा युद्धदुर्मदाः ॥
तत्र कृष्णो हृषीकेशो जितशत्रुः कृती सदा ।
जरासंधेन सहितः सदा युद्धे जितश्रमः ।
प्रमुखे तस्य न स्थातुं शक्तो त्रैलोक्यनृपोत्तम ॥
बलभद्रस्तथा मत्तः क्रुद्धो यदि भवेद्बली ।
लोकानिमान्समाहर्तुं शक्तोऽसीति मतिर्मम ॥
तथा च सात्यकिर्वीरः शक्तो जेतुं रणे रिपून् ।
तथान्ये यादवाः सर्वे कृष्णमाश्रित्य दंशिताः ॥
अस्माभिश्च कृतः पूर्वं विरोधो यतिभिः सह ।
दुर्वासा यतिभिः सार्धं गतो द्रष्टुं स केशवम् ॥
इति श्रुतं नृपश्रेष्ठ ब्राह्मणाद्गोपुमागतात् ।
तथा सति यथा सिध्येत्तथा चिन्त्यं च मन्त्रिभिः ।
ततः पश्चाद्विधास्यामो राजसूयं महाक्रतुम् ॥

हंस उवाच ।

को नाम भीष्मो मन्दात्मा वृद्धो हीनबलः सदा ।
आवयोः पुरतः स्थातुं शक्तः किल स वृद्धकः ॥
यादवा इति चित्रं नः शक्ताः स्थातुं रणे द्विज ।
कश्च कृष्णः पुरः स्थातु बलदेवश्च सत्तकः ॥
शैनेयश्चापि विप्रेन्द्र स्थातुं नालं निरीक्षितुम् ।

---

G₁ हंसडिभकम्, G₃ हंसडिभके यतिभोजनम् — *Adhy* no D₂ 291; D₃ 296; T₁ G₂ 222; T₃ G₁ 225, T₂ 192; G₄ 218; G₅ 223, G₆ M₁ 221, M₂ ₃ 188

(L. 2615) Dn D₃ T₁ ₂ G₃ ₄ ₅ महात्मना (for सहायवान्) — Before lines 2617, G₃ ins वैशंपायन — (L. 2617) Dn D₃ T₁ ₂ G₁ ₃ ₄ M₃ यासम्; D₂ दिशम् (for यथम्) — (L. 2618) D₃ G₁ ₄ महीपतौ, Bom. Poona eds G(ed) °पतिम् (for °पते) — (L. 2620) Dn प्रावोचताम्, D₃ D₄ प्रोचाव तम्; M₁ ₂ प्रोचाच तम्; M₃ प्रोचाचेताम् (for प्रावोच°) Dn D₃ G₁ ₂ ₃ समन्तात् (for सामन्त ) — (L. 2621) Dn D₃ सुयन्त्रत; D₄ संयन्त्रित; T₃ सुमन्त्रित (for सुयन्त्रित ) — (L. 2622) Dn D₃ T₁ ₂ ₄ G₁ ₃-₅ यतावो (for °मो ) — (L. 2623) M₁-₃ द्विजौ (for दिशां ) — G₃ om (hapl ) lines 2624–2627 — (L. 2624) D₃ T₃ प्रयतावो (for यतिष्यावो ) — (L. 2626) Dn D₃ G₃ महाबाहो, T₃ ₄ M₁ °राम (for °राजो ) — (L. 2629) T₁ ₃ G₂ ₄-₆ निरत (for मह्यं ) D₂ T₂ ₄ G₁ ₃ ₅ M निश्चित्य (for °त्य ) — (L. 2630) Dn D₃ उद्यतो (for निश्चितो ) — (L. 2631) M₁-₃ भृगूद्वह (for °त्तम ) D₃ T₃ G₃ त्रिभाग भृगुनन्दन (for °) — (L. 2635) T₃ युद्धेषु (for स युद्धे ) — G₁ om lines 2636–2637 — (L. 2639) G₃ कृतश्रम (for जित° ) — (L. 2640) D₂ T₃ M₃ ₄ क्व (for न ) T₃ G₁ ₂ ₃ M₁ ₂ ₃ सुरोत्तम — (L. 2641) D₂ सदा (for तथा ) — (L. 2644) M₃ ₄ गर्विता (for दंशिता ) — (L. 2645) D₂ वसुभि (for यतिभि ) — (L. 2646) T₃ वसुभि (for यतिभि ) — (L. 2647) D₂ सुतं (for श्रुतं ) D₂ G₃ ₄ M₁ ₂ ब्राह्मणाद्गुरुमागतात् (for °) — (L. 2652) T₁ G₁ रणे स्थिरे (for रणे द्विज ) — (L. 2653) G₁ कृष्ण सः (for सत्तक ) — (L. 2654) D₂ द्रष्टुं (for निरीक्षितुं ), Dn D₃

जरासंधस्तु धर्मात्मा बन्धुरेव सदा मम ॥
गच्छ विप्र यदुश्रेष्ठ ब्रूहि मद्वचनात्त्वरन् ।
दीयतां करसर्वस्वं यज्ञार्थं लवणं बहु ॥
लवणानि बहून्याशु गृह्य वेशर माचिरम् ।
आगच्छ त्वरितं कृष्ण न ते कार्यं विलम्बनम् ।
इति ब्रूहि यदुश्रेष्ठं याहि त्वरितविक्रम ॥
न ब्रूयाश्चोत्तरं विप्र शपेयं त्वां प्रियोऽसि मे ।
मित्रभावादिदं ब्रूहि शपामि त्वां पुनः पुनः ॥
इति सचोदितो विप्रो नोत्तरं प्रत्यभाषत ।
मित्रभावात्तथा राजन्स्नेहाच्च जनमेजय ॥
जनार्दनस्तु धर्मात्मा नित्यं गन्तुं समुद्यतः ।
अद्य श्वो वा परश्वो वा गच्छामीति यतेन सः ॥
देवं द्रष्टुं जगद्योनिं शङ्खचक्रगदाधरम् ।
एक एव च धर्मात्मा हयमारुह्य सत्वरम् ॥
प्रातरेव जगामाशु द्रष्टुं द्वारवतीं द्विजः ।
हरिं कृष्णं हृषीकेशं मनसा संस्मरन्द्विजः ॥

Colophon

वैशंपायन उवाच ।

ततः प्रायाद्धरिं द्रष्टुं ब्राह्मणो ब्रह्मवित्तमः ।
हयेनैकेन राजेन्द्र त्वरितं स ययौ नृप ॥
यथा निदाघसमये सूर्यांशुपरिपीडितः ।
पान्थो याति जलं दृष्ट्वा त्वरितं तत्पिपासया ।
धावत्येव तथा विप्रो हरिं द्रष्टुं जनार्दनम् ॥
गच्छन्स चिन्तयामास चोदयन्हयमुत्तमम् ।
हंस एव यथा नित्यं कुर्यात्प्रियहितं मम ।
तथा हि प्रेषितस्तेन हरिं पश्येत्यहं प्रभुम् ॥
अहमेव सदा धन्यो मत्तो ह्यभ्यधिको न च ।
यतो द्रक्ष्याम्यहं विष्णुं वसन्तं द्वारकापुरे ॥
सा हि मे जननी धन्या हरिं दृष्ट्वा पुनर्गतम् ।
कृतार्थं सर्वथा पुत्रं द्रक्ष्यत्येषा मनस्विनी ॥
मुरमुग्निद्रहेमाब्जकिञ्जल्कसदृशप्रभम् ।
द्रक्ष्यामि देवदेवस्य चक्रिणः शार्ङ्गधन्वनः ॥
वपुर्द्रक्ष्याम्यहं विष्णोर्नीलोत्पलदलच्छवि ।
शङ्खचक्रगदाशार्ङ्गवनमालाविभूषितम् ॥
नेत्रे ते देवदेवस्य पद्मकिञ्जल्कसप्रभे ।
पश्याम्यहमदीनात्मा नष्टदुःखोऽस्मि निर्वृतः ॥
अपि द्रक्ष्यति योगात्मा सौम्येनैव स्वचक्षुषा ।
अपि वा मत्प्रियं ब्रूयात्स्वस्ति चेति च वा वदेत् ।

T3 स्यातुं न इति चिन्तय, T1 G1 3-5 M3 स्यातुं न इति चिन्तना (for °) — (L 2657) Dn Ds3 सुन्दरं (for लवण) — (L. 2658) Bom Poona eds G(ed) [न]च (for [आ]शु) — (L 2659) T1 3 4 G M3 4 न ते कार्या विलम्बना (for °) — (L 2660) D6 T1 2 G2 3 M3 विक्रम (for °म) — (L. 2661) M3 शपेऽहं (for °य) — (L 2662) D6 G1 मर्यात्स्येतथ्, M इदं वचिम (for इदं ब्रूहि) Dn2 Ds3 G1 3 5 M3 पश्यामि (for शपामि) — (L. 2666) D6 T3 वदस्तु (for यतेन) — (L. 2668) M3 उपाश्य (for आरुह्य) — (L. 2669) M1 3 हरिम् (for द्विज) — T3 om line 2670 — (L. 2670) M3 कृष्णं विष्णुं (for हरिं कृष्णं) — After line 2670, G3 ins.
20** प्रभुं कृष्णं हृषीकेशं मनसा सस्मरन्हरिम् ।

COLOPHON — *Mention of the Epic* Ds2 — *Mention of Ahila* Dn Ds3 D6 T1 3 4 G M — *Adhy name* Dn Ds3 T1 3 G1 4 हंसडिम्भकोपाख्याने जनार्दनगमनम्, T3 भविष्यपर्वणि हंसडिम्भकम्, G3 जनार्दनगमनम्, M हंसडिम्भकम् — *Adhy no* Dn2 226, Ds3 297; T1 G3 224, T2 G1 226; T3 193, G2 219, G4 223, M1-3 180, M4 225

(L. 2671) Dn Ds3 T4 G4 विष्णुं (for द्रष्टुं) — (L. 2672) M त्वरिते पुण्यवातयम् (for °) — (L. 2673) D6 G3 -दीपित (for -पीडित) M सूर्यांशुप्रतिदीपित (for °) — (L. 2674) M1-3 व्रजत (for याति) G3 त्वरितो हि पिपासया (for °) — (L 2675) Ds3 D6 T3 4 G3 4 M जनार्दन — (L 2677) Dn Ds3 G3 M प्रियो मम, D6 यथा सत्य, G1 सदा नित्य (for यथा नित्यं). D6 M1 3 4 कुर्वन् (for कुर्यात्) — (L. 2678) Dn Ds3 D6 G3 3 पश्याम्यहं (for पश्येत्यहं) — (L. 2679) G3 सत्यो (for धन्यो) G1 भुवि (for न च) — D6 T3 G3 om. lines 2680°-2685* — (L 2682) *Dn Ds3* T3 G1 3-6 देवी, T3 देव (for पुत्र) — (L 2684) Dn Ds3 T3 G4 M3 -धन्विन (for धन्वन) — (L. 2686) D6 G1 -खड्ग- (for -शार्ङ्ग) — (L. 2687) G3 M3 4 सन्निभे (for सप्रभे) — (L. 2689) M1 3 द्रक्ष्यसि (for °ति) — (L 2690) G4 मां (for वा) — (L. 2691) D6 देवम्, T1 G3 देहं (for यत्र्) Bom Poona eds G(ed) ततस् (for

प्रसीदतु सदा विष्णुरयुक्तं वक्तुमिच्छतः ॥
आलोलकुण्डलयुगं हरिचन्दनचर्चितम् ।
स्फुरत्केयूररत्नार्चिर्बाहुद्वयविराजितम् ॥
सद्योद्धृतमहाशङ्खं रश्मिजालविराजितम् ।
प्रोद्यद्भास्करसंकाशं चक्रज्वालावभासितम् ॥
प्रोज्ज्वलत्करकङ्कणयुतं तप्तजाम्बूनदाङ्गदम् ।
पीतकौशेयवसनं विस्तीर्णोरस्कमच्युतम् ॥
कदा द्रक्ष्यामि देवेशमिदानीमथ वान्यदा ।
सर्वथा कृतकृत्योऽहं यद्गुरुर्बुद्धिमुद्यतः ॥
नमो मह्यं नमो मह्य यतो द्रष्टुमहं हरिम् ।
उद्यतोऽस्मि जगन्नाथं बलभद्रसहायदम् ।
द्रक्ष्याम्यद्यतमथैव विष्णुं जिष्णुं जगद्गुरुम् ॥
श्रीहारकौस्तुभरुचिस्फुरितोरुवक्षः
पीताम्बरं मकरकुण्डलपङ्कजाक्षम् ।
कृष्णं किरीटदरचक्रगदोर्ध्वहस्तं
तेजोमयं मम हरेर्वपुरस्तु भूत्यै ॥
वेदोदधौ विविधशास्त्रमहाभियोग-
निष्णातशुद्धमतिमन्दरमथ्यमाने ।
उद्योतमानममरैरनिशं निषेव्यं
नारायणाख्यममृतं प्रपिबामि चाद्यम् ॥
ध्येयं मुमुक्षुभिरमेयमनाद्यनन्तं
स्थूलं सुसूक्ष्मतरमेकमनेकमाद्यम् ।
ज्योतिस्त्रिलोकजनकं त्रिदशैकवन्द्य-
मक्ष्णोर्ममास्तु सततं हृदयेऽच्युताख्यम् ॥
चिन्तयन्निति विप्रेन्द्रो ययौ द्वारवतीं पुरीम् ।
मत्वा कृतार्थमात्मानं वाहयन्हयमुत्तमम् ।

Colophon.

वैशंपायन उवाच ।

स निवेदितसर्वस्वो द्वाःस्थेन हि जनार्दनः ।
अथ प्रविश्य धर्मात्मा सुधर्मां वै द्विजोत्तमः ॥
अपश्यद्देवदेवेशं सुधर्माकृतिसंस्थितम् ।
बलभद्रेण सयुक्तमध्यासितमहासनम् ॥
अमतःस्थितगाङ्गेयं पार्श्वतःस्थितनारदम् ।
दुर्वाससा कृतकथमुग्रसेनपुरःसरम् ॥
गायद्गन्धर्वमुख्यैश्च नृत्यदप्सरसां गणैः ।
सेव्यमानं महाराज सूतमागधबन्दिभिः ॥
उद्गीयमानयशसं माधवं मधुसूदनम् ।
उद्गीयमानं विप्रैश्च सामभिः सामगैर्हरिम् ॥
दृष्ट्वा प्रीतमना विष्णुं प्रोवाच पुलकच्छविः ।
नाम्ना जनार्दनोऽस्मीति ननाम चरणौ हरेः ।

-युत ( for -युग ) — ( L 2737 ) D6 G3 स्फुरत्किरीटकेयूररत्नाचिर्बाहुराजितम् — T1 om lines 2738–2739 ᵃ D6 T4 G3 om line 2738 — ( L 2738 ) Dn G2 s सद्यो धौतम्; T2 G1 s सद्योत्थित ( for सद्योद्धृत ) T3 M1–3 -महाशङ्ख ( for °ङ्खं ) — ( L 2739 ) Dn Ds3 T1 G1 s–s M1 चक्रज्वालाविराजितम्, D6 °प्रभासितम्, G3 °महासितम् ( for °ᵇ ) — ( L 2742 ) M1 s गोविन्दम् ( for देवेशम् ) — ( L 2747 ) Dn T1 s G श्रीकौस्तुभोद्भवरुचि ( for श्रीहारकौस्तुभ ) — ( L 2748 ) D6 T4 -पङ्कजास्यम्, G2 °जाक्षम् ( for °जाक्षम् ) — ( L 2749 ) Dn Ds1 T2 G1 s s s M3 -चर, T1 -धर ( for -दर ) D6 T1 G3 कृतोर्ध्वहस्तम् ( for गदोर्ध्व° ) — Ds2 om lines 2751–2773 — ( L 2751 ) Dn त्रिशद- ( for विविध ) T3 -योगे ( for योग ) — ( L 2754 ) D6 प्रविशामि ( for प्रपिबामि ) Dn D6 चाद्य, T3 s s G1 s चाद्य ( for चाद्यम् ) — ( L 2755 ) D6 अनन्तमीड्यं, T3 अनन्तमाद्यं ( for अनाद्यनन्तं ). — ( L 2757 ) M3 s -जननं ( for °कं ) — ( L 2758 ) G3 क्षेमं ( for मक्ष्णोर् ) D6 T4 हृदये ( for सततं ) D6 T4 अनिशम्, M4 धृतम् ( for हृदये ) — ( L 2760 ) D6 G3 कृत्वा ( for मत्वा ) M1 s चोदयन् ( for वाह° ) D6 हरिम् ( for हयम् )

Colophon om in Ds2 — *Mention of Khila* Dn Ds1 T1 s s G1 s M — *Adhy name* Dn हंसडिम्भकोपाख्यानम्, T1 s G1 M4 हंसडिम्भकोपाख्याने जनार्दनकृतार्थताबुद्धि, T4 हंसडिम्भकोपाख्याने विप्रस्य द्वारवतीगमनम्, G3 जनार्दनकृतार्थताबुद्धि — *Adhy no* Dn 297, T1 G3 225; G2 220, G1 224, M1–3 190, M4 226

G3 om the ref — ( L 2761 ) D6 T4 G3 ततो निवेदितसर्वो ( for ° ) T4 G1 स ( for हि ) — ( L 2763 ) M4 अथ प्रविश्य देवेशं ( for ° ) D6 T1 s G3 M1 s -कृत; M1 s मध्य ( for कृति ) — G3 om lines 2766–2770 — ( L 2766 ) Dn T1 s G1 s s -पुरस्कृतम् ( for -पुर सरम् ) — ( L 2769 ) D6 G3 M उत्कृष्यमानयशसं ( for ° ) — ( L 2770 )

शब्दं शब्दविदः प्राहुस्त्वामेव पुरुषोत्तम ।
तथा सति हृषीकेश किं त्वमात्थ वदेति माम् ॥
तथापि शृणु देवेश चोदितोऽसि यतस्त्वया ।
यदेन्यसद्देवैतत्तस्माद्वक्ष्यामि माधव ॥
राजसूयेन यागेन ब्रह्मदत्तोऽद्य यक्ष्यति ।
तदर्थं प्रेषितस्ताभ्यां हंसेन डिभकेन च ॥
करार्थं यदुमुख्येभ्यस्त्वत्र चागमनाय च ।
लवणं बहु देयं ते यज्ञार्थं तस्य केशव ॥
इत्यर्थं प्रेषितस्ताभ्यां करं देहि तदाज्ञया ।
इदमप्यपरं ताभ्यामुक्तं शृणु जगत्पते ॥
लवणानि बहून्याशु प्रगृह्य त्वरितो भवान् ।
आगच्छतु तयो राज्ञोः सेवां केशव वाग्विभो ॥
इत्युक्तवति विप्रेन्द्रे दूते तत्र तयोर्नृप ।
प्रहस्य सुचिरं कृष्णो बभाषे दूतमीश्वरः ॥
शृणु दूत वचो मह्यं युक्तमुक्तं द्विजोत्तम ।
करं ददामि ताभ्यां तु करदोऽस्मि यतो नृप ॥
धार्ष्ट्यमेतत्तयोर्विप्र मत्तो यत्तु करग्रहः ।
अहो धार्ष्ट्यमहो धार्ष्ट्यं तयोः क्षत्रियबीजयोः
इदमद्भुतपूर्वं मे मत्तो यत्तु करग्रहः ।
इत्युक्त्वा केशवो दूतमिदमाह स्म यादवान् ॥
हास्यमेतद्यदुश्रेष्ठा मत्तो यत्तु करग्रहः ।
यष्टासौ राजसूयस्य ब्रह्मदत्तो महीपतिः ॥
तौ तं याजयितारौ च हंसो डिभक एव च ।
वोढा किल यदुश्रेष्ठा लवणस्य दुरात्मनोः ॥
करदो वासुदेवोऽहं जीवामि यदुसत्तमाः ।
हास्यं हास्यमिदं हास्यं शृणुध्वं यादवा वचः ॥
इत्युक्तवति दाशार्हे बलभद्रपुरोगमाः ।
यादवाः सर्व एवैते हासाय समवस्थिताः ॥
करदः कृष्ण इत्येवं ब्रुवन्तः सर्वसात्वताः ।
हासं मुमुचुरत्यर्थं तलं दत्त्वा परस्परम् ।
तलशब्दो हास्यशब्दो रोदसी पर्यपूरयत् ॥
स च विप्रो नृपश्रेष्ठ निन्दयन्मैत्रमात्मनः ।
अहो कष्टमहो कष्टं दौत्यं यत्कृतवानहम् ।
इति लज्जासमाविष्टस्तूष्णीमासीदवाङ्मुखः ॥

## Colophon.

Dn $T_1$ $G_{1.3}$ स्निग्ध ( for त्रिगुणो ) $M_3$ ज्ञानामेनीह केशव ( for ° ) — $G_3$ om ( hapl ) lines 2807 2811 — ( L 2807 ) $T_3$ प्राणमिदं ( for °विदः ) $D_5$ $T_{2.4}$ $M_3$ प्रोचुस् ( for प्राहुस् ) $M_3$ त्वामेव जगतीपते ( for ° ) — ( L 2810 ) $D_5$ $T_4$ यथा ( for यतस् ) $Ds_2$ तथा पि श्रूयतां देव ( for ° ) — ( L 2812 ) $Ds_2$ $D_5$ देवेश, $T_3$ देवेन, $G_2$ M यज्ञेन ( for यागेन ) $G_3$ ऽत्र ( for ऽद्य ) Dn $T_{2.4}$ $G_{1.3}$ $M_4$ यक्ष्यते ( for °ति ) — ( L 2813 ) $D_5$ $G_2$ ततोऽहं, $T_3$ तथाह ( for तदर्थं ) $Dn_2$ $Ds_2$ om lines 2813[b]–2816[a] — ( L 2817 ) Dn $T_{1.2}$ G M स्वयं ( for अपि ) — ( L 2819 ) $D_5$ $T_3$ तयोराज्ञा ( for तयो राज्ञो ) — ( L 2820 ) इत्युक्ते तत्र विप्रेन्द्रे ( for ° ) — ( L 2823 ) $M_{1.2}$ नृपे ( for नृप ) — ( L 2824 ) $Ds_2$ अन्यत्, $T_4$ एव ( for एतत् ) $T_{1.2}$ $G_{1.2.3.6}$ यस्तु ( for यत्तु ) — ( L 2825 ) $D_5$ वीर्यं ( for the second धार्ष्ट्यं ) $Dn_2$ Cal ed -वीरयो ( for बीजयो ) — ( L 2826 ) $Ds_2$ यच्च, $D_5$ $M_3$ यत्तु ( for यस्तु ) — $M_1$ om ( hapl ) lines 2827–2828 $T_3$ om line 2827 — ( L 2827 ) $Dn_2$ $Ds_2$ $D_5$ यादव° ( for °वान् ) — $G_1$ $M_4$ om ( hapl ) line 2828 — ( L 2829 ) $Ds_2$ राजसूयेन ( for °यस्य ) — ( L 2831 ) Dn $T_1$ $G_{2.4}$ $M_{3.4}$ यदुश्रेष्ठो ( for °ष्ठा ) $Ds_2$ $G_1$ दुरात्मन°. — ( L 2832 ) Dn $T_{1.2}$ $G_{1.3.4}$ जितोऽस्मि ( for जीवामि ) $M_3$ नृप- ( for यदु ) — $M_1$ om lines 2833 2834 — ( L 2833 ) $T_2$ भक्ष्य ( for the first हास्य ) Dn $Ds_2$ $D_5$ $T_{1.2.4}$ $M_{1-3}$ भूय ( for the third हास्यं ) — ( L 2834 ) Dn $T_{1.2}$ $G_{1.3.4}$ $M_2$ देवेशे ( for दाशार्हे ) — ( L 2835 ) $Ds_2$ हासाय ( for हासाय ) — ( L 2837 ) $Ds_2$ हास्यं ( for हासं ) $Ds_2$ बालान् ( for तल ) — ( L 2838 ) बलदर्पा ( for तलं दत्त्वा ) — ( L 2839 ) $Ds_2$ स विप्रो नृपतिश्रेष्ठ ( for ° ) $G_{1.3.4}$ $M_4$ नन्दयन्, $G_3$ निन्दयन्, $G_5$ निन्दया ( for निन्दयन् ) Dn $Ds_2$ $D_5$ $T_{1.2.4}$ G $M_4$ मित्रम् ( for मैत्रम् ) — ( L 2841 ) $G_2$ -समायुक्तम् ( for °विष्टस् ) $M_1$ अधोमुखः ( for अवाङ्मुखः )

Colophon — *Mention of the Epic* $Ds_2$ — *Mention of Khila* Dn $Ds_2$ $D_5$ $T_{1.2.4}$ G M — *Adhy name* Dn $Ds_2$ $T_{1.2}$ $G_1$ हंसडिभकोपाख्याने वासुदेववाक्यम्, $G_3$ वासुदेववाक्यम्, M हंसडिभकम् — *Adhy no* Dn 299, $Ds_2$ 295, $T_1$ $G_3$ 296, $T_2$ $G_1$ 228, $T_4$ 195, $G_4$ 121, $G_5$ 225, $G_6$ 297, M 191.

तस्य तद्वचनं श्रुत्वा हंसः प्राह वचस्तदा ।
श्रुत्या समागतः पूर्वमद्य दृष्टो मया त्वसौ ॥
धनुर्वेदे च वेदे च शस्त्रशास्त्रे तथैव च ।
निपुणोऽय सदा शूर इत्येवमनुशुश्रुमः ।
अद्य दृष्टिपथं प्राप्तः प्रीतिं मे विदधात्यसौ ॥
कुशलं वासुदेवस्य बलदेवस्य चापि वा ।
कुशला सात्वताः सर्वे उग्रसेनपुरोगमाः ॥
तथेति सात्यकि प्राह मन्दमुन्मिषितानन ।
ततो जनार्दन प्राह हंसो वाक्यविशारदः ॥
अपि दृष्टस्त्वया चक्री सिद्ध न कार्यमीहितम् ।
यद् सर्वमशेषेण मा वृथा कालमत्यगाः ॥

Colophon

वैशंपायन उवाच ।
इत्युक्तवति हंसे च धर्मात्माथ जनार्दन ।
उवाच प्रसहन्वीर स्तुवन्नारायणं तदा ॥
अद्राक्षमद्राक्षमहं जनार्दन
करस्थचक्र वरशङ्खधारिणम् ।
आतप्तजाम्बूनदभूषिताङ्ग
स्फुरत्प्रभाद्योतितरत्नधारिणम् ॥
अद्राक्षमेनं यदुभि पुरोगत
ससेव्यमान मुनिवृन्दमुख्यैः ।
सस्तूयमान प्रभुवन्दिमागधै
स्मितप्रवालारुणपल्लवाधरम् ॥
अद्राक्षमेन यतिभिः पुरातनै-
र्विविच्य वेद्य विधिवत्सहामरैः ।
प्रफुल्लनीलोत्पलशोभितश्रियं
विनिद्रहेमाब्जविराजितोदरम् ॥
भूयोऽहमद्राक्षमजं जगद्गुरु
प्रसादयन्त वचनेन यादवान् ।
निरूपयन्त विविधन्मुनीश्वरै
प्रवृद्धवेदार्थविधिं पुरातनैः ॥
अद्राक्षमद्राक्षमहं पुनः पुनः

Dn T1 G3 4 सुखे यदा ( for यथासुख ) —( L 2877 ) D6 T1G3 M1-3 अथ हंसडिंभकयोर् ( for ° ) —( L 2878 ) T3 ऽहं ( for ऽय ) D6 T4 G3 असौ ( for अयं ) —( L 2880 ) Dn3 Ds3 G3 M4 श्रुत , T1 G3 4 दूरया , T3 G1 4 दूरय ( for श्रुत्या ) G1 समागतं , G3 M4 °गम ( for °गत° ) —( L 2881 ) G5 शास्त्रे ( for वेदे ) Dn T2 3 G1 3 M3 शास्त्रे शास्त्रे , Ds3 शास्त्रे शास्त्रे , G6 वेदशास्त्रे ( for शस्त्रशास्त्रे ) —( L 2882 ) Dn य ( for ऽय ) Ds3 M4 धीर , D6 T4 M1-3 वीर ( for शूर ) —( L 2883 ) Dn T1 3 G1 ततो , Ds3 D6 T4 M4 अथो , G3 अहो , M3 ततो ( for अद्य ) T3 प्राप्य ( for प्राप्त ) Ds3 मो , Bom Poona eds G(ed) मौ ( for मे ) —( L 2884 ) Ds3 D6 T4 G M बलभद्रस्य ( for °देवस्य ) Ds3 वा पुन ( for चापि वा ) —( L 2886 ) G5 ततो [illegible] ( for तथेति ) Ds3 G3 3.4 मन्दसुस्मयितानन ( for ° ) —( L 2888 ) G4 सनद्ध ( for सिद्ध न ) —( L 2889 ) T3 अत्यगात् ( for °गा )

Colophon — *Mention of the Epic* Ds3 — *Mention of Khila* Dn Ds3 T2 3 4 G M — *Adhy name* Dn Ds3 T1 3 G1 हंसडिंभकोपाख्याने हंसवाक्यम् ; G3 हंसवाक्यम् , M2 4 हंसडिंभकम् — *Adhy no* Dn Ds3 300 ; T1 G1 228 , T3 G1 330 , T4 197 ; G3 123 , G4 227 ; G5 229 , M 193

D6 T1 2.3 G1 2 4 5 M om lines 2890 2891 with the ref. Before line 2893 Dn1 T2 4 G3 M ins जनार्दन —( L 2892 ) T3 G1 महाधन ( for जनार्दन ) —( L 2893 ) Ds3 T1 4 G1 3 M हस्तस्थ- ( for करस्थ ) T2 G1 4.5 -शार्ङ्ग ( for -चक्र ) Ds3 T1 3 4 G M -चक्र ( for -शङ्ख ) — After line 2895 D6 ins

22** अद्राक्षमेनं यदुभि पुरातनै-
र्विविच्य वद्य विधिवत्सहामरै ॥
प्रफुल्लनीलोत्पलशोभितश्रिय
विनिद्रहेमाब्जविराजितोदरम् ॥

—( L 2896 ) Dn T1 3 G1 3 4 यतिभि , M4 कविभि ( for यदुभि ) Dn Ds2 G4 M4 पुरातनै ; D6 पुरागतै ; T4 G4 पुरोगतै ( for °गत ) —( L 2898 ) Ds3 प्रभुस्तुतमागधै ; T4 G3 प्रभवादि° , G1 प्रभुभि स° , G4 4 मुनिवृन्दमुख्यै ( for प्रभुवन्दिमागधै ) —( L 2899 ) D3 स्तमत्- ( for स्मित- ) Ds3 G3 -प्रवालाधर ( for °रुण ) Ds3 -पल्लवारुणम् ( for °धरम् ) — D6 om lines 2900-2903 —( L 2900 ) M1-3 कृतिभि ( for कविभि ) —( L 2903 ) Dn G3 4 -शोभित श्रिया ( for -शोभितश्रियं ) —( L 2904 ) D6 M1-3 विभु , G3 दृश ( for अज ) —( L 2905 ) Ds3 G2 प्रमोदयन्तं ( for प्रसाद° ) —( L 2906 ) T3 विविधं ( for विधि, -वन् ) —( L 2907 ) Ds3 G1 4 5 प्रवृत्त , D6 T4 प्रवद्ध- G3 प्रबुद्ध- ; M1 3 विवृद्ध ; M3 वेदाग्र ( for प्रवृद्ध- ). T3

युक्तः परमधर्मात्मा ब्राह्मीं सिद्धिमुपागतः ॥
सर्वं पश्यति सर्वत्र दिवि भुव्यन्तरे तथा ।
ज्योतिष्णु कर्म कुर्वाणो बहुरूप स सपदा ॥
महेश्वरो निगूढात्मा वृषरूपेण तिष्ठति ।
उद्धृत्य दक्षिण पाद वायुभक्षः समाहितः ॥
अष्टौ वर्षसहस्राणि सहस्र शतमेव च ।
महायोगी महादेवो नियमाद्ब्रह्मसभवः ॥
अथ वायुर्घनीभूत्वा अन्ते चरति गोपतेः ।
फेनीभूत समुद्गारे. पवन निर्गिरन्मुखात् ॥
स निष्क्रान्तस्ततो वक्त्रात्प्राणेन परमात्मवान् ।
निर्यासभूत पतितो नैवार्द्रो नैव पार्थिवः ॥
स फेनो वारिणाविश्य चचार वसुधातले ।
नैवार्द्रो नैव शुष्काङ्गो वायु· सघातमागतः ॥
तस्काले फेनमुत्क्षिप्य पवन सह वारिणा ।
निरालम्बे निरालम्बस्तनभ्राणि समपद्यत ॥
ते क्षिपन्ति पयो भूमावात्मानं स्वेन घट्टिताः ।
नीलमेघारणप्रख्या नैवार्द्रा नैव पार्थिवाः ॥
ब्राह्मीं मूर्तिं समाधाय वायु सर्वत्रगो वशी ।
समा. सहस्र सपूर्णं चचार विपुल तपः ॥
वह्निर्वै दुजटी भूत्वा चीरवल्कलवासभृत् ।
तपस्तप्यदनाहारो मौनमास्थाय पौष्करे ॥
वर्षाणा च सहस्राणि त्रीणि चैक च यत्नतः ।
तस्याग्नेस्तेजःसभूतो महानग्नि. प्रवर्तते ॥
स्वर्गप्रकाशकृच्चैव स्वर्गवासी तमोनुदः ।
दिवि भूतप्रकाशाख्यस्तपसा ब्रह्मसभव· ॥
तपश्चरति ब्रह्माग्निर्लोकाना भूतभावन· ।
तत्तमो भुवि राजेन्द्र मानुषेषु प्रतिष्ठितम् ।
भास्करस्तेजसहारस्ततो भवति सत्तमः ॥
मर्त्याना सर्वभूताना तेज आक्षिप्य वर्तते ।
न तु योगबले राजन्ब्राह्मणस्य विशेषत· ।

— $D_6$ om line 1540 — (L 1540) $K_3$ $D_5$ तपो वने (for तपोधन ) —(I 1541) $K_3$ तपसा (for तेजसा) $K_2$ $D_1$ विभाव्य भरतर्षभ $\tilde{N}_2$ °च्य महामभव $B_2$ °च्य पुरुष र्षभ (for ²) —(I 1542) $K_3$ ₂ Dn $D_5$ $D_6$ ₄ ₆ तपसो, $\tilde{N}_2$ $B_3$ मनसा B ₆ मनसो $B_2$ भस्मसो (for तपसा) $K_2$ भासयन् (for भाव ) —(I 1543) $V_2$ साधयन् (for धार° ) (I 1544) Cal ed युक्त (for युक्त.) $D_6$ ऋद्धिम् (for सिद्धिम्) —(L 1545) $K_3$ $N_2$ $V_1$ B ₃ $D_{32}$ $D_6$ (marg) सप्रदृश्यति सर्वत्र $K_2$ Dn₃ $D_5$ $G_4$ सप्रदृश्यत स°, $K_4$ सर्वं दृश्यते स° $V_2$ $B_2$ सप्रदिश्यति स $Dn_3$ समदृश्यत स°, $D_6$ $G_3$ सप्रपश्यति स° (for °) $\tilde{N}_2$ $B_2$ (marg as above) भुव्यम्बरे $V_1$ भूम्यम्बरे $V_2$ भुव्यम्बरे (for भुव्यन्तरे) $D_6$ दिवि भूम्यम्बरे तथा (for ²) —(L 1546) $K_1$ ₂ $B_3$ $D_1$ $G_3$ ज्योतिष $B_1$ $D_5$ $D_6$ स्य $Dn_3$ $G_1$ °ष्णु (for °ष्णु ) $\tilde{N}_3$ वसुरूप (for बहुरूप ) $V_2$ $D_5$ बहुरूप स्वसपदा (for ²) —(L 1547) $G_4$ Poona ed G(ed) ष्ठति (for ति ) $K_2$ $D_1$ (s p lin as above) दृष्ट (for वृष ) — $G_3$ om lines 1549 1552 —(I 1550) $D_6$ ब्रह्म (for ब्रह्म ) $D_3$ नियमाद्ब्रह्माणि स्थित (for ²) —(I 1551) $B_3$ वाति (for अथ) $K_2$ $G_1$ घनीभूतो (for °भूत्वा) $K_6$ $D_6$ [अ]न्तरे, $V_1$ ₃ $D_3$ अन्तरा (for अन्ते ) $K_2$ $D_2$ अन्तश्चरति भूपन, $K_2$ [अ]न्तरे चरति गापन (for ²) —(L 1552) $B_3$ फलीभूतं $D_1$ फेन° (for फना ) $K_2$ ₂ $D_6$ निर्गिर्तं; $\tilde{N}_2$ $V_1$ ₃ $D_3$ निर्वमन (for निर्गिरन्) —(L 1553) $B_2$ निष्क्रान्त सतत वक्त्रात् (for °) $K_2$ Dn₃ $D_3$ ₄ Cal ed परमात्मवान्, $V_2$ $D_3$ °मात्मना ($D_2$ °न ) (for °मात्मवान्) —(L 1555) $K_2$ ₄ $V_1$ B ₃ Dn $D_1$ ₃ वारि चाविश्य, $D_6$ वा समा° (for वारिणा°) —(L 1557) $K_3$ सपवन् (for पवन ) —(L 1559) $K_2$ ₄ $D_6$ ₄(sup lin) ₃ वेन $V_2$ वायु (for स्वेन) —(L 1560) $D_4$ निर्गिरन् (for नैवार्द्रा) $D_4$ G(ed) नैवार्द्रो न च पार्थिव (for ²) —(I 1561) $K_2$ $D_1$ मूर्ति (for मूर्तिं ) $G_3$ समास्थाय (for °धाय ) $D_3$ सर्वगतो (for °त्रगो ) $\tilde{N}_2$ वली (for वशी ) —(L 1563) $V_2$ B $D_6$ $D_5$ ₂ वाम्यधृक्; $Dn_3$ °कृत (for °भृत) —(I 1564) $\tilde{N}_2$ $V_1$ ₃ $B_2$ $D_3$ स्तप्यद् (for तप्यद् ) —(L 1565) $D_3$ शत (for त्रीणि ) Dn त्र (for च) —(L 1567) $K_4$ सर्वं (for स्वर्ग ) $K_2$ $D_6$ स्वर्गप्रकाशत( $D_6$ °क )श्चैव, Bom Poona eds G(ed) स्वर्गप्रकाश कृच्चा च (for ²) —(L 1568) $G_1$ Cal. ed दिव्यो (for दिवि) $K_1$ $D_4$ भूते; $D_3$ भूत (for भूत ) $G_3$ प्रकाशश्च (for °शाख्यस्) $K_2$ $D_1$ दिवि भूत प्र( $D_1$ sup lin °मिश्र )काशाख्ये (for °) — Bom ed G(ed) om line 1569 —(I 1569) $D_3$ $G_4$ Poona Cal eds धूमाग्निर् (for ब्रह्मा° ) $D_3$ (marg as above) -सभव (for भावन· ) —(I 1570) $K_1$ $D_3$ तत्तपो $D_4$ यतन्तो (for तत्तमो ) $K_3$ मनुष्येषु (for मानुषेषु ) —(L 1571) $K_2$ भास्करे (for °रम्) $D_1$ भास्करे तनमहारे $D_2$ भास्वरस्तेज सहारस् (for °) $K_4$ $\tilde{N}_2$ $V_1$ ₃ B $D_{32}$ $D_3$ ₆ सत्तम (for सत्तम ) $K_2$ तमो भवति सर्वत (for ²) —(L 1573) $V_1$ ₃ बलैर्, $D_3$ बलो,

तत्तमो नाशयेद्रात्रौ नाप्यहो भविता पुनः ॥
पुष्पमित्रो महातेजा यक्षः सर्वत्रगो वशी ।
तपश्चरति धर्मात्मा पुष्करे सुसमाहितः ॥
महेन्द्रशिखराद्द्वारा यास्त्यो यान्ति मेदिनीम् ।
तावत्स्वरूपमास्थाय तिष्ठते निखिलाः समाः ॥
जानुभ्यां पतितो भूमौ ज्योतिर्निभाति पश्यति ।
समा सहस्रं निखिलं नेत्रैरनिमिषैर्जगत् ॥
नेत्राणि बहुधा तस्य नेत्रान्तैरभिनिःसृतैः ।
मध्यं दिनकरे प्राप्ते रश्मिवान्सपरिग्रहैः ॥
ते रश्मयः प्रभानेत्रैः शतशोऽथ सहस्रशः ।
रराज तेज सयोगाद्विद्युद्भिरिव पावकः ॥
सविस्फुलिङ्गैर्नेत्रान्तैरादित्यमनुवर्तते ।
कर्मणोऽन्ते युगान्ते वा जगतो बहुरूपिणः ॥
बहुधा तु पुनर्भूत्वा निषण्णो वसुधातले ।
समासहस्रं संपूर्णं तपस्तेपे सुदारुणम् ॥
निगृहीतेन्द्रियो भूत्वा अप्सरोभिर्ललाम ह ।
मेरोः शिखरमासाद्य काम कामेन निर्ममम् ॥
तपःकामः स यक्षस्तु कुबेरो नरवाहनः ।
विष्णुरेव तपोध्यक्षस्तेजसोऽन्ते विजृम्भति ॥
न हि कश्चित्समानस्ति य एव तप आचरेत् ।
त्रिषु लोकेषु राजेन्द्र ऋते विष्णु सनातनम् ॥
वासुकिर्बहुशीर्षश्च नागेन्द्रो मौनमास्थितः ।
तप आचरते सम्यङ् निधाय मनसा मनः ॥
शेषः सत्यधृतिर्नागो बलवान्भ्रमसंभवः ।
वृक्षमारुह्य धर्मात्मा अध.शीर्षोऽवलम्बते ॥
जिह्वाभिर्लेलिहानाभिर्गोत्रजं विषमुत्सृजन् ।
समाः सहस्रं संपूर्णं निराहारस्तपोधनः ॥
कालकूटं विषं तद्धि सुमहत्समपद्यत ।
येन लोको ह्यभिग्रस्तो न सुखं विन्दते नृप ॥
सर्वत्रानुगतं तीक्ष्णं भुजगेषु महीपते ।
जङ्गमं स्थावरं चैव सर्वत्रानुगतं विषम् ॥
परस्परविरुद्धेन सिंहयुक्तेन भारत ।
नाशयत्यात्मनोऽङ्गानि तेन तीक्ष्णेन भारत ॥
अथ ब्रह्मा महाभागो भूतानां हितकाम्यया ।

D₆ बले (for बले) D₆ तत्तु योगबलं राजन् (for °) — (L. 1574) Ñ₃ राजन् (for रात्रौ) Ñ₃ V₁ ₃ B D₂ ₆ G₁ ह्ययम् (for पुन) D₄ ₆ नाप्यहो भवति ह्यय( D₂ ध्रुव )म् (for °) — (L. 1575) V₃ स यक्ष सर्वगो वशी (for °) — (L. 1576) K₂ D₁ G₃ भूतात्मा (for धर्मात्मा) — (L. 1577) D₃ ₃ G₃ महेन्द्रशिखराद्द्वारात् (for °) B₁ ₃ Dn₁ Cal ed यास्त्यो (for °स्त्यो) — (L. 1578) K₃ D₂ तावत्स्त्यो, G₃ °स (for °स्व) — (L. 1580) D₃ तपन् (for जगत्) — (L. 1581) B₃ नेत्राभिर् (for °भि) K₂ V₃ B₁ ₃ D₃ निःसृत, Dn D₃ ₄ निःसृता (for °सृ) G₃ नेत्रान्तैरभितस्तत (for °) — (L. 1582) K₄ अस्य D₆ मध्ये (for मध्य) K₃ मध्य दिनकर प्राप्ते (for °) K₃ ₃ B D₃ परिग्रह, K₃ Ñ₃ V₁ ₃ Dn D₃ °ग्रहे (for °ग्रहै) — (L. 1583) ते रश्मिभि, D₃ हिरण्मय (for ते रश्मय) — (L. 1584) K₄ V₂ ₃ B₁ Dn D₃ ₄ (marg as above) विद्युद्भिर्, G₃ Cal ed ज्वलद्भिर् (for विद्युद्भिर्) D₃ तोयद (for पावक) — (L. 1587) K V₁ ₃ Dn D₁ ₄ G₃ Cn बहुधाथ, D₃ °रूप (for °धा तु) K₁ D₃ ₄ विनेश, K₃ ₃ Dn D₃ विषण्णो (for नि°) K₃ विवेश बहुधा तले (for °) — (L. 1588) K₃ ₄ Dn समारश्मिषु सपूर्णस, Ñ₃ V₁ ₃ D₃ समासहस्रं संपूर्ण, D₁ समरश्मिसुमपूर्णस, D₁ सोमो रश्मिसुमपूर्णस, Bom Poona eds G(ed) स यो रश्मिषु सपूर्ण (for °) Ñ₃ V₁ ₃ पुनश्च (for तपस्) — (L. 1589) K₃ स कामिन, V₁ चचार ह (for ललाम ह) — (L. 1590) B₃ D₃ पीडयन्, D₃ निर्दहन् (for निर्ममन्) — (L. 1593) D₃ ₄ (marg) ₃ तेजस्तेन (for °सोऽन्ते) Ñ₃ V₁ ₃ B D₃ न जम्भते (B °ति), D₆ G₃ विजृम्भते (for °ति) K₄ D₁ ₃ तेजसा तेन क्षोभयान् (D₁ बृंहित, D₃ वर्धते), K₄ °स्तेन विजृम्भते (for °). — (L. 1596) B₃ तपश्च (for तप आ) K₃ आचचार तप सम्यक्, G₃ तपश्चरतः सम्यङ् (for °) — (L. 1597) G₃ धृतिर् (for धृ°) — (L. 1598) K₃ Ñ₃ V₁ ₃ B₁ ₃ Dn Dn₁ D₃ ₃ ₃ अथवाक्शीर्षो (V₁ °शिरो), Dn₁ अर्वाक्शीर्षो (for अध°शीर्षो) G₃ प्रलम्बते (for °वल°) — (L. 1599) B₃ उत्क्षिपन् (for उत्सृजन्) D₁ महान्त विषमुत्सृजन् (for °) — (L. 1600) D₃ समासहस्र सपूर्ण (for °) — D₁ om line 1602. — (L. 1602) Dn [अ]य ग्रस्तो, D₁[अ]भिग्रस्ते (for °ग्रस्तो) K₃ (before corr) महत् (for नृप) — (L. 1603) सर्वगात्रानुगं तीक्ष्ण (for °) Dn₁ Cal ed भुजगेषु महीतले (for °) — (L. 1605) Ñ₃ lacuna, V₁ मद्वयुक्तेन; V₃ हंसयु°; Dn G₃ हंसायु°, D₃ पर्नु यु° (for सिंहयु°) — (L. 1606) D₃ न देहेष्वात्मनोऽङ्गानि (for °) — (L. 1608) K₃ ₄ Ñ₃ V₁ ₃ B₃ Dn Dn D₃ D₁ ₃ ₃ ₃ ऋषिभिः सह; K₃ °मिनाम्; B₁

मन्त्र विसृजते राजन्ब्रह्माक्षरमहिंसकम् ॥
गरुत्मान्वितनैः पक्षैर्नगाग्रैः सलिलं महीम् ।
समासहस्रं सपूर्णं चूलाग्रेणावलम्बिना ॥
पर्णभारैश्च विस्तैर्विस्तीर्णैर्वसुधातले ।
रराज वसुधा चैव तैः पर्णैर्बहुचित्रितैः ॥
येन वृत्तेन जीवेयु सर्वभूतानि भारत ।
इहलोके मनुष्येन्द्र देवलोके च भारत ।
द्यौरिवाचितनक्षत्रा महीतलविसर्पिभिः ॥
मघवान्हिममपाते भवत्येकचरो वशी ।
पुष्करान्भसि धर्मात्मा मत्स्योल्लिखितमूर्धजः ॥
अथ सुतलमाक्रम्य पृथिवीं प्रांशुदेहिनीम् ।
तपश्चरति धर्मात्मा बाहुमुद्यम्य दक्षिणम् ॥
साग्रं वर्षसहस्रं च शतमेकं च सुव्रत ।
तपश्चरति सयोगाद्वायुभक्षः समाहितः ।
समाधियोगात्सयोगाद्ब्रह्मयोगस्य भारत ॥
येनेयं पृथिवी राजन्धार्यते ब्रह्मयोगिना ।
अनाद्यन्तेन नित्येन सर्वत्र विषयैषिणा ॥
योऽसौ विष्णुरगाधात्मा परमात्मा निराकृतिः ।
दिवे निषण्णो भवति रात्रौ भवति वै स्थिरः ।
सत्यसंधः स धर्मात्मा कामकारकरोऽभवत् ॥
तस्य यः सोद्यतः पाणिः पृथिव्यां पृथिवीसमः ।
रात्रौ स तपनो भवति मण्डलं विपुलं नभः ॥
स चन्द्रविषयं राजञ्शमयामास रुन्धति ।
ग्रहाणां गतयश्चैव ताराणां च विशेषतः ॥
तां छायामाक्षिपत्सोमः स्रवद्भिर्मण्डलेन वै ।
पृथिव्या दक्षिणो हस्तो महायोगी महामनाः ॥
सैषा छाया शशीभूता शशिमण्डलमाविशत् ।
अलिङ्गा पृथिवीलिङ्गाद्द्रुतादक्षया दिवि ॥

---

जसं हितम्, G1 अगर्हितम् ( for आहिंसकम् ) D3 ब्रह्माक्षरमयं हितम्, Cal ed ब्रह्माक्षरसमन्वितम् ( for ˚ ) — D1 ins after line 1608 K2 after line 1609

54** आहारश्च ततो योगाद्विहितास्तस्य पक्षता ॥
वेदविद्भिर्द्विजै श्रेष्ठै सत्ययमपरायणै ॥

— ( L 1609 ) D1 विगते ( for विततै ) K1 s D3 नगाग्र, D3 नखाग्र ( for ˚ग्रै ) K2 D5 G3 सस्ट्वान्, D6 प्रलिम्बन् D2 च लिखन् ( for सलिलं ) D6 नगाग्र सधवम्महत् ( for ˚ ) — ( L 1610) K2 वृक्षाग्रेण, D31 भूला˚ D2 मूला˚, D6 चान्वा˚ ( for चूला˚ ) Cal ed बलाग्रेणावलम्बने ( for ˚ ) — ( L 1611 ) D3 G3 पर्णाहारैश्च ( for पर्णभा˚ ) D3 पर्णहारैविकारैश्च ( for ˚ ) K1 त्रिस्तीर्णै, K3 विस्तीर्णै, Ñ2 त्रिशीर्णै V1 s B1 s D31 D6 त्रिशीर्णैर्, D32 त्रिशेश ( for विस्तीर्णैर्˚ ) D2 त्रिकृतीर्णैवसुधातलम् ( for ˚ ) — ( L 1612) D2 त्रिसृते ( for चित्रिते ) K1 s s Dn D5 s s G3 पर्णै, G2 ˚श्रै ) र्बहुविचित्रितै ( for ˚ ) — K2 D3 om. ( hapl ) line 1614 — ( L 1614 ) V1 लोकेषु ( for लोके च ) — K1 om line 1615 — ( L 1615 ) B2 विराजित, D3 इवाचित ( for ˚चित˚ ) — ( L 1616 ) K3 D1 धनवान् V2 D2 मघवा; Dn D1 G2 हिमवान् ( for मघवान् ) D2 सपानैर् ( for ˚ते ) Ñ1 V3 B1 D3 D6 तपति ( for भवति ) — ( L 1617 ) K2 D1 पुष्करेऽम्भसि ( for ˚राम्भसि ) K3 om ( hapl ) lines 1617b 1619a D1 मत्स्यैर्लिखितमूर्धज ( for ˚ ) — ( L 1618 ) K2 s V3 D1 s स्वतलम् D2 मूल˚ ( for सुत˚ ) D61 अथ सुतलमाक्रम्य ( for ˚ ) Ñ2 B DnD5 s G3 पृथिवी प्रांशुदेहिनी ( for ˚ ) — ( L 1619 ) D1 चचार ( for चरति ) K3 D1 उत्क्षिप्य ( for उद्यम्य ) — ( L 1621 ) D1 धर्मात्मा ( for सयोगाद् ) Ñ2 B Dn D6 G3 वायुभक्षा समाहिता ( for ˚ ) — ( L 1622 ) Ñ2 V1 s B1 s Dn D5 s G3 समाद्वा ( for संयोगाद् ) K2 D1 सम्यग्विधियोगसयोगाद्, D6 समाधियोगसं˚; D3 ˚धियोगेनासङ्गात्, D5 समो योगाच्च सयोगात् ( for ˚ ) — ( L 1623 ) K2 s यतिना ( for योगिना ) — ( L 1624 ) K1 s अनाद्येन च ( K1 न ) नित्येन; K2 Ñ1 B D6 G3 ˚दन्तमनित्येन; V1 s D6 ˚न्तमशेषेण ( for ˚ ) — K2 om line 1625 — ( L 1625 ) K1 योगेद् ( for योऽसौ ) Ñ1 V1 s D3 D5 असेयात्मा; D1 अगाधोऽसौ ( for ˚धात्मा ) — ( L 1626 ) B2 D1 विषण्णो ( for नि˚ ) K4 स्वपिति ( for भवति ) K4 Ñ1 D5 स्थित˚ ( for स्थिर ) — ( L 1627 ) K1 D1 सत्यधर्म ( for ˚संध ) K4 कर्मकारकरो भवेत्, D1 कामचारकरो भवेत् ( for ˚ ) — ( L 1628 ) B2 om ( hapl ) from पृथिवी up to पृथिव्या ( in line 1933 ) — K2 om line 1639 — ( L 1629 ) D1 भूत्वा ( submetric ) ( for भवति ) B2 रात्रौ तपति भो भाति, D3 त्रिवेश मण्डलं सौम्यं ( for ˚ ) D1 विचरन् ( for मण्डलं ) — ( L 1630 ) K2 स सूर्यचन्द्रविषय ( for ˚ ) K1 s D1 s शमयामास रुन्धति, K2 D6 ( marg ) शमयानो भ रु˚; Ñ1 V1 छायया समपद्यत ( for ˚ ) — ( L 1632 ) K1 s V1 D1 s s सोमान् ( for सोम ) K4 Ñ2 B3 Dn D3 Cn तां छायामाक्षिपत्सोमात् ( for ˚ ) B2 सुतभिर्; D3 स्रवद्भिर्; D6 स्रवता, G1 स वहिर् ( for स्रवद्भिर् ) — ( L 1634 ) K1 s

अङ्गाङ्गान्युपगृह्यैव तपश्चरति निश्चयात् ।
प्रोक्ष्य पादौ तु सवलौ पृथ्वी वाच्यमुपागता ॥
सूर्यार्चिभिः पीयमानादाक्षिप्यति महीतलात् ।
महीमिवाम्बुरसना युगान्ते विष्णुतेजसा ॥
रराज सूर्यरश्मीभिर्व्यतिपिक्ता महानदी ।
स्फाटिकैव शुभा यैषा काञ्चनैर्धातुभिर्वृता ॥
आदित्येन समादत्ता रश्मितेजोभिसम्भवैः ।
मण्डलान्तर्गता देवी चक्षुषा नोपलभ्यते ॥
रश्मिभिः पुनरुत्तीर्णा ततो योगेन धावति ।
आकाशगङ्गा संवृत्ता विपुलैरम्बुविग्रहैः ॥
शीतच्छायैश्च सलिलैर्लतामिश्च सुगन्धिभिः ।
पद्मखण्डैश्च विविधैः शुशुभे दिव्यगन्धिभिः ॥
काञ्चनापीडजघना स्फाटिकान्तरमेखला ।
पद्मरेणुभिरापीता चक्रवाकावतंसिका ॥
नीलगर्भसुकेशान्ता पुष्पसंचयसंकुला ।
शोभते प्रविसर्पन्ती प्रमदेव विभूषिता ॥
सख्या गङ्गा फलं लेभे पुष्करेण समाहिता ।
सुतपा चन्द्रनिहिता लोकानां धारणे रता ॥
सरस्वती स्वर्व्यर्णैरधीते ब्रह्मवादिनी ।
पुष्पत्रयाता शैलेन्द्रे मन्दरे मन्दगामिनी ॥
ऋगाद्याश्चतुरो वेदान्पादैश्चतुर्भिरावृतान् ।
यजुर्भिः सामभिश्चैव मथिताञ्छिरसा तथा ॥
ऋषिभिर्ज्वलनप्रख्यैस्तपसा दग्धकिल्बिषैः ।
सुपार्श्वस्य गिरेः पादे परिदार्यैः सुदारुणैः ॥
निस्वनं सर्वभूतानि नियमेन च मे शृणु ।
मन्दराग्रे विसर्पन्त्यं जगत्कृत्स्नमतीन्द्रियम् ॥

---

B1 D1 B1 D3 D5 शेपा ( for सैषा ) — ( L 1635 ) K3 D5 आविश्य , V3 अरिश्य , Dn3 D5 अन्श्रिात् ( for अन्श्रिा ) V3 इच्छया ( for आश्रया ) — ( L 1636 ) K1 V1 B3 D5 अङ्गैर्गात्म्, Ñ2 अङ्गाङ्गैः, V3 °ङ्गम् ( for °ङ्गानि ) B1 दुर्जयम्, D3 s D5 G3 दुश्चरम् ( for निश्चयात् ) — ( L 1637 ) K3 Ñ3 V1 Dn3 D1 सुतलौ ( for स° ) B D5 G3 निश्चयात्प्रोक्ष्य पादौ तु ( for ° ) D1 वारिस्थ, D5 वाक्याम् ( for वाच्यम् ) K3 Ñ3 V1 s D1 पृथिवी वाच्यमागता, Dn पृथिवी तपसि स्थिता ( for ° ) — ( L 1638 ) K3 सूर्यांशुभि ( for सूर्यार्चिभि ) V3 पीड्यमानाद् ( for पीय° ) G3 सूर्यार्चिष पीड्यमानाद् ( for ° ) K1 आक्षिपति, Ñ2 B2 आक्षिपति, D5 °ष्यद्, G3 °प्यत ( for °प्यति ) K3 s B3 D5 s तरे ( for तलात् ) Dn Bom Poona eds G(ed) आक्षिप्यत महीतले ( for ° ) — ( L 1639 ) Ñ2 V3 B2 s Dn3 D3 D5–8 G3 °वसना, V1 B1 स्वमा ( for वसना ) D5 महीमिवाम्बुवसना ( for ° ) — ( L 1640 ) K3 1 2 Dn1 D5 व्यतिपन्ना, K1 Ñ2 V1 D1 s °रिक्ता ( for °पिक्ता ) — ( L 1641 ) Dn सा ( for या ) Ñ2 V1 s D3 G3 स्फाटिकैर्वैशुभा ( V3 °वा ) शेपा, B1 s D5 °कैर्या शुभा यैषा, D5 °कैर्शुभा यैषा ( for ° ) G3 तथा ( for वृता ) — ( L 1642 ) K1 D5 s समावृत्ता ( for °दत्ता ) — ( L 1643 ) D1 G3 पश्यते ( for लभ्यते ) — ( L 1644 ) D5 तपो ( for ततो ) K3 वर्धते, K4 वाहते ( for धावति ) — ( L 1645 ) D1 संवृत्ता ( for °ता ) D5 अद्गु ( for अम्बु ) — ( L 1646 ) Ñ2 B1 ( marg as above ) शतशाखैश ( for शीतच्छायैश ) — ( L 1648 ) Ñ2 V3 काञ्चनापीतजघना ( for ° ) — ( L 1649 ) K1 Dn G3 पद्मरेणुसिता पीता, D5 °रेणुभिरापीता ( for ° ) — ( L 1650 ) B1 पद्म ( for पुष्प ) — ( L 1651 ) K1 s 4 B Dn D1 s G3 विप्र , Ñ1, V1 s D3 प्रति , D5 इति प्र , D5 भुवि ( for प्रवि ) — D1 om ( hapl ) lines 1652–1653 — ( L 1652 ) K3 साक्षाद् , V1 B Dn Ds1 D5 G3 सैषा ( for सख्या ) Ds2 सैषा गङ्गा फलं लेभे, D3 लेभे गङ्गा फलं सारये ( by corr सम्यक् ) ( for ° ) V3 B1 s D5 G3 समागता ( for °हिता ) — D1 om ( hapl ) line 1653 — ( L 1653 ) B2 s Dn D1–5 सुतपाश् G3 सुधया ( for सुतपा ) — ( L 1654 ) V1 Cal ed स्वनकम् ( for स्वर्व्यर्णैर् ) — ( L 1655 ) G1 ( for पुष्पत्र ) Ñ2 V1 s शैलेन्द्र ( for °न्द्रे ) K4 पुष्प प्रथमा शैले, D3 पुष्पप्रायस्थशैलेन्द्रे ( for ° ) Ñ2 V1 D3 s G3 मन्दरे ( for °रे ) — ( L 1656 ) K3 G3 4 साङ्गाश्च, Ñ2 B2 s Dn D3 D5 4–8 ऋग्ध्ययाद्य, V1 s B3 यादयाद्य ( for ऋगाद्याद्य ) — ( L 1657 ) K1 D1 प्रावृतान्, K2 V3 B1 D1 प्रथि° ( for प्रथि° ) — ( L 1658 ) G3 कल्मषै ( for किल्बिषै ) — ( L 1659 ) K3 V3 D1 पार्श्वे, B3 Cal ed पादे ( for पादे ) D3 Cn पार्श्वेश ( for परिदार्यै ) B1 s Dn Ds1 D1 Cn सुपार्श्वै ( for सुदारुणै ) K1 पारिदार्यै परारुणै , K2 D1 परिहार्यै परारुणै ; Ñ2 Ds2 पाणिपार्श्वे ( Ds2 °दार्यै ) सुपारुणै ; V3 पारिदार्यै सुपारुणै , V3 G3 s पर्पदैश्च सुपारुणै ( V3 °णे ); D5 पाणिपार्श्वे ( marg पारदार्ये ) सुपारुणै , D5 पाणिपार्श्वे ( marg पारदार्ये ) सुपारुणै ( for ° ) — ( L 1660 ) D1 निश्चयात् Cal ed निस्वनम् ( for निस्वनं ) K1 D1 भूतानां ( for °नि ) D5 निस्वन सर्वभूतानां ( for ° ) D1 विनयेन ( for नियमेन ) K1 च वै शृणु ; B1 s न शृण्वते ; B2 न मे शृणु , D2 भूतानि च ; D3 G3 s च शृण्वते ; D5 ( inf lin ) च शृण्वते ( for च मे शृणु ) Ñ2 V3 D5 नियमेनैव

विरामनियमे प्राप्ते तूष्णींभूता बभूव ह ।
न वाचमीरयेद्देवी नियमात्सत्यवादिनी ॥
अथ भूतानि सर्वाणि तूष्णींभूतानि सर्वशः ।
न शेकुरभिधानार्थं व्याहर्तुं वदनैर्वृतान् ॥
विभज्य योगं मनसा सर्वभूतेष्वनुग्रहम् ।
सरस्वती स्वरयुता व्याजहार महास्वनम् ॥
सरस्वत्या समायुक्तां शिक्षां गृह्णन्ति देहिनः ।
तस्मिन्नेवाथ ते सर्वे गानं गायन्ति शिक्षया ॥
आदित्या वसवो रुद्रा मरुतश्चाश्विभिः सह ।
जटिलाश्चीरवसना मुञ्जमेखलधारिणः ॥
गन्धर्वाः किंनराश्चैव सनागाः सह चाप्सरः ।
तपश्चरन्ति सहिताः पुष्करेषु मनीषिणः ॥
अपि कीटपतंगैश्च सह सर्वैः सरीसृपैः ।
शोषयन्ति शरीराणि तपसोग्रेण यत्नतः ॥
विष्णुर्विष्णुत्वमापन्नो देहान्तरं विसृष्टवान् ।
संरक्षति महायोगी सर्वांस्तान्सहचारिणः ॥
पुष्करे रमते विष्णुर्विष्णुरेव द्विधा कृतः ।
दीप्यमानः स्वतेजोभिर्विधूम इव पावकः ॥
सोऽग्निर्मन.समुद्भूतः पृथिवीं तापयन्निव ।
प्रधावति समं तेन मण्डलं दशयोजनम् ॥
निरराजार्चिभिर्दीप्तैः पृष्ठतश्चानलाग्निभिः ।
विस्तीर्णपर्णैरभिवर्मयूखैरिव दीपितः ॥
तस्यार्चिर्विस्फुलिङ्गाना न शेकुर्लङ्घने रताः ।
विप्रकीर्णस्य बहुधा मर्यादामिव भास्करः ॥
सोऽग्निर्दीप्य विभज्यांशून्विधूम इव पावकः ।
ऋत्विग्भिर्ज्वलनस्थैर्वित्रीयत इवाध्वरे ॥
सोऽग्निर्धूमगतस्तत्र तिष्ठते विपुलप्रदा ।
यावद्विष्णु. क्रमप्राप्तो नियमस्य समापनात् ॥
रक्षां कृत्वा न तं विद्याद्विष्णुर्विष्णुपराक्रमः ।
भूत्वा शतशरीरो वै नागो वालाहकोऽभवत् ॥
तमग्निमात्मसंसृष्टं लेलिहानं महामतिः ।
अतिप्रवृद्धं तेजोभिर्भूतानां हितकाम्यया ॥

छूण्वते, D5 °मैश्च न छूण्वते (for °) — (L. 1661) K1 Ñ3 V1 3 B Da D2 4 5 सम्दराम (for °म्रे) Ñ3 V1 3 B1 D3 G1 4 सर्वम् (for कृत्स्नम्) — (L 1662) K1 D4 नियमे, D3 4 °म (for °मे) K3 नियम नियमे प्रोक्त D5 °मौनवमे प्राप्ते (for °) — (L 1664) K3 D1 अद्य (for अथ) — (L. 1665) D5 वचन (for वदनैर्) — (L. 1666) K1 D4 विभिद्य (for विभज्य) — (L. 1667) K3 Dn D2 4 Cn तीरयुता, V1 D3 सुरयुता (for स्वरयुता) D5 सरस्वतीं स्वरयुता (for °) K3 B3 Dn D4 महास्वरा, K3 4 D2 5 6 °स्वनाम् (for °स्वनम्) — (L 1668) D3 महायुक्ता (for समायुक्तां) D5 सरस्वत्या स्वरयुता (for °) V3 देहिनम् (for °नः) — (L. 1769) K1 [आ]श्रिते, K4 [आ]स्थिते, Dn1 [उ]च्यते, D4 श्रिते (for [अ]थ ते) V3 शिक्षिता (for शिक्षया) — (L. 1670) G3 om lines 1670[b]–1673[a] K3 वसुभिश्च (for मरुतश्च) D5 चार्विभि, G1 चाश्विभि (for चाश्विभि) — (L. 1671) K3 मुण्डा, Dn1 मुण्ड (for मुञ्ज) — D5 om (hapl) lines 1672 1673 — (L 1672) K3 D3 सहनागा सचाप्सम (for °) — For line 1672, B3 subst

55** गन्धर्वाश्चीरवसना किंनराश्चैव सर्वशः ।

— (L. 1674) K1 D4 पतगाद्य (for °गैश्च) — (L. 1676) D1 देहान्तर (for °रं) — (1677) D3 महायोगात् (for °योगी) — (L. 1678) Ñ3 वसते (for रमते) B D3 D5 G3 4 पुनर् (for the second विष्णुर्) D3 एको (for एव) — (L 1681) D4 समस्तेन (for समं तेन) — (L 1682) G3 शतराजार्चिभिर्दीप्तैः (for °) — (L 1683) Ñ2 B3 D3 विशीर्णे (for विस्तीर्णे) K3 Dn D1 विशीर्णपार्श्व(Dn D3 °र्षे)विवर्णैर्, K4 V1 3 B1 D3 D5 6 विशीर्णप(Ds1 °र्णे प)र्वैवि°, B3 G3 विशीर्णवर्णैवि° (for °) — (L. 1685) K3 4 V3 B1 Dn D3 5 G3 Cn बहुधा (for बहुधा) K3 4 Dn D1 5 6 G3 भास्करम् (for °रः) — (L. 1686) K2–4 V1 P D1 4 सोऽग्नि दीप्यति शय्यासु (K3 दीप्ताशुर्, K4 दीनाशुर्, B1 5 सद्यांशुर्, B3 सूर्याशुर्, D4 सर्वांशुर्), D3 D5 सोऽग्निर्दीप्य त्वसह्यांशुर् (for °) — (L. 1687) K3 V3 D1 4 विद्वियन्त, K1 V1 B D3 D2 5 6 त्रिवीयन्त, D5 (marg) भूषयन्त (for वित्रीयत) K1 विद्वियन्त इवाम्बरे, Cal ed विकृतो वा महाम्बरे (for °) — (L. 1688) D4 धूमसखम् (for °गतस्) K3 विपुलं सदा, K3 V3 B1 Dn D1 G1 °लं त(K1 स)दा (for °लप्रदा) — (L. 1693) Ds1 क्रमात्प्राप्तो, D3 क्रम प्राप्तो (for क्रमप्राप्तो) D3 यावद्विष्णुर्वमाप्नोति (for °) Bom Poona eds G(ed) स्थित (for न तं) D5 (marg) सत्य (for विष्णु) — (L. 1691) B3 (marg

वारिणा सुरक्षीतेन प्राणिना प्राणवर्धनः ।
न्यषिञ्चद्वदनं तत्र नागो वालाहकस्तदा ॥
ततः सिद्धगणैर्जुष्टः पुष्करे तप्यते तपः ।
संहृत्य मनसात्मानं महायोगी महाबलः ॥
संहृत्य पादगात्राणि मनो मूर्ध्नि विधारयन् ।
अचलं स्थानमासाद्य तूष्णींभूतो बभूव ह ॥
एष धर्मो हि धर्माणां नोपधानविकल्पितः ।
हितः सर्वेषु भूतेषु इह चामुत्र चोभयोः ॥
अथ दैत्या हतास्तत्र समागम्योद्यतायुधाः ।
मायाप्रासैर्बहुविधैर्नगैरेरभिसंवृताः ॥
अग्निं दैत्याः पर्वताग्रैरभिघ्नन्ति परंतप ।
ज्वलन्तं ज्वलनप्रख्या महाकाया महाबलाः ॥
मेघीभूताश्च मायाभिर्वर्षन्ति बलदर्पिताः ।
तस्मिन्नेवाग्निसंघाते संघातं तन्महाबलम् ॥
ते शैलास्तदर्चिषा दग्धाः शतशोऽथ सहस्रशः ।
युगान्ते प्रभुरादित्यः प्रजा इव दिधक्षिवान् ॥
न शेकुरग्निं दैत्यास्ते मायाभिरुपसंवृतम् ।
आदित्यमिव दीप्यन्तं नभः सूर्योदये यथा ॥
विह्वलैरुत्तमैः सर्वैर्दैत्या भग्नपराक्रमाः ।
गन्धमादनमासाद्य निषण्णा गिरिमूर्धनि ॥
स चाग्निर्ज्वलते लोके विद्युद्भिरिव संगतः ।
अन्तरिक्षचरान्दैत्यान्निर्ददहन्विचरन्दिवि ॥
नागो वालाहकश्चैव मेघैः संघातमागतः ।
मुमोच सलिलं भूमौ पर्जन्य इव वृष्टिमान् ॥
मन्त्रैः सचोदितो नागो द्विजेभ्यो यदनोद्धतैः ।
मुमोच तोयसंघातं मानयन्निप्रजं जनम् ॥

Colophon

जनमेजय उवाच ।

संयुज्य तपसा देवाः किमकुर्वंस्ततः परम् ।
न हि तद्विद्यते लोके तपसा यन्न लभ्यते ॥

---

as above) बहु (for सह) K3-4 D2 5 भवेत् (for ऽभवत्) K1 D1 नागो बलाहको भवेत् (for ᵇ) — (L. 1693) B Dn3 D5 D6 महामतिम्, G3 °द्युतिम् (for °मति) — (L. 1695) D7 धेरावणस् (for बालाहकस्त) — (L. 1696) V3 हृष्ट, D3 तत्र (for हृष्ट) — (L. 1698) Ñ3 D3 पादौ (for पाद) D3 संहृत्य पदपत्राणि (for ᵃ) K3 D1 विधा रयाम्, K2 निधाय च, Dn1 विधारय, D3 निधारयन् (for °यन्) — (L. 1700) K3 D1 [उ]पधर्मं (for °धान) — (L. 1701) इहामुत्र ■ चोभयो (for ᵈ) — (L. 1703) K3 D1 धर्मं (for माया) — (L. 1704) K3 पर्वताग्रै (for °ग्रैर्) — (L. 1705) K3 ज्वलन्त, D2 °न्ति (for °न्तं) — (L. 1706) V1 मेघीभूताश्च, G3 मेघभू° (for मेघीभू°) — (L. 1707) B3 Dn G3 [अ]ग्नि (for [अ]ग्नि) K3 B3 D3 समाते, D1 °ते (for °ते) D3 दारुण तु, G3 सर्वघात (for संघातं तन्) K1 समाते हि महाबल (for ᵈ) — (L. 1709) K3 D1 द्विधक्षया, V3 D3 द्विधिक्षिवान्, B1 3 D5 G3 द्विधक्षति, D3 द्विधक्षयन् (for °क्षिवान्) Cal ed जनानिव द्विधक्षति (for ᵇ) — (L. 1710) Dn1 नाग्निं दैत्यास् (for नाग्निं दैत्यास्) D1 मायाभिर्निवर्तितुम् (for ᵈ) — (L. 1711) K3 B3 D1 दीप्यन्ते (for °न्तं) K3 D1 G3 आदित्या (G3 °त्य) इव दीप्यन्ते (for ᵃ) D3 तम (for नभ) — (L. 1712) K V3 3 B3 3 Dn1 D5 4 G3 विह्वलैर (for विह्व°) Dn D3 विह्वलैरुत्तमैः सर्वैः, D3 विह्वलैरधमैः सर्वैः (for ᵃ) — (L. 1713) B1 D3 G3 नग (for गिरि) — (L. 1714) K1 2 4 Ñ3 V3 3 B Dn Dn1 D3 4 5 G3 स चाग्निर्ज्वलते लोके (for ᵃ) B1 D3 G3 सह (for इव) Ñ3 V1 B3 Dn1 सङ्गत (for संगत) — K3 om (hapl) lines 1715-1716 — (L. 1715) B1 D1 गणान् (for चरान्) V3 D4 व्यचरद् (for विचरन्) D3 G3 त्रिदेहविर सर्वेत ये (G3 तेषमा) (for ᵇ) — (L. 1716) K3 D1 वालाहकश्चैव D1 °कै)श्चैव (for ᵃ) — (L. 1718) K1 3 D1 4 सचोदितो (for सचो°) K3 D1 वचनोद्धतैः; D3 वचनाद्धतैः (for यदनोद्धतैः) — After line 1718, D3 ins

56** ऋद्गुणैर्मन्त्रविधिना आज्यगा मन्त्रचोदिता ।
हविषा मधुपूर्णेन यथा वै विधिरेव च ॥

— (L. 1719) Dn1 सरात्रं. D3 व्याघातान् (for °त) D1 सोमज (for निप्रज) K3 Ñ3 V3 तनय् (for जनम्) K1 मानयित्वा मम जनम्, V3 B3 Dn1 °यन्निपुण जनम्, Dn1 मानयन्विप्र ध्वनम्, D3 3 °यन्निप्रयविप्रज्ञम् (D3 °म्राज्ञम्). (for ᵇ)

*Colophon.* — *Mention of the Epic*: K3 Dn1 D5. — *Mention of Khila*: K3 V3 3 B Dn1 D1-4. — *Sub-parvan*: K Ñ3 V3 3 I Dn D1 D3 3 4 5 (3 वी)( K3 D1 पु)ष्करम्, D3 4 पौष्करप्रादुर्भाव — *Adhy. no.*: K3 1, V3 214, Dn, D5 213, D3 201, D3 229, D4 209; G3 305

(L. 1720) K1 4 Dn1 सयुज्य; D3 प्रयुज्य (for सं°).

वैशंपायन उवाच ।
अथ दीक्षां समास्थाय सर्वे विष्णुमया गणाः ।
पुष्करादग्निमुद्धृत्य प्रणीय च यथाविधि ॥
जुहुवुर्मन्त्रविधिना ब्राह्मणा मन्त्रचोदिताः ।
हविषा मन्त्रपूतेन यथा वै विधिरेव च ॥
स चाग्निर्विधिरत्तत्र वर्धते ब्रह्मतेजसा ।
तेजोभिर्बहुलीभूतः प्रभुः पुरुषविग्रहः ॥
ब्रह्मदण्ड इति ख्यातो वपुषा निर्दहन्निव ।
विश्वरूपप्रहरणो ह्यसिचर्मधनुर्धरः ॥
गदी च लाङ्गली चक्री शरी चर्मी परश्वधी ।
शूली वज्री खड्गपाणिः शक्तिमान्वरकार्मुकी ॥
विष्णुश्चक्रधरः खड्गी मुसली लाङ्गलायुधः ।
नरो लाङ्गलमालम्ब्य मुसलं च महाबलः ।
धनुमिन्द्रस्तपोयोगाच्छतपर्वाणमाक्षिपत् ।
रुद्रः शूलं पिनाकं च मनसाधारयत्प्रभुः ॥
मृत्युर्दण्डं सपाशं च कालः शक्तिमगृह्णत ।
जग्राह परशुं त्वष्टा कुबेरश्च परश्वधम् ॥
निर्विकारैः समायुक्ताः शतशोऽथ सहस्रशः ।
विश्वकर्मा च त्वष्टा च चक्राते ह्यायुधानि तु ॥
इन्द्राग्नी रथं प्रादात्सूर्याय च प्रतापिने ।
परमात्मा ददौ विष्णू रुद्राय च महात्मने ॥
छन्दोभिरेव त्वष्टा तु स चकाराथ वाहिनीम् ।
विश्वकर्मा विमानानि चकार बहुभिः क्रमैः ॥
शरीरांशं समुद्धृत्य विष्णुः सत्यपराक्रमः ।
पुष्करात्पर्वणि घनान्पृतनार्थं प्रकल्पयत् ॥
यां चैव सूर्यकक्षाणां त्वरया समकल्पयत् ।
ययाभियुज्य संग्रामे शत्रुं निर्भिन्दे रणे ॥
स तं दण्डं समुचितं निर्विकारं समाहितम् ।
ब्रह्मा जग्राह विधिना अन्तर्धानगतः प्रभुः ॥
स्वैः प्रभावैश्च बहुधा सोऽस्त्रग्रामं चतुर्विधम् ।
ऐन्द्रमाग्नेयवायव्यं रौद्रं रौद्रेण वर्चसा ॥
एभिर्विकारैः संयुक्ता दितेः पुत्रा महाबलाः ।

B1.3 D33 Cal ed किं कुर्वन्त, D5 कर्म कुर्वेम् (for किमकु°) K1.3 D1 परस्परम्, h4 अत परम् (for तत प°) —(L 1721) B3 अतु (for यत्र) K3 त्रियते (for हन्यते) —(L 1722) V1 समाम्नाय (for °स्थाय) h1.3 D1 सर्वे विष्णुपरायणा (for °) —(L 1724) N3 om line 1724ᵃ K1-3 D1 नोदिता (for चो°) —(L 1725) D3 स (for च) G1 यथाविधि हुतेन तु (for °) —(L 1726) Dn1 -तेजस, G3 -चेतसा (for तेजसा) —(L 1728) Bom ed दण्डी (for दण्ड) D3 विमुखान (for वपुषा) —(L 1730) K4 V3 D1.3 गदया, h2 गदावान्, V1 B D3 D3.5 G3 सगदो (for गदी च) h2 शूली (for शरी) V3.3 वर्मी, D3 धर्म (for चर्मी) —(L 1731) h1 D3 D1 चक्री (for वज्री) D1 शूली खड्गी चक्रपाणि (for °) Bom Poona eds G(ed) कार्मुक (°की) —(L 1732) Ñ3 V3 स्वामी (for खड्गी) D32 D3 मुसली लाङ्गलायुध (for °) —(L 1733) D3 स्वराज हलमालाद्य (for °) G3 हलायुध (for महाबल) —(L 1734) h2 चतु पर्वं समाक्षिपत् (for °) —(L 1735) Bom Poona eds G(ed) मुनि (for प्रभु) —(L 1736) h2.4 Dn D1.3.5 पाशमाप, D2 पाशमय, D3 (by corr) च पाश च (for सपाशं च) —(L 1737) G3 धनुर्महत् (for परश्वधम्) —(L 1738) D3 आदित्य इव दीप्यन्त (for °) —(L 1739) h2 B D6 [आ]युधं बहु (h2 धनु) (for [आ]युधानि तु) —(L 1740) B1 Dn D5.6 G3 [अ]ग्नि (for [अ]ग्नी). K1 D4 स सूर्याय (for सूर्याय च) —(L 1741) K1.2 D4 विष्णो; K3.4 D1.2.6 G3 कृष्णो (for विष्णू) —(L 1742) G1 चकार रथवाहिनीम् (for °) —(L 1744) Bom Poona eds समुत्पन्न, G(ed) समुत्पत्य (for समुद्धृत्य) K2 वराम्भूधनकल्पथात् (for °) —(L 1745) K1 B3 D1 G3 Cn बलात्, Ñ3 V1.3 B1.3 Dn D3 D3.5.6 घनात् (for घनान्) h1.3.4 Ñ3 B2 Dn1 D33 D1-4 प्रकल्पयन्, B1 D6 प्रवर्तयन्, B5 प्रवर्तत, D32 G3 प्रकल्पयेत् (for °यत्) —(L 1746) V1.3 D3 ज्या Dn1 या (for यां) D4 सर्व (for सूर्य) D5 (marg as above) सेन्द्राणां (for -कक्षाणां) K1 या चैव सूर्यसेन्द्राणां, h2 नद्यो न देवरसूर्यो, D3 ज्या (marg या) चैव सूर्यवक्षाणां (for °) K1 D4 रक्षार्थं, D3 त्वथा च, Bom Poona eds G(ed) वाचा वै (for त्वरया) K3 रक्षार्थमकल्पयत्, V3 त्वचा समवकल्पयत्, D32 त्वचया समकल्पयेत्, D5 त्वष्टा वै समकल्पयन् (for °) — D3 om lines 1547-1549 —(L 1547) K2 ते पूज्य, K3 D3 [अ]भिपूज्य; K3 °युक्त, Dn1 D1.3 [अ]भिपूज्य D4 संयुज्य (for [अ]भियुज्य) h1 यथा संयुज्य संग्रामे, Dn1 ययाभिपूज्य संग्रामे (for °) h1 Ñ3 B1 D1 G3 शत्रून् (for शत्रुं) —(L 1748) h1.3 स तु, h2.4 D1 शत (for स तं) —(L 1749) B3 बहुधा (for विधिना) —(L 1750) D5 स्वभावैश्च (for प्र°) B1.3 D6 विधिना, D4 बहुना (for °धा) K1

तपसा शिक्षया चैव अस्त्रैः प्रहरणैस्तथा ॥
बलेन चतुरङ्गेण वीर्येण च समाहिताः ।
अप्रधृष्या रणे सर्वे क्षणेनैवाभवंस्तदा ॥
ते विहाय गुहामध्ये समाण्डोपस्करे रथे ।
मन्दरस्य गिरेः पादे त्रिचेरुर्वसुधातले ॥
चतुरङ्गं बलं सर्वं संहृत्य नमसः प्रभुः ।
विष्णुरेव महायोगी चचार वसुधातले ॥
भूयोऽन्यत्तप आसेदुश्चरन्तो ब्राह्मणैः सह ।
तैश्च सर्वैः सुरगणैश्चर्मचीरनिवासिभिः ॥

Colophon

जनमेजय उवाच ।

प्रभ्रष्टिखिले वर्तमाने निर्मर्यादे महामहे ।
अविनाशे च भूताना कथमासन्प्रजास्तदा ॥

वैशंपायन उवाच ।

अभ्यषिञ्चन्पृथुं वैन्यं पुरा राज्ये प्रजापतिः ।
राज्याय ऋषिभिः सार्धं प्रजाधर्मपरायणः ॥
एष वः परमो राजा अनुरागादजायत ।
त्रेतायां संप्रवृत्तायामन्योन्यमनुतस्थिरे ॥
एष नो वृत्तिदाता च शिल्पाना च समर्पिता ।
निर्माता सर्वभूताना सत्यधर्मेण कर्मणा ॥
एतस्मिन्नन्तरे देवा गन्धमादनसानुषु ।
बहुभिर्नियमैः श्रान्ता निषण्णा गिरिसानुषु ॥
अथ गन्धं समाघ्राय समन्तादेवदानवाः ।
माधवे समये प्राप्ते तेन गन्धेन दर्पिताः ॥
पुष्पमात्रस्य यद्वीर्यं मारुतेन निमर्पितम् ।
मनोग्राहि सुरं सर्वं पार्थिवं गन्धमुत्तमम् ॥
ते दैत्यास्तेन गन्धेन किंचिद्विस्मयमागताः ।
प्रसन्नमनसो भूत्वा परं सौख्यमुपागताः ॥
ऋतुश्च सहिताः सर्वे तेन गन्धेन दर्पिताः ।
पुष्पमात्रस्य यद्वीर्यं किं तस्य फलतो भवेत् ॥

---

Ds Di स्त्रब ( for सोऽस्त्र ) —( L 1751 ) V3 आश्रय ( for आसेय ) G3 धायन्त्ये ( for °न्त्य ) D5 तेजसा ( for वर्चसा ) —( L 1753 ) Ds1 प्रकारै ( for वि° ) —( L 1753 ) Bom ed स्वर्णे Poona eds G(ed) स्वार्थं ( for मर्त्रै ) G3 बहुरि चैव ( for प्रहरणैस ) Ds1 स्वर्णे प्रहरणेन च ( for ° ) —( L 1755 ) K3 ı Dn Di 2 s ( marg as above ) क्षणेन सम पद्यत , Bom Poona eds G(ed) समपद्यन्त वै तदा ( for ° ) —( L 1756 ) V1 ı गुहां मध्ये , Ds G3 सभामध्ये , Di s गुहामध्य ( for °ध्ये ) K1 रत्ने K3 तथा ( for रथे ) K4 सभा ण्डोपस्करौ रथं , D6 °पस्कर रथम् ( for ° ) —( L 1757 ) B1 वसुधा ( for वसुधा ) —( L 1758 ) K1 D3 तपसा , K2 V1 ı B1 2 D5 तपस , D6 G3 तपसा ( for नमस ) —( L 1759 ) Bom ed G(ed) महायोगात् Poona ed °योगात् ( for °योगी ) —( L 1760 ) G3 प्रजया ( for ब्राह्मणै ) G3 Bom Poona ed G(ed) धर्मं ( for चर्म )

Colophon — *Mention of the Epic* K4 Ds1 Di s — *Mention of Khila* V1 2 B Ds1 Di s — *Subparvan* K N3 V1 ı B Dn1 Ds Di-2 s s G3 पौं K3 पु)- ष्करम्, Dn1 Di पु( Ds पौं )ष्करप्रादुर्भाव — *Adhy no* K3 ( marg ) 2 , V1 216 , Do 23 , Ds1 214 ; Di 202 , D1 210 , C3 5?6

( L 1762 ) V3 भ्रातस्तु ( hypermetric ) ( for प्रभ्रष्ट ) K [प्र]खिले ( hypermetric ), D3 निखिले ( hypermetric ) ( for खिले ) N3 V1 ı D5 परिग्रहे ( for महा° ) —( L 1763 ) K1 D6 विनाशे सर्वभूतानां , K2 अविनाशाद्भू° ; K4 D3 2 s अवि( D3 ı °वि )नाशेन भू° ( for ° ) —( L 1764 ) K1 अभिषिच्य ( for अभ्यषिञ्चन् ) K2 राजेन्द्र ( for वैन्य ) — F r line 1764 N3 V1 ı B1 2 Ds Di 6 [illegible]

57** पृथुं वन्य प्रजारक्षणस्याभिषेकप्रत्यादि ॥

—( L 1765 ) K2 यज्ञाय ; K3 D1 2 s ( sup lin as above ) धारणाय , K4 V3 D5 ध्यानाय , D3 यज्ञार्थं ; D6 G3 सत्राय ; D5 ( sup lin ) राष्ट्राय ( for राज्याय ) — D7 om lines 1766 1767 —( L 1766 ) V3 B1 s D1 ( sup lin ) स ( for च ) B1 s D6 Cal ed स्त( B3 त )नुरागो स्व° Di °सौख्य- जायत ( for ° ) —( L 1767 ) V1 G3 अभि ; D3 मति ( for मनु ) K1 अन्योन्यमुपतस्थिरे ; K2 °न्य ते प्रजास्थिरे ( for ° ). —( L 1768 ) K1 D3 वो ( for नो ) N3 V1 ı B3 Ds D3 प्रजनिता ( for समर्पिता ) Bom Poona eds G(ed) निर्माता च प्रवर्तिता ( for ° ) —( L 1769 ) Dn Di निर्मिता ( for निर्माता ) D3 धर्म ( for सत्य ) —( L 1770 ) D6 स्थप मान्नमुषमम् ( for ° ) — K3 G3 om ( hapl ) line 1771 —( L 1771 ) D1 बहुभिर्विविधै श्रान्ता ( for ° ) —( L 1772 ) Dn मानसा ( for सा° ) —( L 1773 ) N3 Dn D3 समर ( for °ये ) K3 2 s V1 D1 s प्राप्ते समये ( K3 s D3 s °च ) प्राप्ते ( for ° ) N3 V1 s I1 गर्वितः ( for द° ). — G3 om ( hapl ) lines 1774 1777 K3 om ( hapl,

अनुमानेन विज्ञेया विविधाः कर्मबुद्धयः ।
शुभाश्चैवाशुभाश्चैव बुद्धिप्राणेन देहिनाम् ॥
तस्माद्वयं पयोमध्ये ओषधीर्निर्मथामहे ।
मन्दरेण विशालेन बलिना कामरूपिणा ॥
समुद्रमभिसरम्भान्मभीमः सोमजं जलम् ।
पीत्वा च सहिताः सर्वे प्रस्थिताः कामरूपिणः ॥
विष्णुरेवाग्रणीस्तेषां भविष्यति महाबलः ।
दिवं च वसुधां चैव भोक्ष्यामः सह शत्रुभिः ॥
समूलपत्रशाखाश्च सपुष्पाः सफलाशिनः ।
सर्वमहाश्च गृह्णीमः सुधा च वसुधातले ॥
उद्धृत्य गिरिपादेभ्यो गन्धमादनसानुजान् ।
प्रभाष्य वचनं देवा मन्दरस्य प्रकम्पने ॥
समुद्धर्तुं प्रधावन्ति कम्पयन्ति स्म मेदिनीम् ।
निश्चयेन महावीर्या बाहुभिः परिणाहयन् ॥
न शेकुस्ते समुद्धर्तुं शैलेन्द्रं दनुपशजाः ।
निपेतुर्जानुभिर्जुष्टा विपुले पर्वतान्तरे ॥
समाधायात्मनात्मानं तपसा दग्धकिल्विषाः ।
पितामहं प्रपद्यन्त शिरोभिः कामरूपिणः ॥
तेषां मनोभिलषितं ब्रह्मा सर्वत्रगो वशी ।
ज्ञात्वा बहुविधैर्वाक्यैर्व्याजहार सरस्वतीम् ॥
अशरीरां शरीरस्थां परया वर्णसंपदा ।
सर्वलोकपतिर्ब्रह्मा लोकानां हितकाम्यया ॥
आदित्यैर्वसुभिश्चैव रुद्रैश्च समरुद्गणैः ।
दैवैर्यक्षैः सगन्धर्वैः किंनरैश्च प्रमाथिभिः ॥
समेत्य सहितैः सर्वैः शक्य उद्धरितुं गिरिः ।
अमृतार्थे महातेजा धातुभिः समरञ्जितः ॥
सुरासुरगणाः सर्वे समुत्पाट्य महागिरिम् ।
इत्यान्दा प्रपश्यन्ति वीरुधो हिमवद्रसम् ॥
एतच्छ्रुत्वा च वचनं सर्वेषामन्तिके तदा ।
दैतेया बाहुबलिनो मनोभिर्गीर्भिरेव च ॥
विनीडभूता वसुधा बभूव स्वरणाम्भसः ।
यत्र पुष्कर विन्यस्त सहितैर्देवदानवैः ॥

lines 1774 1776 — (L 1774) $K_1$ $B_3$ $D_3$ समर्पितम् (for विस॰) — (L 1777) $K_1$ $D_4$ -वदना (for -मनसो) $\tilde{N}_3$ $V_1$ $D_5$ सर्वे (for भूत्वा) $V_3$ om (hapl) line 1778 — (L 1778) $\tilde{N}_3$ सर्विता (for स॰) — (L 1780) $K_2$ $D_5$ विज्ञाय (for विज्ञेया) $K_1$ $D_6$ $G_3$ वृत्तय, $V_3$ भूमय (for बुद्धय) — (L 1781) $K_3$ बुद्धि $D_4$ बुद्धि (for बुद्धि) $K_1$ बुद्धि प्रायेण देहिनाम् (for ॰) — (L 1782) $B_1$ Dn $D_1$ ओषध्यो Dn Bom ed ओषध्यो (for ओषधीर्) — $K_4$ om (hapl) lines 1784-1785 — (L 1784) $B_1$ $D_5$ $D_6$ (marg) संरब्धा (for ॰म्भात्) Dn बले, $D_5$ गणा, $D_3$ बलम् (for जलम्) — (L 1787) $D_5$ (marg) $G_3$ शान्तिभि (for शत्रुभि) — (L 1788) $K_2$ सपुष्पा फलसस्थिता, $B_4$ Dn $G_3$ ॰ष्पा फलशालिन (for ॰) — (L 1789) $B_1$ Dn $G_3$ सर्वे (for सर्व) $D_3$ -प्राहे (for महाश्च) $K_4$ $\tilde{N}_3$ $V_1$ B $D_3$ $D_5$ वसुधां ; $K_4$ सुखं च (for सुधा च) — (L 1790) $K_2$ सानुगु, $K_4$ $L_3$ ॰सान् (for ॰जान्) — (L 1791) $D_4$ च वचो (for वचनं) $K_1$ दवो, $K_3$ Dn D (marg) $G_3$ दैत्या (for देवा) $K_4$ प्रतार्य वचन देवो (for ॰) $V_3$ $P_3$ प्रकल्पने (for ॰म्पने) — (L 1792) Dn G(ed) प्रधावन्त, Dn प्रयावन्ति (for प्रधावन्ति) — (L 1793) $K_3$ $D_1$ निश्चलन्तो (for निश्चयेन) $K_1$ $\tilde{N}_3$ $V_1$ B Dn $D_3$ $D_5$ $G_3$ Cn परिणाहिभि (for ॰हयन्) Dn $D_4$ बहुभि परिणा( $D_4$ ॰णा )हिभि (for ॰) — (L 1794) Bom Poona eds G(ed) शक्नुस् (for शेकुस्) — (L 1795) $K_3$ $\tilde{N}_3$ $V_1$ B Dn $D_3$ $D_5$ $G_3$ घृष्टा, $V_3$ घृष्टा (for जुष्टा) — (L 1797) $K_1$ $D_4$ प्रपद्यन्त ; $K_3$ प्रापतन्न, $B_3$ Dn $D_1$ $G_3$ Cn प्रपद्यन्ते, Dn ॰शेन (for ॰न्त) $K_4$ $\tilde{N}_3$ $V_1$ $P_3$ Dn $D_3$ $D_5$ $G_3$ Cn ॰रूपिभि (for ॰ण) — (L 1800) B Dn $D_3$ $D_5$ $G_3$ शरीरस्थ (for ॰रस्थां) — (L 1801) $G_3$ Poona ed -मतिर् (for पतिर्) $K_3$ (before corr) लोकानां च पितामह (for ॰) — (L 1804) $K_4$ $D_4$ उद्धर्तुं (for उद्धरितुं) $K_3$ $D_3$ शक्यमुद्धर्तुं( $K_3$ ॰हर्तुं )तु हरिम्, $\tilde{N}_3$ $V_1$ $B_2$ $D_3$ $D_5$ $G_3$ उद्धर्तुं शक्यते गिरि ( $B_3$ ॰रिम् ), $B_1$ उद्धर्तुं धरितुं गिरि ; $D_3$ उद्धर्तुं त मन्दगिरिम् (for ॰) — (L 1807) Cal ed हि यत्र (for हिमवद्) $D_3$ भवन् (for रसम्) $K_3$ $D_4$ त्रिबुधा हि महद्रुमम्, $D_4$ (marg) वीरुधो हि महद्रुमम् (for ॰) — (L 1810) $\tilde{N}_3$ व्याक्रीडभूता (for वि॰) $K_1$ Dn $D_1$ $G_3$ बहुधा (for वसुधा) $B_1$ Dn $D_1$ बभूवुर् (for ॰व) $D_3$ $G_3$ स्वरणाम्भसि (for ॰स) — After line 1810, $\tilde{N}_3$ ins

58** न च केचित्पिबन्त्यन्ये देवा नैव च दानवा ।

— $G_3$ om lines 1811-1815 — (L 1811) Dn Bom

समेयुस्तत्र सहिता यजमाने महासुरे ॥
ब्राह्मणा वेदविद्वांसो महातपपरायणाः ।
यतयश्चापरे सिद्धा योगधर्मेण भारत ॥
मुनयो वालखिल्याश्च धन्या धर्मेण शोधिताः ।
बहवो हि द्विजा मुख्या नित्यं धर्मपरायणाः ॥
ऋषयश्च महाभागा विप्रैः पूज्याः सहस्रशः ।
विपुलै रत्नविभवैर्ह्रियमाणैस्ततस्ततः ॥
शुक्रस्तु सह पुत्रेण दैत्यं याजयते प्रभुः ।
हिरण्यकशिपुर्मध्ये गणानां ज्वलनप्रभः ॥
हिरण्यकशिपुश्चैव व्याजहार सरस्वतीम् ।
कामाद्वर ददानीति तद्वै सम्प्रतिपद्यताम् ॥
विष्णुर्वामनरूपेण भिक्षां तां प्रत्यगृह्णत ।
हिरण्यकशिपोर्हस्तात्त्रिपदे पदमेव च ॥
ततः क्रमितुमारेभे विष्णुः सत्यपराक्रमः ।
त्रीँल्लोकांस्त्रिपदैः क्रान्त्वा दिव्यं वपुरधारयत् ॥
हतराज्याश्च दैतेयाः पातालविवरं ययुः ।
ससैन्यगणसंनद्धाः सप्रासाः सासितोमराः ॥
सयन्त्रमुद्गराश्चैव सपताकाः सध्वजाः ।
सचर्मवर्मकोशाश्च सायुधाः सपरश्वधाः ॥
तथेन्द्रविष्णुसहिताः समस्तेऽभ्युत्थिता गणाः ।
अभ्यषिञ्चन्प्रमुदिता लोकानामधिपं सुराः ॥
स तान्स्वधामृतेनाशु पितॄन्वै समतर्पयत् ॥
ब्रह्मा तदमृतं दिव्यं महेन्द्राय प्रयच्छति ।
अक्षयश्चाव्ययश्चैव संवृत्तस्तेन कर्मणा ॥
ततः शङ्खमुपध्मासीद्दिपता लोमहर्षणम् ।
पितामहकरोद्भूतं जनित्रे प्रथमे पदे ॥
स श्रुत्वा शङ्खशब्दं तु त्रयो लोकाः समाहिताः ।
निर्वृतिं परमां प्राप्ता इन्द्रं नाथमवाप्य च ॥

---

महितो (for °) — (L. 1831) D1 कामत (for कामद्) — (L. 1832) K1 पार्थिव स महासुर (for °) — (L. 1833) Bom. ed. G(ed) महापस्र (for °यस) — (L. 1834) K2 V1 D1 विमल (for विपुल) D6 (inf. lin.) तदा, G3 सद् (for तप) K1 यद्भुद्विमलं यथा (for °) — (L. 1837) D2 पुत्रेन (for -धर्मेण) — (L. 1838) D6 नाना (for धन्या) K1 2 B2 D1 G3 शोभिता, K2 4 D3 Dn D1 3 4 शापिता, D6 (marg. as above) तोषिता (for शोधिता) Ñ2 नानाधर्मेण शोभिता, V2 नानाधर्मोपशोभिता, D2 योगधर्मेण पोषिता (for °) — (L. 1839) K1 2 B3 Dn D1 नित्याः, D2 3 नित्य (for नित्यं) — (L. 1840) D2 महाभाग (for °भागा) — (L. 1841) Dn D2 G3 जन (for रत्न) K1 2 D1 शोभैश्च (for विभवैर्) V1 2 B D2 विपुलै रत्नवि(V1 2 °त्नै वि)भवे (for °) K2 ह्रियमाणम् V1 2 D D6 °माणे (for °माणैस्) D2 क्रियमाणा इतस्ततः (for °) — (L. 1842) G(ed) ततस्ततः (for यद्° ) D1 प्रभुम् (for प्रभुः) — K1 om. (hapl.) lines 1843 — (L. 1843) K1 2 B Dn D1 4 G3 हिरण्यकशिपुं (for °पुर्) G3 दैत्यानां (for गणानां) K1 2 D2 प्रभवम्, K2 V1 B3 (marg. as above) 3 D1 6 प्रभु (for प्रभ) Dn गणानां प्रभव प्रभु (for °) — (L. 1845) K1 2 B1 3 D1-4 ददामि, K2 D3; G3 °नि (for °नि) — (L. 1846) D3 वसुधा (for भिक्षां तां) K2-4 Dn D1 2 G3 C0 प्रतिगृह्णति K2 B1 (marg.) प्रतिगृह्णाति (for प्रत्यगृह्णत) — (L. 1849) B1 मुनिभि (for त्रिपदै) K1 क्रम्य, G3 कृत्वा (for क्रान्त्वा) K1 4 B3 Dn D1 3 त्रीँल्लोकान्मुनिभिः क्रान्तैर्, D2 °कान्मु निभि सक्रान्ते (hypermetric), D3 °कांस्त्रिपदे क्रान्ते (for °) — (L. 1850) G(ed) ते दैत्या (for दैतेया) Dn पाताल (for °ल) — K1 2 D4 विवरे (for °रं) — (L. 1851) B2 3 D6 -संनद्धा (for °संनद्धाः) D3 ससैन्य गणसंनद्धा (for °) Ñ2 सित (for सासि) — (L. 1852) D6 पताकाश्चैव सध्वजा (for °) — (L. 1853) V1 D3 -कोशास् (for कोशाश्च) D6 परिच्छदा (for परश्वधा) — (L. 1854) K6 तथैव; N2 V1 2 Dn3 D6 तथेन्द्र, B3 तत्रेन्द्र; G3 अथेन्द्र (for तथेन्द्र) K2 om. line 1854[b] K1 साध्याश्च (for समस्त) B3 D6 ऽभ्युत्थिता D6 G3 समुत्थिता (for ऽभ्यु°) K2 D1 साध्यास्तेऽभ्युत्थिता गुणा (for °) — (L. 1856) Ñ2 V2 D3 D4 [अ]थ, D2 [पु]थ, D6 [स]शत् (for [आ]शु) K2 सनातन स्वधामृते (for °) B1 2 Dn2 D3 पितॄस्त्वे (for पितॄन्वै) K4 D1 समतर्पयत्, D4 °तर्पेत (for °तर्पयत्), K4 Dn1 पितॄस्त्वे समकल्पयत (Dn1 °तर्पयत्) (for °) — (L. 1858) K1 3 D4 ... , K4 D1 4 ... (for °) K3 4 Dn Ds1 D1-3 संवृत्तस्, D6 सद्वृत्तस् (for संवृत्तस्) Dn2 संवृत्त स्वेन कर्मणा (for °) — (L. 1859) D3 उपाध्माय (for °ध्मासीद्) — (L. 1860) K2 करोन्मुक्त (for °द्भूत) V1 B2 3 D3 जनित्ते; D3 पतिते, G3 Bom. Poona eds. G(ed) जनित्र (for °त्रे) — (L. 1861) V2 श्रुत्वा शङ्खस्य शब्दं च (for °) — (L. 1862) D6 प्राप्य (for प्राप्ता) G(ed) प्राप्यम् (for नाथम्) — (L. 1863) B3 अग्नि (for वह्नि) Ñ2 V2 2 D3 संप्रयुक्तानि संभवै; D6 ससत्त्वा अग्निसमवै (for °) — (L. 1864) G3 सहितैर् (for त्रिह°)

सर्वैः प्रहरणैश्चैव संयुक्ता वह्निसंभवे ।
मन्दराग्रेषु विहृतैर्ज्वलद्भिरिव पावकैः ॥

Colophon

वैशंपायन उवाच ।

ततो महति वृत्तान्ते स्थिते राज्ये महोदये ।
देवाना मानुषाणां च सहवासोऽभवत्तदा ॥
एकतः समभीयन्ते महिलाः प्ररुदन्ति च ।
स्वयं च भागं गृह्णन्ति यज्ञकर्मणि भारत ॥
प्राचेतस ततो दक्ष दीक्षिता वै बृहस्पतिः ।
वाजिमेधाय भगवानृषिभिः परिवारितः ॥
तस्मिन्पैतामहे यज्ञे दक्षस्य विदितात्मनः ।
शामित्रमकरोद्रुद्रो भागार्थे सह नन्दिना ॥
रुद्रस्यैव हि तद्रूपं द्विधाभूतं तदीप्सया ।
जातः परमधर्मात्मा नन्दी पुरुषविग्रहः ॥
तेन योगेन राजेन्द्र यत्तद्ब्रह्म सनातनम् ।
विहित सत्यवचनैस्तेनैव परमात्मना ॥
सरूपैश्चाप्यरूपैश्च निरुपाक्षैर्घटोदरैः ।
ऊर्ध्वनेत्रैर्महाकायैर्विकटैर्वामनैस्तथा ॥
शिशिरैर्जटिभिश्चैव ज्यक्षैर्वै शङ्कुकर्णिभिः ।
चीरिभिश्चर्मिभिश्चैव कूटमुद्गरपाणिभिः ॥
सघण्टाचीरिभिश्चैव मुखमेखलधारिभिः ।
सहस्रकटकैश्चापि स्वर्णकुण्डलधारिभिः ॥
सडिण्डिमैः सभेरीकैः समृदङ्गैः सवेणुभिः ।
एतैः परिवृतो देवो भवं स समुपाव्रजत् ॥
सशङ्खमुरजैश्चापि सतालतलपाणिभिः ।
उमायुधधरो देवः सपिनाक इवान्तकः ॥

---

COLOPHON — *Mention of the Epic* K1 Ds2 D5 — *Mention of Akhila* V1 B D5 D1 — *Sub parvan* K Ñ2 V1 B Dn1 D5 D1 G2 पौ(K1 g )ष्करम्, Dn2 D2 पौ( Dn2 g)ष्करप्रादुर्भाव — *Adhy no* K2 4, V2 217, Dn 25, Ds2 216, D1 204, D2 232, D5 212, G1 358

( L. 1865 ) G2 यज्ञ ( for राज्ये ) — ( L 1866 ) K2 दानवानां ( for मानुषाणां ) Dn Bom Poona eds G(ed ) दे ( Dn दै )वताना मनुष्याणां, D5 G2 देवाना च मनुष्याणां ( G2 °हासश्च ) ( for ° ) — ( L. 1867 ) K2 V1 B1 D1 Ds1 D5 समभीयन्ति, D2 °यजन्त ( for °भीयन्ते ) K2 प्रहसन्ति, Ñ2 B1 D4 प्रवदन्ति, D1 प्रचरन्ति, D5 प्रमुदन्ति ( for प्ररु° ) — For line 1867, G2 subst

63** एकतो देवयोषाश्च प्रगायन्ति महर्षय ॥

— G2 om lines 1868 — ( L 1869 ) D1 G2 दीक्षयित्वा ( for दीक्षिता वै ) V2 प्रजापति ( for बृहस्पति ) — ( L. 1870 ) G2 ऋषिभिर्विविधै क्रतुम् ( for ° ) — ( L. 1871 ) Ñ2 V1 B Dn D4 D5 मातामहे, D1 पिता°, G2 पैतामह ( for °महे ) K2 Bom Poona eds यज्ञ ( for यज्ञे ) D2 तस्मिन्महतो महा यज्ञे ( for ° ) K1 Dn [अ]विदितात्मन°, K2 B2 विहि° ( for विदि° ) — ( L. 1872 ) Ñ2 B1 D1 D5 भागार्थं, V1 भगवान् ( for भागार्थे ) — ( L. 1873 ) K2 D5 यदीप्सया, Ñ2 V1 D2 तदिच्छया ( for तदीप्सया ) K1 द्विधाभूय यदीप्सया ( for ° ) — ( L. 1874 ) D1 यथो ( for जात ) — ( L 1876 ) K2 Ñ2 V2 B1 D1 °वचने ( for °नैस ) G2 विहितं च द्विधाभूत ( for ° ) — After line 1876, G2 ins

64** एवभूतो महादेव शामित्रमकरोत्प्रभु ॥
एव कर्मणि निर्वृत्ते वाजिमेधात्मके तदा ।
देवाश्च भाग गृह्णन्ति दक्षस्य च महात्मन ॥
तत क्रुद्धो महादेवश्चापमुद्यम्य वीर्यवान् ।
नन्दिना सह भूतैश्च मनुष्यत्वे समागतः ॥

— ( L 1877 ) K1-4 Ñ2 V1 B D1 स्वरूपैश्च, D5 सरू°; D1 G2 सुरू° ( for सरू° ) Dn2 निरूपाक्षैर् ( for [अ]प्यरूपैश्च ) G2 सुरूपैश्च निरूपैश्च ( for ° ) K1 V2 जटाधरै ( for घटोदरैः ) D2 घटाग्रैर्वसुधृत ( for ° ) — ( L. 1878 ) V2 विरूपैर्, B2 विराटैर्, D2 विकारैर् ( for विकटैर् ) D1 वामनैस् ( for वाम° ) — ( L 1879 ) D2 ऋषिभिर् ( for शिशि° ) D1 जटिलैश् ( for जटिभिस् ) D4 शिखा-भिर्जटिलैश्चैव ( for ° ) D2 त्रिनेत्रै ( for त्र्यक्षैर्वै ) — D5 om ( hapl ) line 1880 — ( L. 1880 ) Ñ2 V2 धारिभि ( for पाणिभि ) — V1 om ( hapl ) line 1881 — ( L. 1881 ) B2 सघण्टैश्च G2 सुघण्टा ( for सघण्टा ) K1 Dn -चारिभिश्च, B1 D1 धारि° ( for -चीरि° ) D2 सपाशलाढिभिश्चैव, D5 ( also marg ) सघण्टादि°, D2 वल्किभिर्वै° ( for ° ) — K1 D5 om ( hapl ) line 1882 — ( L. 1882 ) B1 D2 D2 G2 सहस्र, D2 सकञ्चु ( for सहस्र ) — K1 om ( hapl ) lines 1883-1885 — ( L. 1883 ) Poona ed. सभेरीभि ( for °रीकै ) K2 डिण्डिमैर्भेरीकैश्च ( for ° ) — ( L. 1884 ) K2 D1 समुपावसत् D2 ( marg ) देवत् ( for °व्रजत् ) — ( L. 1885 ) D2 सशङ्खैः सुरजैश्च ( for ° ). D2 सताल ( for सताल° ) G2 Bom Poona Cal eds G(ed) एव ( for सम ) — ( L. 1887 ) K1 D5 धर्मो, K2 Ñ2 V1 B1 Dn2 Ds2 D1 ( for धर्मे ( for धर्मे )

विरराजार्चिभिर्दीप्तैर्मखैर्मखवतां वर ।
कालाग्निरिव दीप्तार्चिर्जगद्दग्धुमिवोद्यतः ॥
नन्दी पिनाकपाणिश्च जघ्नतुर्मखमुत्तमम् ।
युगान्त इव कालाग्निः क्षिप्रं दग्धुमिवोद्यतः ॥
यूपमुत्क्षिप्य धावन्ति निशाचरगणास्ततः ।
त्रासयन्मुनिसंघांश्च चीरचर्मनिवासिनः ॥
हवींष्यन्ये पिबन्त्येव जिह्वाभिस्ताम्रलोचनाः ।
भक्षयन्ति पशूनन्ये रसनान्तैः प्रलम्बिभिः ॥
मुमुचुश्चापरे यूपान्प्रसभं प्रहरन्ति च ।
वह्निमन्ये प्रसिञ्चन्ति वारिभिः प्रहसन्ति च ॥
सोममन्ये जहुः केचिन्नेत्रैस्ताम्रनिभेक्षणैः ।
दर्भान्केचिद्विलुम्पन्ति हस्तैः पद्मदलप्रभैः ॥
बभञ्जिरे च शाला[ला]न्कलशांश्चापविव्विरे (?) ।
चिच्छिदुः काञ्चनान्वृक्षान्कशोभार्थमुपकल्पितान् ॥
निर्भिदुश्चैव पात्राणि मुमुचुश्च हिरण्मयान् ।
लुलुपुश्चैव पात्राणि ममन्थुश्चारणीमथ ॥
आरुनश्चैव प्राग्वंशाल्लुलुपुश्च समाहिताः ।
चखादिरे पुरोडाशान्रसांश्चैव चकर्तिरे ॥
एवं दिवा च रात्रौ च भिद्यमानो महामखः ।
चुक्रोश च महानादान्भिद्यमान इवार्णवः ॥
धनुः सशरमादाय पूर्वदत्तं स्वयंभुवा ।
कृतं कीचकवेणुभ्यां सशरं सुमहद्बलम् ॥
प्रतिगृह्य महादेवः स शरे समयोजयत् ।
धनुर्विगृह्य जानुभ्यां जघान स महाक्रतुम् ॥
स विद्धस्तेन बाणेन रुरुः समुत्पतितः क्रतुः ।
मृगो भूत्वा नर्दमानो ब्रह्माणमुपधावति ॥
शरेणाभिहतप्राणं न लेभे प्रशमं भुवि ।
शरणार्थी ह्यहं प्राप्तः शरेणान्तर्गतेन च ॥
तमुवाच मृगं ब्रह्मा शुभं सानुनयं वचः ।
स्वरेणोत्तमवीर्येण गम्भीरेण सुभाषिणा ।

D3 मखभृता (for °वता) — (L 1888) K2 हर्तुम्; D3 भक्तुम् (for दग्धुम्) — D6 om (hapl) lines 1889 1890 — (L 1889) N2 V3 जघ्नतुः (for °घ्न°) K2 यज्ञम् (for मखम्) — (L 1890) Ñ2 सत्र, D3 (before corr as above) क्षतु (for क्षिप्र) — (L 1891) Ñ2 V1 3 D3 आक्षिप्य (for उत्क्षिप्य) — (L 1892) G3 मृग (for मुनि-) D3 निशाचरगणास्तदा (for °) — (L 1893) K3 हवींष्यन्ये पिबन्त्यन्य (for °) — (L 1894) K1 3 B D5 6 रसनाग्रैः (for °नान्तैः) Dn3 Bom Poona eds G(ed) रसनाग्रैश्च लम्बिभि [G(ed) °न] (for °) — C3 om line 1895 — (L 1895) K1 3 4 Dn D1 3 5 चक्रुः (for प्रसभ) K2 प्रभवन्ति हसन्ति च D4 प्रसभं प्रहसन्ति च (for °) — (L 1896) D3 वह्निमध्ये (for °न्ये) K1 3 D4 भाव यन्ति, K3 Dn D1-3 5 G2 शमयन्ति (for प्रसिञ्चन्ति) D1 G3 प्रहरन्ति (for °सन्ति) — (L 1897) K3 D1 2 3 मखे जहुः D6 चहुः केचिद्, D3 पपुः के° (for जहुः के°) K1 3 4 N2 V1 3 B1 D3 D7 4 G3 नेत्रै (D3 वक्त्रै) स्ताम्रान्त लोचनैः, K3 नेत्रैः पश्यन्ति चोत्कटम् D1 2 3 केचिन्नेत्रान्त लोचनैः (for °) — D3 om line 1898 — (L 1899) Ñ2 V1 3 B D3 D5 (marg) G3 यूपाग्रान् (for शाला°) K1 2 Ñ2 V1 L 3 D3 D1 G1 [अ]पि चिक्षिपुः V1 [अ]पि चिच्छिदुः, B2 D6 [ए]व चिक्षिपुः, D3 [अ]पचिच्छिदिरे (for °विव्विरे) K3 कलशान्विकरयन्ति च (for °) — (L 1900) D3 दिव्यान् (for वृक्षान्) B2 3 D6 सत्र (for उप) Ñ3 सोमार्थं समक ल्पितान् (for °) — (L 1901) G1 Bom ed G(ed) तै (for the third च) — (L 1902) G3 मुमुचुः (for लुलुपुः) Dn मुमुचुः (for ममन्थुः) — (L 1903) K3 4 Dn D3 D1 3 5 प्राग्वंश (for °शाल्) Ñ2 V1 3 अ(V1 आ)रुनश्चापि प्राग्वंश B D6 G3 आरुनश्चैव प्राग्वंशं (for °) D3 लुलुपुः परिमोहिताः (for °) — (L 1904) B1 यथा दिवि (for चखादिरे) Ñ1 V1 3 B2 Dn D2 3 D5 [अ]वकर्तिरे, B1 [अ]लुक°. G3 बभञ्जिरे (for चकर्तिरे) — (L 1906) D6 Cal ed महानाद (for °दान्) V3 चुक्रोशाथ महानादं (for °) — (L 1907) K1 -भूत (for दत्त) — (L 1908) K1 4 D1 वेणूना (for -वेणुभ्यां) K1 2 D1 सुमहत् Ñ2 सशर, D3 D5 समरे (for सशर) B1 3 समरेषु महाबल Dn सशर सुमहद्बली, G3 °रं स महा बलम् Bom Poona eds G(ed) समरे सुमहारव (for °) — (L 1909) K1 3 समरे; V1 D4 सशरं, B D3 D2 3 स शरै, G3 शरेण (for स शरे) — (L 1910) G3 विकृष्य (for विगृह्य) — (L 1911) V1 B1 समुत्पतति (for °तितः) — (L 1912) D3 मनोवेगो (for नर्दमानो) — (L 1913) D6 (marg as above) G(ed) स सुभ्र (for प्रशमं) D6 (marg) मुनि (for भुवि) — (L 1914) K1 2 D6 शरणार्थं (for °र्थी) D3 गृह (for ह्यहं) — (L 1916) Ñ2 V1 3 D3 G3 [अ]दात्त (for [उ]त्तम)

व्याघ्रव्याजेन सुप्रीतास्त्वान्तिकमुपागता ॥
इत्युक्त्वान्तर्दधे पार्थ गोत्रभित्सपुरोहित ।
विमाने व्याघ्रमारोप्य ह्रादिनेया दिव गता ॥
ब्राह्मणो विस्मयाविष्ट शिष्यै सह युधिष्ठिर ।
आश्रम प्राप धर्मज्ञो भार्यायास्त्वन्ववेदयत् ॥
कर्मकाण्डमशेषेण कृत्वा शिष्यान्विवाह्य च ।
भुक्त्वा भोगान्यथेष्ट स शिष्यै सह दिव गत ॥
तस्मात्सत्य पर धर्म देवतैरपि दुर्लभम् ।
स्वर्गलोकप्रद पार्थ सत्यमेव वदन्ति हि ॥
सत्यशीलो भव त्व च धृति मा मुञ्च सप्रति ।
सत्येन ते भवेत्स्वर्गस्त्वमप्येव समाचर ॥
य इद पुण्यमाख्यान शृणोति श्रद्धया नर ।
स विधूयेह पापानि स्वर्गलोके महीयते ॥

Colophon

युधिष्ठिर उवाच ।

प्राणिना रक्षणे पुण्य सर्वलोकप्रदायकम् ।
एव वदन्ति धर्मिष्ठ मुनयो मुनिकीर्तन ॥
तस्य धर्मफल देव दर्शयास्य यदूत्तम ।
मम प्रीत्या वद श्रीमन्भूयो भूयो नमाम्यहम् ॥

श्रीभगवानुवाच ।

यो दद्यादभय भूप भयविह्वलचेतसाम् ।
तस्य पुण्यफल वक्तु नाल वर्षशतैरपि ॥
एकत क्रतव सर्वे समग्रवरदक्षिणा ।
एकतो भयभीतस्य प्राणिन प्राणरक्षणम् ॥
सरक्षति महीपाल भयविह्वलचेतसम् ।
स जातोऽब्दशत स्नात गङ्गाया नात्र सशय ॥

कपोतस्याभय दत्त्वा शिबिर्नाम जनेश्वर ।
प्राप्तवान्वैष्णव लोक सत्य सत्य मयोदितम् ॥

युधिष्ठिर उवाच ।

शिबिर्नाम महातेजा राजा धर्मपरायण ।
कपोतस्याभय दत्त्वा कथ मुक्तिमवाप्तवान् ॥
त्वमेव वेत्सि तत्सर्वं लोकनाथ नमोऽस्तु ते ।
मयि कारुण्यभावेन कृष्ण सप्रति कथ्यताम् ॥

श्रीभगवानुवाच ।

आसीत्पुरा महाराज सत्यवादी दृढव्रत ।
शिबिर्नाम महातेजा सर्वधर्मसमन्वित ॥
वर्तमाने महायज्ञे शिबेस्तस्य महात्मन ।
देवलोकेऽथ गन्धर्वा गायन्ति स्म हि तद्यश ॥
तत्परीक्षा करोमीति वृत्रारि समचिन्तयत् ।
सखाय वरयामास वैश्वानरमरिंदम ।
इन्द्र श्येन कपोतोऽग्निर्भूत्वा तत्रोपजग्मतु ॥
कपोतो भीतिसयुक्त श्येनात्तस्मान्महामते ।
राजान शरण गत्वा प्रणिपत्येदमब्रवीत् ॥
भो भो राजन्महाराज शोभन चरित तव ।
श्येनो हिंसितुमुद्युक्तो मा पालय कृपालय ॥
इत्युक्त्वा सहसा राजन्राजान शरण ययौ ।
राजापि भयसविग्न कम्पमान वचोऽब्रवीत् ॥
इत एहि कपोत त्व भयशोकौ विमुञ्च ह ।
मृत्युतोऽपि भय नास्ति मत्समीपे स्थितस्य ते ।
विमुञ्चाद्यमहादुःखे त्यज कम्प सुखी भव ॥
एवमुक्ते तु राजेन्द्रे श्येनरूपी सुरेश्वर ।
आजगाम नृपस्याशु यज्ञवाट महामते ।

समता (for युगता) — D1 om lines 1287–1288 — (L 1287) G(ed) वलभित् (for गोत्र°) — (L 1289) D1 तत्र गत (for युधिष्ठिर) — (L 1290) G(ed) धर्मिष्ठो (for धर्मज्ञो) G1 आश्रम प्राप्य धर्मिष्ठो (for °) — For lines 1293 1294, G(ed) subst

94** सत्यात्परतरो धर्म सत्ये सर्व प्रतिष्ठितम् ।
तच्चैव नाकसोपान पारावारस्य नौर्यथा ॥

— (L. 1295) G(ed) सुव्रत (for सप्रति) — (L. 1297) D1 G(ed) [अ]न्वित (for नर) — (L. 1298) M1 G(ed.) सत्य (for स्वर्ग) — After line 1299 G(ed) ins.

95** सत्य सत्यमह वच्मि नात्र कार्या विचारणा ।

Colophon — *Sub-parvan* D1 G1.2 M1 आश्वमेधिक — *Adhy name* D1 M1 सत्यप्रशसनम्, G1.2 सत्यप्रशसा, G(ed) स्व मयदत्तया विप्रकन्याप्रसादकर्मसमाप्ति — *Adhy no* D1 G1.2 M1 G(ed) 10

(L 1299) G(ed) रक्षणे (for °णे) G(ed) स्वर्ग (for सर्व) — (L 1300) G(ed) सर्वे (for एव) M1 धर्मिष्ठा (for °ष्ठ) D1 -कीर्तित (for -कीर्तन) — (L 1301) G(ed) पुण्य (for धर्म) G2 तस्य धर्मस्य रूप हि (for °) G(ed) प्राण-तापनाशनम् (for °) — (L 1302) G(ed) मयि (for मम) G1 G(ed) नमोऽस्तु ते (for नमाम्यहम्) — D1 om lines 1304–1307 — (L 1304) G(ed) नाह दृष्टो नराधिप (for °) — (L 1308) D1 G1 G(ed) स स्नाने, G2 सुस्नाने (for स जातो) — (L 1309) G(ed) नराधिप (for जनेश्वर) — (L 1310) G1 [ए]रितम् (for [उ]दितम्) G(ed) सुरैरपि सुपूजित (for °) — (L 1312) D1 भवाप्तवान् (for °प्तवान्) — After the ref., D1 ins

96** अत्राप्युदाहरन्तीममितिहास पुरातनम् ।
अवान्तरसवाद यशस्य पुण्यवर्धनम् ॥

— (L 1316) G(ed) शिबिर्नामातितेजस्वी (for °) — (L 1318) D1 M1 लोकेषु (for -लोकेऽथ) D1 G2 यशस्विने (for हि तद्यश) — (L 1320) G1 G(ed) स्वहार (for सखाय) D2 सखाय वारयामास (for °) — (L 1322) D1 श्येनात्तस्मात्, G1 °त्स (for °त्तस्मात्) — (L 1325) G1 कृपानिधे (for °लय) — (L 1326) G1 G(ed) नृप (for ययौ) — (L 1327) G(ed) भयार्त (for सविग्न) — (L 1328) G1 एहि त्व (for इत एहि) D1 भयशोकौ (for °कौ) — For line 1330, G(ed) subst.

विभावसो नमस्तेऽस्तु गृह्यतां मद्यग्रहवि ।
काले पुण्ये महाभाग पाल्यस्व नमोऽस्तु ते ॥
कर्मण्योर्यजमानस्य वाच श्रुत्वा मनोरमाम् ।
प्रादादग्निश्च शस्त्र परं लोक बहुश्रुतम् ॥
यावत्काल चन्द्रसूर्यौ दिवि देवनिषेवितौ ।
तावत्ते कीर्तिरतुला लोके ख्यातिं गमिष्यति ॥
दिव्यरूपधरो भूत्वा भुक्त्वा भोगान्यथेच्छया ।
ब्रह्मलोकं यज श्रीमन्नित्युक्त्वान्तरधीयत ॥
तस्मात्त्वमपि राजेन्द्र पौरुष कुरु सर्वदा ।
पुरुषार्थादिव यान्ति बहवोऽन्ये नरोत्तमा ॥
प्राणेन मनसा वाचा कर्मणा कुरुनन्दन ।
परेषा दुःखिताना तु साहाय्य कुरु सर्वदा ॥
मद्ग्रह भक्तवर्गाणां मयि सन्न्यस्तकर्मणाम् ।
करोम्यहर्निशं पार्थ योगक्षेम महात्मनाम् ॥
परेषा हितकृन्नित्य यो वा को वापि भूपते ।
मनुष्य स हि विज्ञेयस्तस्याहं सुलभोऽनिशम् ॥
य इद पुण्यमाख्यानं शृणुयाद्भक्तिमानर ।
यथा ययौ शिविर्लोक ब्रह्मणोऽभ्येति सोऽपि च ॥

Colophon

युधिष्ठिर उवाच ।

श्रिय पते नमस्तेऽस्तु सर्वलोकस्य कारण ।
त्वत्पादाम्बुजनिष्ठस्य सर्वसम्पत्प्रदायक ॥
अष्टादशपुराणेषु यो धर्म प्रोच्यते बुधै ।
तत्सर्वं भगवान्वेत्ति स्वयं धर्मेश्वरो यत ॥
सूक्ष्मधर्मसमेकार्थं बहुलोकप्रद शुभम् ।
सुलभं सर्वजन्तूना मादृशामपि कामदम् ॥
पुण्यद पुण्यशीलाना स्वर्गद स्वर्गगामिनाम् ।
मोक्षद मोक्षकामाना पुत्रद पुत्रकामिनाम् ॥
पापघ्न पापजन्तूना त्वत्पादकमलेश्वर ।
सर्वयज्ञफलं तात सर्वतीर्थफलप्रदम् ॥
शिवमायुष्कर देव कीर्तनीय त्वदाश्रयम् ।
ज्ञानद भक्तिद नाथ त्वत्प्रिय परमेष्ठिन ॥
प्रिय शक्रस्य धर्मस्य वरुणस्य तथा प्रियम् ।
धनदस्य च शर्वस्य तथा वै चन्द्रसूर्ययो ॥
नक्षत्राणा च सर्वेषा गन्धर्वाप्सरसामपि ।
देवतानामृषीणा च ब्राह्मणाना प्रिय च यत ॥
पुण्यदेश पुण्यकाल पुण्ययोग तथा क्षयम् ।
एतान्सर्वान्महाभाग त्वितमद्वक्तुमर्हसि ॥
अस्माकं त्वद्वच पथ्य पवित्र पापनाशनम् ।
श्रोतुकामा अमी विप्रा यतयो ऋषयस्तथा ।
भ्रातरो मे महाभाग पाञ्चाली पापवर्जिता ॥
गता स्म सर्वे जगता निवास
पाण्डो सुताना प्रियकृष्णुरेस ।
त्वत्पादमूल तु वय हि सर्वे
गता स्म पाहीति तमित्यवोचत् ॥

वैशम्पायन उवाच ।

भक्ति विज्ञाय भूत्याना पाण्डूना हितकृद्धरि ।
उवाच मधुरं वाक्यं प्रीणयन्सर्वमानस ॥

श्रीभगवानुवाच ।

साधु साधु महाप्राज्ञ मतिस्ते विमलोज्ज्वला ।
धर्मे मे वर्तते बुद्धिमाक्मात्र लोकविश्रुत ॥
शृणु पार्थ महाभाग सर्वशास्त्रविशारद ।
वक्ष्यामि तव सप्रीत्यै धर्मसारसमुच्चयम् ।
नारदाय पुरा गीत नैमिषारण्यवासिने ॥
मरत्वन्त दिवि स्थाप्य यद्रीनिवासिना ।
विस्तरादुदितु वक्तु मया वर्षशतैरपि ॥
तस्मात्समासतो वक्ष्ये शृणु नान्यमना प्रभो ।
यस्य श्रवणमात्रेण सर्वपापै प्रमुच्यते ॥
धर्म श्रुतो वा दृष्टो वा कृतो वा कारितोऽपि वा ।
अनुमोदितो वा राजेन्द्र नयतीन्द्रपुर महत् ॥

---

देवदुन्दुभयो नेदुर्दिव्या कुसुमवृष्टय ।
इयेमरूपी तद्याक्ष्य रत्नेह प्रासवास्तदा ॥
— (L 1379) $D_1$ $G_1$ हृदश्वाहन (for °श्रयम्). — (L 1380) $M_1$ G(ed) वरम् (for वयम्) — (L 1381) $D_1$ $M_1$ धर्मिष्ठ, $G_1$ भद्र त (for धमद) — $G_2$ om line 1383 — (L 1387) G(ed) मां पालय (for पाल्यस्व) — (L 1389) $D_1$ बरालौके बहुश्रुतान् (for °) — (L 1390) $G_1$ निषेविते (for °तौ) — (L 1392) $D_1$ यथेप्सितम्, $G_1$ °रितान् (for °च्छया) — (L 1395) $D_1$ G(ed) नृपोत्तम (for नरो°) — (L 1396) G(ed) वाचेन (for प्राणेन) — (L 1398) $D_1$ G(ed) सत्य, $G_1$ ऽ आर्त (for मद्ग्र)
Colophon — *Sub-parvan* $D_1$ $G_1$ ऽ आश्वमेधिके — *Adhy name* $D_1$ अभयप्रदानम्, $G_1$ अभयप्रदानम्, $M_1$ G(ed) अभयप्रदानप्रदानम् — *Adhy no* $D_1$ $G_1$ ऽ $M_1$ G(ed) 11

— (L 1407) G(ed) तु भवान् (for भगवान्) $G_1$ G(ed) सर्वलोकेश्वरो यत (for °) — (L 1408) $G_1$ G(ed) यश सुखम् (for सूक्ष्मधर्म) — (L 1410) $M_1$ स्वर्गिणाम्; G(ed) -वासि° (for गामि°) — (L 1413) $D_1$ वद (for नाथ) — (L 1414) $D_1$ प्रियम्, $G_1$ शीघ्रम् (for प्रियम्) — (L 1416) $D_1$ सोमस्य (for धर्मस्य) $D_1$ धर्मस्य वरुणस्य च (for °) — (L 1421) $G_1$ तत्र धनान्, G(ed) एतत्सर्वं (for एता सर्वान्) — (L 1424) G(ed) पाञ्चाली कृष्णाकुला (for °) — Before line 1425, $D_1$ ins वैशम्पायन उवाच. — (L 1425) $G_1$ $M_1$ G(ed) अधीश (for निवास) — (L 1428) G(ed) [उ]वाच (for [अ]वोचत्) — $D_1$ om the ref — (L 1430) $D_1$ सुमनान्, $G_1$ [illegible] (for °स) — (L 1433) $D_1$ महाप्राज्ञ, $G_1$ °प्राज्ञ (for °भाग) — (L 1434) $M_1$ G(ed) तु (for स) $D_1$ धर्मसारसमुच्चयम् (for °) — (L 1439) $D_1$ $G_1$ स्मरण (for श्रवण) — ([illegible] 1440)

धर्मा बहुविधा प्रोक्ता पुण्यलोकप्रदायका ।
तेषां मध्ये यदेकं कृतवांस्ताकमश्नुते ॥
तन्नूनं मम सर्वासां ब्राह्मणो हि विशिष्यते ।
तत्राप्यध्यात्मविदुषे दत्तं भवति चाक्षयम् ॥
कलत्रिणं वा शास्त्रज्ञं श्रोत्रियं वा गुणान्वितम् ।
यो दत्वा स्थापयेद्वृत्तिं तस्य पुण्यफलं शृणु ॥
मातृतः पितृतश्चैव द्विकोटिकुलसंयुतः ।
मम लोकमवाप्नोति यत्र गत्वा न शोचति ॥
गण्यन्ते पांसवो भूमेर्गण्यन्ते वर्षबिन्दवः ।
न गण्यते विधात्रापि ब्राह्मणस्थापने फलम् ॥
समस्तदेवतारूपो ब्राह्मणः परिकीर्तितः ।
जीवनं ददतस्तस्य कः पुण्यं गदितुं क्षमः ॥
देवपूजासु सत्राय पुराणश्रवणे तथा ।
देयं प्रयत्नतो राजन्पुराणपठकाय च ॥
यो विप्रहिमकृच्छ्रिस्य स सर्वान्कुरुतवान्मखान् ।
स स्नातः सर्वतीर्थेषु तप्तं तेनाखिलं तपः ॥
यो ददत्येव विप्राणां जीवनं प्रोच्यते नरः ।
सोऽपि तत्फलमाप्नोति किमन्यैर्बहुभाषितैः ॥
भूमिदानसमं दानं सर्वलोकेषु नो नृप ।
परं निर्वाणमाप्नोति भूमिदो नात्र संशयः ॥
भूमिदः सर्वदः प्रोक्तो भूमिदो मोक्षभाग्भवेत् ।
भूमिदानं तु यो दद्यात्सर्वपापैः प्रमुच्यते ॥
द्विजस्य वृत्तिहीनस्य सदाचाररतस्य च ।
जीवनार्थं महीं दत्वा तस्य पुण्यफलं शृणु ॥
महागिरेऽश्वमेधानां शतानि विधिवन्नरः ।
कृत्वा यत्फलमाप्नोति भूमिदस्तु तदश्नुते ॥
भूमिदानं महादानमतिदानं प्रकीर्तितम् ।
सर्वपापप्रशमनमपवर्गफलप्रदम् ॥
तस्मात्त्वमपि राजेन्द्र भूदानं कुरु सर्वदा ।
पुराणवेदशास्त्राणां वक्तृणां त्वं ददस्व ह ॥
तटाकं कारयेद्यस्तु स्वयमेव करोति वा ।
तस्यैव वंशजाः सर्वे ब्रह्मलोकं व्रजन्ति हि ॥
कर्तुं तटाकं यो मर्त्यः प्रारम्भं कुरुते यदि ।
सोऽपि तत्फलमाप्नोति तदुपायप्रदश्च यः ॥
मृदं तु भारमात्रं यस्तत्तटाकाद्बहिः क्षिपेत् ।
त्रिविष्टपमवाप्नोति यावदाचन्द्रतारकम् ॥
तटाकार्धफलं राजन्कासारे परिकीर्तितम् ।
कूपे पादफलं ज्ञेयं कुल्यायां तच्छतोत्तरम् ॥
देवालयं तटाकं वा ग्रामं वा पालयेत्तु यः ।
तेषां शतगुणं श्रेयः कर्तृभ्योऽपि महीयते ॥
देवतायतनं यस्तु कुरुते कारयत्यपि ।
स चन्द्रधवलैर्यानैर्मम लोके सुखी भवेत् ॥
शिवस्य वा हरेर्वापि यः करोति ममालयम् ।
ब्रह्मलोकादिकान्भुक्त्वा तदन्ते मामुपैति सः ॥
इष्टकैः कारयेद्यस्तु धनाढ्यो देवतागृहम् ।
मृदा दरिद्रः कुरुते समपुण्यं प्रकीर्तितम् ॥
आरामं कारयेद्यस्तु बहुजन्तूपकारकम् ।
स चन्द्रधवलैर्यानैर्मम लोकं हि गच्छति ॥
स्थापयेद्वृक्षमेकं वा दरिद्रो लोकसाधनम् ।
स याति ब्रह्मणो लोकं यमेन परिपूजितः ॥
गावो वा ब्राह्मणो वापि पथिको वा नृपोत्तम ।
क्षणार्धमपि तच्छायां निषेवन्ते समस्तमुम् ॥
पुरोपकण्ठे पथि च वृक्षारामप्रवर्तकः ।
तत्र यावन्ति पर्णानि बीजानि कुसुमानि च ।
तावत्कालं वसन्नाके शतकोटिकुलान्वितः ॥
तुलसीरोपणं ये तु कुर्वन्ति मनुजोत्तमाः ।

D1 G3 कृदिने (for व ।रनो) —(L. 1441) Hypermetric. G(ed) ■ (for मनु) D2 जनान्, G1 G(ed.) जनम् (for मदद) M1 स याति परमां गतिम् (for °) —(L. 1442) G(ed) च बहुधा (for बहुविधा) —(L. 1444) G1 2 दानानामपि सर्वेषां (for °) —(L. 1450) G3 भुवो (for भूमे) G(ed.) वृष्टि (for वर्ष) —(L. 1453) D1 च ददत् (for ददतः) —After line 1453, D1 M1 G(ed) ins

101* सर्वेषामेव वर्णानां ब्राह्मणः परमो गुरुः ।
तस्य देयानि दानानि स तारयति पण्डितः ॥
स कर्मनिरतायैव श्रोत्रियायाहिताग्नये ।
वृत्तिहीनाय वै देयं दरिद्राय कुटुम्बिने ॥

[(L. 2) D1 M1 नारकान् (for पण्डितः)]

—(L. 1456) ■ 2 G(ed) सत्र (for सवान्) G3 महत्सम् (for मखान्) —(L. 1458) G1 M1 G(ed) जीवनं वक्ति मानवः (for °) —(L. 1460) D1 M1 भिषु (for नृप) —(L. 1461) D1 भूमिदानात्परं मानं, G2 °दानं न सदृशं (for °) —(L. 1463) G1, 2 G(ed) सर्वपापप्रणाशनम् (for °) —(L. 1465) G(ed) स्वयुक्त (for महीं दत्वा) —(L. 1466) D1 विविना (for विधिवत्) — G1 om lines 1471-1472 —(L. 1471) G(ed) धम (for वद) —(L. 1473) G2 2 तत्र (for तस्य) D1 M1 मम (for ब्रह्म) —After line 1473 D1 G(ed) ins

102* यः कश्चित्पुरुषो वापि तटाकेषु जलं पिबत् ।
तत्तु सर्वाणि पापानि नाशयन्ति न संशयः ॥
एतस्मात्कारणे नेष भूमिस्थमुदकं कुरु ।

[(L. 1) D1 राजन् (for वापि) —(L. 3) D1 भूमिक्षमपि कुरु (for °)]

—(L. 1475) G3 M1 तत्क्षणम् (for तत्फलम्) —(L. 1476) G(ed) मात्रं (for मात्र) D1 तटाके च (for तत्तटाकाद्) G(ed) तटाकात्प्रक्षिपेद्बहिः (for °) —(L. 1478) M1 कासारे (for °रे) G3 कासारे परिकीर्तितं (for °) —(L. 1479) G(ed) कूपे (for कूपे) M1 का फलम् (for पादफलं) —(L. 1480) D1 M1 मठं ग्रामं च पालयेत् (for °) —(L. 1485) G3 मम लोकं स गच्छति (for °) —(L. 1488) G1 सः (for

सर्वान्विशान्समुद्धृत्य यमेन परिपूजिता ।
तप्तहाटकवर्णैश्च यामैर्यान्ति ममालयम् ॥
ऊर्ध्वपुण्ड्रकरो यस्तु तुलसीमूलमृत्कणैः ।
तत्रैव तेन तत्रासीन्मूर्ध्नीन्दोर्बिभृयात्स्वयम् ॥
तृणानि तुलसीमूलाद्यावदुत्पादितानि वै ।
तावती ब्रह्महत्या वै छिनत्त्येव न संशयः ॥
तुलसीं सेचयेद्यस्तु चुलुकोदकमात्रकम् ।
पितरस्तृप्तिमेष्यन्ति ब्रह्मलोकं व्रजन्ति हि ॥
ददाति ब्राह्मणानां यस्तुलसीदलकोमलम् ।
यमेन पूजितो याति मम लोकं च शाश्वतम् ॥
तुलसीकाष्ठमणिना निर्मितेन प्रयत्नतः ।
गायत्र्यादिजपं कुर्यात्तस्य नास्ति महद्भयम् ॥
सदा संधारयेद्यस्तु तुलसीमणिमालिकाम् ।
भूतप्रेतपिशाचैस्तु न दृष्टो वर्तते सुखी ॥
कण्ठे भुजद्वये यस्तु धारयेत्तुलसीमणिम् ।
यमदूता महात्मानो नमस्यन्ति हि तं द्विजम् ॥
कण्टकावरणं वापि प्राकारं वापि भूपते ।
तुलस्याः कुरुते यस्तु मम लोकं स गच्छति ॥
योऽर्चयेद्धरिपादाब्जं तुलसीकोमलैर्दलैः ।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कदाचन ॥
तुलसीकाननं यत्र यत्र पद्मवनानि च ।
वसन्ति वैष्णवा यत्र तत्र संनिहितो हरिः ॥
तुलसीमञ्जरीभिस्तु पितॄनर्चन्ति ये नराः ।
प्रहृष्टाः पितरः सर्वे मम लोकं व्रजन्ति हि ॥
गङ्गां तु तुलसीं चैव सर्वकालेषु संस्मरेत् ।
दुःस्वप्ने दुर्निमित्ते च दुष्टभावे श्रुते खले ॥
तस्मात्त्वं पितृकार्येषु पितॄनर्चय मां स्मरन् ।
पितरस्ते प्रदास्यन्ति यद्वै मनसि रोचते ॥
ब्रह्मा देवास्तथा सिद्धा यक्षगन्धर्वकिंनराः ।
पितरो लोकपालाश्च पार्थिवा मम मूर्तयः ॥
अमृतांशुः कठोरांशुराकाशो भूमिरेव च ।
आपः पर्वतजालानि विद्धि पार्थ ममाशयः ॥
महानद्यो महाभाग वायुरग्निश्च सागरः ।
अव्यक्तं व्यक्तरूपं च विद्धि मां पाण्डुनन्दन ॥
अर्च्यो वन्द्यस्तथा ध्येयो जप्यः स्तुत्यः परा गतिः ।
मामेव विद्धि भूपाल मयि सर्वं प्रतिष्ठितम् ॥
मदर्चनपरो नित्यं मामेव समुपैष्यसि ।
त्यज देहाभिमानस्त्वं कर्माहं सर्वदानघ ॥
किं नु वक्ष्याम्यहं पार्थ यत्ते मनसि वर्तते ।
तदाचक्ष्व विचार्य त्वमत्र शुश्रूषसि साध्वसम् ॥

वैशंपायन उवाच ।

इत्युक्तो देवदेवेन धर्मपुत्रो महामतिः ।
मतिं चक्रे पुनर्धर्मान्प्रष्टुं देवं जनार्दनम् ॥
इदं भगवता प्रोक्तं देवदेवेन चक्रिणा ।
यः शृणोति सदा भक्त्या पातकेभ्यः स मुच्यते ।

*Colophon*

वैशंपायन उवाच ।

कृपां विज्ञाय देवस्य धर्मराजो महामतिः ।
पुनरेवापरं धर्मं पप्रच्छ द्विजसंसदि ॥

---

मुः ) —(L 1492) G(ed) गौरश्च (for गावो वा) —(L 1493) G(ed) कृष्णार्थं स्नानक्षालनात् (for °) D1 नित्यलोके (for °लोक) —(L 1497) D1 मत्पुरात्मन (for °मा) —(L 1498) G(ed) सर्वांल्लोकान्समुद्धृत्य (for °) —(L 1500) G1 G(ed) धरो (for करो) D1 -मृत्तिका, G2 मृत्स्ने (for मृत्कणैः) —(L 1501) G1 सन्धस्य, M3 तस्य स्नान्, G(ed) शिरसि (for तत्रासीन्) D1 तस्यैव यम तपस्या (for °) G(ed) कला च हरस्य धारयेत् (for °) —(L 1502) D1 G(ed) यावन्त्यु(D1 °न्त्य)त्पाटितानि वै, G1 °न्त्युत्पाटयन्ति वै (for °). —(L 1504) G(ed) मात्रम् (for °कम्) —(L 1506) G(ed) यो ददाति ब्राह्मणाय (for °) D1 M1 G(ed) तुलस्याः कोमलं दलम् (for °) —(L 1507) G(ed) सनातनम् (for च शाश्वतम्) —(L 1509) G3 कुर्वन् (for कुर्यात्) G(ed) तस्य स्नानं समस्तस्य (for °) —(L 1511) G(ed) स्पृष्टो (for दृष्टो) —(L 1512) After line 1512[a], G(ed) ins

103** यमोऽपि तं निरीक्ष्यैव ।
धारयेद्यस्तु तुलसीमाल्यं स नरोत्तमः ॥

—(L 1513) G(ed) महात्मानः (for °नो) —(L 1514) D1 भूतले (for भूपते) —(L 1520) D1 मानवाः (for ये नराः) —(L 1521) G(ed) तुष्यन्ति पितरस्तस्य (for °) —(L 1523) M1 दुःस्वप्ने वा दुर्निमित्ते (for °) D1 M1 दुर्जनस्तु स्वे, G2 श्रुते मित्र (for श्रुते खले) —(L 1525) G1 G(ed) प्रदास्यन्ते (for °न्ति) —(L 1526) G1 यक्षा (for सिद्धा) G1 रक्षो (for यक्ष) —(L 1529) G(ed) [ह]न्ते तै (for पार्थ) D1 G1 M1 ममात्मका (for °य). —(L 1530) G(ed) सागराः (for °र) —For line 1531, D1 subst

104** आद्यो मध्यः क्रिया ध्येयो सदा चाप्यपरा गतिः ।

—(L 1535) कर्माहं पाण्डुनन्दन (for °) —(L 1538) G(ed) महात्मना (for °मतिः) —(L 1539) M1 तथा (for पुनर्) G(ed) व्याख्या (for धर्मान्) G(ed.) श्रोतुं धर्माञ्जनार्दनात् (for °) —(L 1541) G1 पातकैस्तु, G2 °कैस्तद् (for °भ्य). M1 पातकैः स च मुच्यते (for °)

Colophon —*Sub parvan* D1 G1 M1 आश्चर्यपर्व, G2 M1 G(ed) शेषधर्माः —*Adhy name* D1 शेषधर्मे सकलधर्मप्रज्ञापनम्, G(ed) नानाधर्मप्रश्नः —*Adhy no* D1 G1 2 M1 G(ed) 12

D2 G2 युधिष्ठिर (for वैशंपायन) —(L 1542) G(ed) धर्मपुत्रो (for °राजो) —(L 1543) G(ed) पृष्टवान्गरुड

युधिष्ठिर उवाच ।

यज्ञमूर्ते सहस्राक्ष धर्ममूर्ते नमोऽस्तु ते ।
पूजाभिषेककर्माणि कथयस्व ममानघ ॥

श्रीभगवानुवाच ।

शृणु पार्थ प्रवक्ष्यामि पुण्यकालं च पूजनम् ।
पूजाद्रव्यं च धर्मं च ब्राह्मणानां प्रपूजनम् ॥
द्वादश्यां पौर्णमास्यां च एकादश्यां नृपोत्तम ।
सोमसूर्योपरागे च संक्रान्तावयने शुभे ।
सिद्धयोगे पुण्यदिने व्यतीपाते च वैधृतौ ॥
पुण्यक्षेत्रे पुण्यकाले पुण्यर्क्षे पाण्डुनन्दन ॥
शान्त्यश्विन्यां शुभाश्विन्यां माघमासे नृपात्मज ।
घृताप्लुतेन पयसा तथा पञ्चामृतेन च ।
पुण्यगन्धोदकैश्चैव ये स्नापयन्ति केशवम् ॥
नैवेद्यैर्विविधाकारैर्भक्ष्यभोज्यैर्नृपोत्तम ।
ये पूजयन्ति मां पार्थ शूलपाणिमथापि वा ॥
मातृतः पितृतश्चैव प्रियाया वंशजानपि ।
सर्वान्वंशान्समुद्धृत्य देवगन्धर्वसेवितैः ॥
तप्तकाञ्चनसंवीतैर्नानामणिविराजितैः ।
किङ्किणीजालसंयुक्तैर्यानैर्हंसनियोजितैः ॥
अप्सरोगणसंकीर्णैर्विमानैरुपशोभितः ।
याम्यादिषु च लोकेषु भुक्त्वा भोगान्यथेच्छया ।
मम लोकमनुप्राप्य तत्रैव परितुष्यते ॥
शंकरं मां च सर्वेश भेदबुद्धिविवर्जितः ।
यः पूजयेत्सदा भक्त्या काङ्क्षितं लोकमेष्यति ॥
केतकीकरवीराब्जचम्पकाजातिमल्लिकाः ।
प्रसूनानि ये प्रयच्छन्ति पुष्पाणि सुरभीणि मे ॥
तां पूजां प्रतिगृह्णाति रुद्रो वै लोकशासनः ।
पालकोऽहं च राजेन्द्र द्वावयोरन्तरं न च ॥
पूजयस्व च मां पार्थ तत्र त्वं सुखमेष्यसि ॥
तिलतैलान्वितं दीपं मम रुद्रस्य भारत ।
दत्त्वा नरः सर्वकामान्संप्राप्नोति न संशयः ॥
घृतदीपं तु यो दद्यान्महादेवस्य संनिधौ ।
स मुक्तः सर्वपापेभ्यः सर्वयज्ञफलं लभेत् ॥
यद्यदिष्टतमं भोज्यं तत्तद्विप्राय दापयेत् ।
सर्वपापविनिर्मुक्तो मम लोकं स गच्छति ॥
कार्त्तिके मासि माघे च दीपं मम गृहे सदा ।
वर्धयस्व च कौन्तेय ब्राह्मणान्भोजयस्व ह ।
भोजिते ब्राह्मणे सृष्टं मम तृप्तिर्भवेद्ध्रुवम् ॥
यद्यदिष्टतमं भोज्यं तत्तद्विप्राय दापयेत् ।
स याति ब्रह्मभवनं सर्वमोहविवर्जितम् ॥
भ्रूणहाप्यन्नदानेन शुद्धो भवति भूपते ।
नान्नतोयसमं दानं त्रिषु लोकेषु विद्यते ॥
महापातकयुक्तो वा युक्तो वा सर्वपातकैः ।
शृणुष्व चित्रं भूपाल शुद्ध्यत्यन्नजलप्रदः ॥
शरीरमन्नजं प्राहुः प्राणमन्नं प्रचक्षते ।
तस्मादन्नप्रदो ह्यत्र प्राणदो नात्र संशयः ॥
अन्नदस्य कुले जाता आसहस्रं नृपोत्तम ।
नरकं ते न पश्यन्ति तस्मादन्नप्रदो वरः ॥
पथि श्रान्तं द्विजं दृष्ट्वा यस्तु भक्त्या प्रपूजयेत् ।
सर्वदेवगणाः पूज्यन्ते तेन तु धर्मतः ॥
अन्नदानेन मतिमान्ब्रह्मलोकं स गच्छति ॥
आयान्मम तिथिं राजन्सर्वदा मनुजस्तदा ।
तस्मिंस्तुष्टे जगत्तुष्टं देवास्तृप्यन्ति धर्मज्ञ ॥
दिव प्रपेदिरे मुक्तास्तस्मादन्नप्रदो वरः ।
नास्तिवाक्यं स कृत्वा यो ब्राह्मणे गृहमागते ।
तस्य पापं महाघोरं रौरवं नरकं भवेत् ॥
अन्नं ददाति यो राजन्स सर्वान्कृतवान्क्रतून् ।
पशुराज्यधनापत्यस्वर्गमोक्षाँल्लभेन्नरः ।
अन्नदानं कौन्तेय तस्मादन्नप्रदो वरः ॥
विप्ररूपेण भोक्ताहं विप्ररूपेण पूजितः ।
ददामि विप्ररूपेण सर्वान्कामान्नृपोत्तम ॥
पादाभ्यङ्गं भक्तियुक्तो ब्राह्मणानां करोति यः ।
स स्नातः सर्वतीर्थेषु गङ्गास्नानपुरःसरम् ॥
तैलाभ्यङ्गं महाराज ब्राह्मणानां करोति यः ।
स स्नातोऽब्दशतं साग्रं गङ्गायां नात्र संशयः ॥
उष्णोदकेन यो राजन्ब्राह्मणान्स्नापयेन्नरः ।
स कोटिकुलसंयुक्तो वसेद्ब्रह्मपुरे नरः ॥
कर्मणा मनसा वाचा यो रक्षेद्ब्राह्मणान्वितम् ।

---

°स्ताम् (for °) — $G_3$ om the ref — (L. 1549) $M_1$ नराधिप (for नृपोत्तम) — $G_3$ om lines 1551–1552 — (L. 1554) $G_3$ G(ed) गन्धार्ध्यैर् (for गन्धोदकैश्च) — (L. 1559) $G_1$ विचित्रितै $D_3$ विकुट्टिमै, $M_1$ त्रिपट्टिनै (for विराजितै) — (L. 1561) $G_1$ संवीतैर् (for संकीर्णैर्) — (L. 1562) $D_1$ स्वर्गादिषु (for याम्या°) $D_1$ यथेप्सितान् (for °च्छया) — (L. 1566) $G_1$ सहितै (for °का) — (L. 1568) G(ed) नाशन (for शासन) — (L. 1571) G(ed) संनिधौ (for भारत) — (L. 1572) $G_3$ समृ णोति (for संप्राप्नोति) — (L. 1573) $G_3$ मम रुद्रस्य संनिधौ, $M_1$ G(ed.) मम देवस्य सं° (for °) — (L. 1577) G(ed) च संनिधौ (for गृहे सदा) — (L. 1579) G(ed) भोजन (for भोजिते) G(ed) तृप्त्यै (for तृप्तिर्) — (L. 1580) ब्राह्मणेभ्यो निवेदयेत् (for °) — (L. 1584) G(ed) संयुक्तो (for युक्तो वा) — (L. 1585) $G_3$ शुद्ध्यर्थं च (for शुद्ध्यत्यन्न°) — $G_1$ om lines 1586–1589 — (L. 1587) $G_3$ प्राणदः परिकीर्तितः (for °) — (L. 1588) $D_1$ आसप्तम (for आस°) — $D_3$ om lines 1590–1600 — (L. 1593) $G_1$ अनुद्रुता (for °जना) — $M_1$ om (hapl) lines 1596–1600 — (L. 1596) $G_1$ अकृत्वा च; G(ed) अकृत्वा तु (for स कृत्वा यो) — $G_1$ G(ed) om line 1597 — $G_3$ om lines 1604 1605 — (L. 1607) $D_1$ G(ed.) प्रियान्

दारिद्र्यनाशनं राजन्नपमृत्युभयापहम् ।
दारुणा निर्मितं पात्रं पूरितं गन्धवारिणा ॥
यो राजन्मुख्यजेभ्यस्तु दक्षिणां च ददाति च ।
उपेन्द्रो भगवान्विष्णुः सुधामस्मै प्रयच्छति ।
सुधां पिबन्हरमयात्र स्वर्गलोके महीयते ॥
यो राजँल्लोहपात्रं तु स्वादुपानप्रपूरितम् ।
ददाति भूसुरेभ्यस्तु तस्य पुण्यफलं शृणु ॥
मार्गे सुधां पिबन्राजन्यमलोकं स गच्छति ।
पूजितो धर्मराजेन चन्द्रलोकं स गच्छति ॥
ताम्रपात्रं महाराज गन्धोदकसमन्वितम् ।
ददाति ब्राह्मणानां च सूर्यलोकं स गच्छति ॥
रजतं राजशार्दूल पात्रं जलसमन्वितम् ।
वेदशास्त्रविदे दद्यात्तस्य पुण्यं ब्रवीमि ते ॥
पद्मानामुगपर्यन्तं चन्द्रलोके सुखी भवेत् ।
ततो भूमिं समासाद्य चक्रवर्तीह जायते ॥
सौवर्णनिर्मितं पात्रं स्वादुपानप्रपूरितम् ।
श्रोत्रियाय तु यो दद्याद्दरिद्राय विशेषतः ।
तस्य पुण्यफलं विप्र सावधानमतिः शृणु ॥
यक्षकिंनरगन्धर्वचारणाद्यैरभिष्टुतः ।
सुधापानं प्रकुर्वाणः प्रयाति मम मन्दिरम् ॥
पद्मकोटिकुलैर्युक्तो मेरुमूर्ध्नि चिरं वसेत् ।
भूलोकं समनुप्राप्य सार्वभौमश्च जायते ॥
दृष्ट्वा दिव्यकल्पसर्वांस्तथा निरयाश्च भयस्वरम् ।
दत्त्वा सर्वाणि दानानि मम सायुज्यमश्नुते ॥
कांस्यपात्रं तु यो दद्याद्घृतदक्षिणसंयुतम् ।
ददामि विष्णोरयुक्त्वा यो ददाति सुवाग्मिने ।
कोटिवर्षसमायुक्तः सत्यलोके सुखी भवेत् ॥
तस्मात्सर्वेषु कालेषु यत्किंचिद्वै ददाति च ।
मम बुद्ध्या महीपाल तत्सर्वं मेरुतां व्रजेत् ॥
मत्वै वै मृण्मयं पात्रं स्वादूदकसमन्वितम् ।
दरिद्रोऽपि च मां ध्यात्वा मम सालोक्यमश्नुते ॥
वृद्धेभ्यो ब्राह्मणेभ्यस्तु यतये योगिने नृप ।
यद्दत्तं यद्धुतं तप्तं तत्सर्वं मदनुग्रहात् ॥
कोटिकोटिगुणं राजन्स्वल्पं वापि महद्भवेत् ।
अक्षय्यलोकमाप्नोति ह्यक्षय्यं सुखमश्नुते ॥
वृद्धेभ्यो ब्राह्मणेभ्यस्तु यतये रोगिणे नृप ।
वस्त्रपथ्याजिनं पथ्यमौषधं च ददाति यः ।
सर्वान्वंशान्समुद्धृत्य ब्रह्मलोकं स गच्छति ॥
हिरण्यं राजतं वापि यो दद्याद्दानमुत्तमम् ।
महदैश्वर्यमाप्नोति ब्रह्मणा परिपूजितः ॥
पशुपुत्रधनादीन्वै विन्देत्सौवर्णदानतः ।
पुण्यलोकानिमान्सर्वानमृतत्वं च गच्छति ॥
रजतं निष्कमात्रं तु यो दद्यात्पाण्डुनन्दन ।
शिवलोकमवाप्नोति शतवर्षसमन्वितः ॥
सीसं कांस्यं तथा ताम्रं पलत्रितयसंमितम् ॥
यो ददाति नरश्रेष्ठो रुद्रलोकं स गच्छति ॥
अयस्कान्तं(?) यतीनां तु यो दद्यात्पात्रमुत्तमम् ।
स कोटिकुलसंयुक्तो देवलोके चिरं वसेत् ॥
काषायं च तथा भैक्षं कौपीनं कम्बलं तु वा ।
यो ददाति यतीनां तु स मुक्तो मातृगर्भतः ॥
कार्त्तिक्यां पौर्णमास्यां वा आषाढे वापि भूपते ।
वृषभं विसृजेद्यस्तु तस्य पुण्यफलं शृणु ॥
सर्वजन्मार्जितैः पापैर्विमुक्तो रुद्ररूपभाक् ।
कुलसप्ततिसंयुक्तो रुद्रेण सह मोदते ॥
पितरस्तस्य तृप्यन्ति देवाश्चित्रगुप्तकाः ।
नरकस्था दिवं यान्ति दिविस्था ब्रह्मणः पदम् ।
ब्रह्मस्था विष्णुलोकं च सत्यं सत्यं मयोदितम् ॥
शिवलिङ्गाहतिं कृत्वा महिषं च समुत्सृजेत् ।
यमस्य यातना तस्य नैव तत्र मयोदितम् ॥
यमेन पूजितः सम्यक्सुरलोकं व्रजेद्ध्रुवम् ॥
अनड्वाहं चिरं काले कर्षयित्वा मृतं यतः ।
तस्मिन्मेघार्घके भावे तस्य पुण्यं ददामि ते ॥
इहलोके सुखं भुक्त्वा पुत्रपौत्रादिसंयुतः ।

(for भज ) — G₂ om lines 1660-1661 —(L 1662) D₁ भवमृत्यु प्रणाशयति, G₁ M₁ °मृत्युश्च नाशयति, G(ed) °मृत्यु च नाशयेत् (for °) —(L 1664) G(ed) स द्विजेभ्यस्तु (for मुख°) —(L 1667) D₁ -वर्ण प्र ; G₂ -पानक (for -पान-प्र-) —(L 1670) D₁ M₁ यम (for धर्म) —(L 1673) M₁ G(ed) राजन् (for र°) G₂ पात्र जल- ; M₁ पात्रं वारि (for पात्रं जल) —(L 1675) G₂ स ब्रह्मलोके (for (for चन्द्र°) G(ed) महीयते (for सुखी भवेत्) —(L 1679) D₁ G₁ मना (for मति) —(L 1684) M₁ दिव्या-न्सुरान् (for दिव्यकल्पान्) G(ed) राजन् (for सर्वान्) and निर्जित्य च (for तथा निरया) —(L 1685) G₂ मम लोकं स गच्छति (for °). —(L 1686) G(ed) द्विजव (for -दक्षिण) —(L 1687) G(ed) भक्तियुक्तस्तु वाग्मिने (for °). —(L 1688) G₁ महीयते (for सुखी भवेत्). —(L 1690) G(ed) मयि भक्त्या (for मम बुद्ध्या). — G₁ ₂ om lines 1694-1696 —(L 1702) G₂ वस्त्र (for पुत्र). — D₁ — D₁ om (hapl.) lines 1704-1707 —(L 1706) G(ed) -संयुतम् (for संमि°) —(L 1707) M₁ विष्णु- (for रुद्र) —(L 1709) D₁ आयसं तु ; G(ed) मृण्मयं च (for अयस्कान्तं) —(L 1710) D₁ पादुकां, G₂ M₁ चन्दनं (for च तथा) —(L 1712) G(ed.) आषाढ्यां (for °ढे) —(L 1714) G₂ M₁ -रूपकः (for °भाक्). —(L 1715) G₂ कुलं सप्तभिर्युक्तो (for °) M₁ विष्णुना (for रुद्रेण) —(L 1718) G(ed) नरकस्था (for ब्रह्मस्था). —(L 1719) M₁ लिङ्गाद्भिः (for लिङ्गाहतिं). —(L 1721) G(ed.) व्रजन्त्यसौ (for व्रजेद्ध्रुवम्) —(L 1722) G(ed) वृषभं च (for अनड्वाहं) —(L 1723) G(ed) काले (for भावे). G₂ दोषघ्नं (for मे°) — For line 1723, D₁ subst. .

सर्वान्विशान्समुद्धृत्य मम सालोक्यमश्नुते ॥
ददाति च भुवृत्ताय महिषीं च पयस्विनीम् ।
अपमृत्यु जयत्येव यमेन सह मोदते ॥
दर्शे प्रसूतिका गा च महिषीं च नृपोत्तम ।
अपमृत्यु दरिद्राय दत्त्वा तीर्त्वा दिव व्रजत ॥
ताम्बूल नित्यशो राजन्यो दद्याद्ब्राह्मणाय च ।
तस्याह च कुरुश्रेष्ठ ददामि श्रीयुत पदम् ।
अष्टैश्वर्यं भवेदत्र ताम्बूलात्कुरुनन्दन ॥
क्षीरदान शिशुना तु स्वर्गलोकप्रद ध्रुवम् ।
शूलादिरोगयुक्ताय ब्राह्मणाय ददाति य ॥
क्षीरोदस्योत्तरे पारे पिबति क्षीरमुत्तमम् ।
सधूलि दधिभक्ताणि घृतानि च नृपोत्तम ।
यो दद्याद्ब्राह्मणेभ्यस्तु तस्य नो मृत्युतो भयम् ॥
इक्षुदण्ड गुड क्षीर ब्राह्मणाय प्रयच्छति ।
पथि श्रान्ताय यो दद्यात्सतत मयि तत्पर ॥
सर्वलोकप्रभुश्चैव सर्वयज्ञेषु दीक्षित ।
सर्वदानफल तस्य सर्वलोक च शाश्वतम् ॥
नालिकेरफल दद्याच्चैत्रवैशाखमासयो ।
कौबेर लोकमाप्नोति यमेन परिपूजित ॥
युगाना त्रिदश स्थित्वा तत कैलासमेति च ।
तत्र पञ्चयुग स्थित्वा ब्रह्मलोके महीयते ॥
शर्करारससयुक्त नालिकेर ददाति य ।
तस्य पार्थ प्रसन्नोऽह देवास्तस्य वशानुगा ॥
एलालवङ्गकर्पूरमिश्रित शीतल जलम् ।
ददन्मार्गे क्षुधा पीत्वा मम लोक स गच्छति ॥
मार्गशीर्षे महाराज मरीचि लवण ददन् ।
सर्वपापविनिर्मुक्तो भजेद्रुद्रस्य मन्दिरम् ॥
इन्धन कम्बल वस्त्रगुपानत्कुङ्कुम घृतम् ।
मित्रलोकमवाप्नोति सर्वसिद्धनिषेवित ॥
ज्येष्ठे तु सर्वबीजानि कृषिकाग्रहणार्थे ।
ब्राह्मणाना सहायार्थं धनैरपि च कर्मणा ।
कुरुते य सदा भक्त्या तस्य पुण्यफल शृणु ॥
मातुः पितृतश्चैव दशकोटिकुलान्वित ।
गन्धर्वै स्तूयमानस्तु मम लोक स गच्छति ॥
सुशीलो ब्राह्मणो भक्त स च मे सतत प्रिय ।
तेन पूतमिद सर्वं जगत्स्थावरजङ्गमम् ॥

> घ्नन्त क्षपन्त परुष वदन्त
> > यो ब्राह्मण न प्रणमेद्यथार्हम् ।
> स पापकृद्ब्रह्मदवाग्निदग्धो
> > दण्ड्यश्च वध्यश्च न चास्मदीय ॥
> प्रियो यथा ब्राह्मणपुंगवो मे
> > तथा न लक्ष्मी स्वपुरे महात्मन् ।
> त्रिविष्टपे ब्रह्मपुरे वसेत्स
> > त्वया हि पूज्यो गुरुदेवतात्मा ॥

तस्मात्त्वमपि राजेन्द्र ब्रह्मभक्त सदा भव ।
ब्राह्मणस्तुष्टे धरा सर्वा फलत्येव न सशय ॥
एवमाद्या महाभाग धर्मा बहुविधा नृप ।
तत्र सार प्रवक्ष्यामि धर्मं तव हिताय च ॥
मयि भक्तिर्यदि भवेदन्तकाले नृपोत्तम ।
अनन्तफलद श्रेय सहान नाधिकं भवेत् ॥
इद रहस्यमायुष्य य शृणोति सदा नर ।
सर्वदानफल तस्य सर्वपापक्षयो भवेत् ॥

Colophon

वैशंपायन उवाच ।

श्रुत्वैव धर्मसवाद धर्मपुत्रो यदूत्तमात् ।

---

107** य उत्सृजेदाढकेऽपि तस्य पुण्यफल शृणु ।
— ( L 1726 ) G2 मम लोक स गच्छति ( for ° ) — D1 om ( hapl ) lines 1729 1736 — ( L 1729 ) G1 दरिद्राय, G3 G(ed) °द्रे च ( for °द्राय ) — (1732) M1 G(ed) अष्टै अर्थं ( for °ष्टै° ) — ( L 1738 ) D1 G3 M1 G(ed) इक्षुक्षीर गुड ( M1 पुन ) दण्ड ( for ° ) G(ed) महामते ( for प्रयच्छति ) — ( L 1741 ) M1 सर्वलोकश्च शाश्वत ( for ° ) — ( L 1745 ) M1 पञ्चदश ( for °युग ) — ( L 1746 ) M1 मधु ( for रस ) — ( L 1747 ) D1 देवलस्य च नंदन ( for ° ) — ( L 1748 ) G1 सुगन्ध ( for मिश्रित ) — ( L 1750 ) G(ed) तथा भाष ( for महाराज ) — ( L 1751 ) G3 इन्द्रस्य, M1 विष्णोश्च ( for रुद्रस्य ) D1 सनिधिम् ( for मन्दिरम् ) — ( L 1752 ) G1 रत्न, G(ed) सितं ( for वस्त्र ) D1 G2 कञ्चुक ( for कुङ्कुम ) — ( L 1753 ) M1 निषेवितम् ( for °त ) D1 मित्र सिद्धनिषेवितम् ( for ° ) — After line 1753, D1 M1 ins
108** दुग्धे माघे ददन्नेतान्सर्वान् निगमा भवेत् ।
[ M1 पुष्यमासे ददंश्चैव ( for ° ) ]

While G(ed ) ins after line 1553
109** पुष्यमासे ददन्नेतान् सर्वानारोग्यता भवेत् ।
— ( L 1755 ) G1 G(ed) ब्राह्मणस्य ( G1 °णे च ) सहायार्थं ( for ° ) — ( L 1759 ) D1 तस्याह तु न च प्रिय G1 मम देवाश्च स प्रिय, M1 तस्य मेऽहं तु च प्रिय, G(ed) वरहंसगणान्वित ( for ° ) —( L 1763 ) G1 2 भजेत् ( for दग्धो ) —( L 1764 ) D1 G1 2 G(ed) दण्ड्यश्च ( for दण्ड्यश्च ) — ( L 1765 ) G1 पुंगवः ( for °वो मे ) — ( L 1766 ) M1 न लक्ष्मी ( for न लक्ष्मी ) D1 यथा च लक्ष्मी स्वपुर यथात्मन्, G2 मेधा च लक्ष्मी स्वपुर महात्मन — ( L 1770 ) G(ed) सर्वधर्मा फलन्ति ( for धरा सर्वा फलति ) —( L 1771 ) D1 G3 महात्मा, G1 °राज ( for °भाग ) G(ed) बहुगुणा ( for °विधा ) — Before line 1775 D1 G(ed) ins वैशंपायन

COLOPHON — *Sabparvan* D1 G1 आश्वमेधिके, D1 G1 2 M1 G(ed) वैष्णवे — *Adhy name* G1 धर्मसवाद, G(ed) नानादानधर्मकथा — *Adhy no* D1 G1 2 M1 G(ed) 14

योगसिद्धिर्भवेत्तस्य शर्म च भुवि दुर्लभम् ॥
महतां च यतीनां च मठे दीपप्रदायकः ।
गङ्गास्नानफलं तस्य दिनेनैकेन सम्भवेत् ॥
रत्नान्वितसुवर्णस्य प्रदानेन नृपोत्तम ।
परं मोक्षमवाप्नोति महादानं यतः स्मृतम् ॥
पद्मरागमणिस्यस्तं यो ददाति नृपसत्तम ।
मम लोकमवाप्नोति पुनरावृत्तिवर्जितम् ॥
वैदूर्यविद्रुमान्राजन्ब्राह्मणाय ददाति य ।
रुद्रलोकमवाप्नोति पुष्परागप्रदश्च य ॥
गोमेदरत्नदानेन ह्यलंकारप्रदश्च य ।
सर्वत्र सुलभो लोक सर्वत्र सुखमश्नुते ॥
गवां तृणप्रदानेन सेवया भरतर्षभ ।
रुद्रलोकमवाप्नोति पुनरावृत्तिवर्जितम् ॥
आश्रमाचारनिरता स्वधर्मेषु सदोद्यता ।
अदाम्भिका गतासूया प्रयान्ति सुरमन्दिरम् ॥
परोपदेशनिरता वीतरागा विमत्सरा ।
मम पादार्चनरता प्रयान्ति ब्रह्मण पदम् ॥
सत्यसङ्गाह्लादनिरता सर्वभूतहिते रता ।
परापवादविमुखा प्रयान्ति ब्रह्मण पदम् ॥
नित्यं हितकरो यस्तु ब्राह्मणेषु च गोषु च ।
परस्त्रीसङ्गविमुखो न पश्यति यमालयम् ॥
सत्यवादी तथा मौनी मृदुभाषी क्षमारत ।
परापवादविमुखा प्रयान्ति ब्रह्मण पदम् ॥
अतिशुश्रूषकश्चैव गुरुशुश्रूषकस्तथा ।
यतिशुश्रूषकश्चैव न यान्ति यमयातनाम् ॥
अनाथं विप्रकुणपं यो वहेन्नृपसत्तम ।
पदे पदेऽश्वमेधस्य फलं प्राप्नोति पुष्कलम् ॥
पूजया रहितं विष्णुं लिङ्गं वा पूजयेत्तु य ।
ब्रह्मलोके सुखं भुक्त्वा ततो मोक्षमवाप्नुयात् ॥
देवतायतने यस्तु समार्जनपरो भवेत् ।
पांसवस्तस्य पापानि नाशयन्ति न संशय ॥
जलेन गोमयेनापि सेचनं देवतागृहे ।
करोति य सदा भक्त्या सर्वपापै प्रमुच्यते ॥
गन्धोदकेन धूपेन कर्पूरसहितेन च ।
धूपसेचनकृन्मर्त्यो यच्छेच्च मम मन्दिरम् ॥
प्रदक्षिणनमस्कारं काले काले करोति य ।
सर्वपापविशुद्धात्मा वाजपेयफलं लभेत् ॥
राजन्प्रदक्षिणैकेन सर्वपापं व्यपोहति ।
द्वितीयेन दिवं याति तृतीयेनेन्द्रसत्पदम् ॥
चतुर्भिर्मम लोकं स्यात्पञ्चमे मर्त्यलोकभाक् ।
षष्ठे तु महदैश्वर्यं सप्तमे मम किंकर ॥
अष्टमे मम सालोक्यं सामीप्यं नवमे नृप ।
सारूप्यं दशमे विद्धि सद्ब्रह्मैकादशे तथा ॥
सायुज्यं द्वादशे विद्धि सायुज्यात्परो न च ॥
सप्तप्रदक्षिणैकेन सर्वपापप्रणाशनम् ।
स्वदोषं व्याधिपीडा च न च मृत्युर्भवेत् पुन ॥
शिवप्रदक्षिणे मर्त्यो सोमसूत्रं न लङ्घयेत् ।
लङ्घने लेखमेकं स्याल्लङ्घने ह्यमृतङ्गमम् ॥
रुद्रसूक्तेन यो विप्र प्रभाते क्षालनपर ।
अभिषेकपरो रुद्रे शिवसालोक्यमश्नुते ॥
वामदेवादिसंक्षेपं तथा नैवेद्यकेन च ।
अभिषेकनमस्काराद्धि सालोक्यतां व्रजेत् ।
एककालं द्विकालं वा त्रिकालं वापि नित्यश ।
शिवदर्शनमात्रेण पातकै परिमुच्यते ॥
वृषस्य वृषणं स्पृष्ट्वा शृङ्गमध्ये पिनाकिनम् ।
दृष्टमात्रे नरो याति कैलासे शिवसंनिधिम् ॥

शिलावक (for °) — (L 1829) D1 ब्रह्माण्ड (for °ब्र) — (L 1830) D1 नामग्राम (for शिवलिङ्ग) — (L 1834) D1 मम (for फल) G1 M1 G(ed) तद्भवेत् (for सम°) D1 फलमार प सम्भवेत् (for °) — (L 1835) G2 रत्नयुति (for रत्नान्वित) — (L 1837) D1 G(ed) रत्नानि (for रत्न सो) D1 G1 M1 G(ed) यो ददाति नृपोत्तम (for °) — For line 1838, D1 G2 subst

112** परं मोक्षमवाप्नोति महादानं तु तत्स्मृतम् ।

— (L 1840) G2 G(ed) ब्रह्म (for रुद्र-) M1 पुनरावृत्ति वर्जितम् (for °) — M1 om lines 1841–1842 G(ed) om line 1841 — (L 1842) G(ed) सर्वलोकमवाप्नोति (for °) — (L 1845) G(ed) स्वधर्मेषु सदा रता (for °) — (L 1846) G2 G(ed) मम (for सुर) — (L 1848) G2 G(ed) प्रयान्ति मम मन्दिरम् (for °) — (L 1849) D1 सत्यधर्मेषु निरता, M1 सत्सङ्गाह्लादनिरता (for °) — (L 1851) G1 नित्य हितकरा ये तु (for °) — (L 1852) G2 M1 विमुखा (for °खो) D1 प्रयाति ब्रह्मण पदम् (for °) — G2 G(ed) om lines 1853 1854 — (L 1853) D1 M1 भाषी (for °भाषी) M1 क्षमान्वित (for °रत) — For line 1854, D1 M1 subst

113** अभयता योगयुक्ताश्च न पश्यन्ति यमालयम् ।

— (L 1857) D1 वहेत् (for वहेत्) — (L 1859) G2 च हित (for रहित) G(ed) शिवं (for लिङ्गं) — (L 1860) D1 G2 चिरं भुक्त्वा, G(ed) सुखी भूत्वा (for सुखं भुक्त्वा) G2 अवाप्यते (for °मवाप्नुयात्) — (L 1870) M1 G(ed) याति (for यान्ति) — (L 1871) G(ed) चतुर्भि श्चाणो याव (for °) G(ed) पञ्चभि (for °मे) — G2 om lines 1872–1874 D1 om line 1874 — (L 1874) M1 सम च (for सद्ब्रह्म) — (L 1875) D1 om line 1875° D1 अपरेण, G1 प्रवर न, G(ed) अधिरं न (for अपरो न) — (L 1876) G(ed) सर्वपाप प्रणश्यति (for °) — (L 1877) D1 स्वदोषव्याधिपीडाभ्यो (for °) — (L 1878) M1 मुक्त (for मर्त्य) — (L 1879) G2 G(ed) अल्पङ्गमम् (for °ङ्गमे) — (L 1883) G1 नमस्कारै (for °राद्) G2 G(ed) शिव

मृदङ्गगीतवाद्यैश्च घण्टाकाहलशङ्खकैः ।
देव मां सेवयेद्यस्तु स मुक्तो नात्र संशयः ॥
समानयित्वा प्रथमं गोमयेन तु लेपयेत् ।
तस्य पुण्यफलं चित्रं शृणु वक्ष्यामि सुव्रत ॥
सर्वयज्ञफलं प्राप्य सर्वलोकान्विजित्य च ।
कोटिवर्षसमायुक्तो मम लोकं स गच्छति ॥
देवतायतने यस्तु ध्वजस्तम्भं प्रकल्पयेत् ।
तेन पुण्यप्रभावेन धन्वी राजा भवेद्ध्रुवम् ॥
अखण्डदीपं च कुर्यान्मम रुद्रस्य संनिधौ ।
दिने दिनेऽश्वमेधस्य प्राप्नोत्यविकलं फलम् ॥
एवमाद्या महाभाग धर्मा बहुविधा नृप ।
यस्मिन्धर्मे यस्य रुचिस्तेनैव सुखमश्नुते ॥
एतेषां धर्मकरणे प्रीतिरस्ति तथापि यत् ।
कुरुष्व नृपशार्दूल परं श्रेयो गमिष्यसि ॥
धर्मार्थश्च कामश्च मोक्षश्च भरतर्षभ ।
तस्मान्मयि सदा भक्तिं कुरुष्व च दृढस्व च ॥
युधिष्ठिर त्वं भुवनस्य गोप्ता
गन्ता पुरं सर्वमहीपतीनाम् ।
शृणुष्व चित्रं पुनरेव वक्ष्ये
धर्मस्वरूपं परिपालनाय ॥

वैशंपायन उवाच ।

य इदं पुण्यमाख्यानं शृणोति सततं नरः ।
तस्य धर्मे स्थिरा बुद्धिर्जायते कुरुनन्दन ॥

Colophon

वैशंपायन उवाच ।

एवमुक्तस्तु कृष्णेन धर्मपुत्रो महामतिः ।
पुनरेव शुभं वाक्यं जगन्नाथमुवाच ह ॥
अणोरणीयांसमजं पुराणं
ब्रह्मागमीशं च विभुं परेशम् ।
भक्तप्रियं त्वां यदुनाथमीड्यं
नमामि विश्वेश्वर लोकनाथ ॥
विनोदितानि कर्माणि वक्तुमर्हसि मे प्रभो ।
त्वत्पादकमलादन्यद्गतिर्मम न विद्यते ॥

श्रीभगवानुवाच ।

शृणु पार्थ महाभाग सर्वधर्मार्थकोविद ।
धर्मसारं प्रवक्ष्यामि पुनरेव महामते ॥
प्रातःकाले समुत्थाय धर्मकीर्तनतत्परः ।
स्नानं करोति राजेन्द्र स गच्छेद्वै सुरालयम् ॥
याम्यं तु नरकं घोरं नित्यस्नायी न पश्यति ।
नित्यस्नानेन शुद्धात्मा प्रयाति सुरमन्दिरम् ॥
प्रातःस्नानं हरेत्पापं सबाह्याभ्यन्तरं मलम् ।
मध्याह्ने वापि राजेन्द्र यो गच्छेत्सुरमन्दिरम् ॥
स्नानाद्विना तु यो भुङ्क्ते स मलाशी न संशयः ।
तस्मात्स्नात्वा तु योऽश्नीयात्स भृत्यो मम उच्यते ॥
स्नात्वा देवानृषींश्चैव पितॄनपि च तर्पयेत् ।
दिव्यनामानि मे जप्त्वा मुच्यते सर्वपातकैः ॥
धौतवस्त्रो नरश्रेष्ठ शुचिर्मौनी समाहितः ।
अर्घ्यं दत्त्वा च मां ध्यायन्पूज्यते च सदामरैः ॥
यदर्घ्यं यो नमस्कारो या पूजा क्रियते विभो ।
यज्जप्यं या स्तुतिर्भानोस्तन्मामेव प्रपद्यते ॥
समाधानमतिर्यस्तु जपं कुर्यात्कुरूद्वह ।
स मुक्तः सर्वपापेभ्यो गङ्गास्नानफलं लभेत् ॥
अष्टोत्तरशतं यस्तु गायत्रीं वेदमातरम् ।
जपेत्प्रयत्नतो यस्तु तस्य पुण्यफलं शृणु ॥
दिने दिने च यत्किंचिज्ज्ञानाज्ञानकृतं च यत् ।
तत्सर्वं विलयं याति पातकं पापवर्जित ॥
अष्टोत्तरसहस्रं यो गायत्रीं लोकवन्दिताम् ।
जपेत्तस्य फलं वक्ष्ये शृणु नान्यमना प्रभो ॥
षण्मासात्सर्वपापेभ्यो मुच्यते नात्र संशयः ।
संवत्सरजपाच्चासौ सर्वान्कामान्समश्नुते ॥
अपरश्चपुनरत्नानि पशुक्षेत्रं च भारत ।
जपमानो लभेद्विद्वान्गायत्र्यास्तु प्रभावतः ॥
सत्कर्मणां जपानां तु स्नानं मूलं हि पाण्डव ।
प्रभाते स्नानशीलानां नास्ति नास्ति महद्भयम् ।
तस्मात्स्नात्वा तु कौन्तेय सर्वान्धर्मांश्चर कुरु ॥

सालोक्यमश्नुते ( for ° ) — ( L 1885 ) G(ed.) कुरुसत्तम ( for मात्रेण ) — ( L 1887 ) G1 कृष्णात्रे, G(ed ) °सुतात् ( for °मात्रे ) — ( L 1888 ) G2 शङ्खकाहलनिःस्वनैः ( for ° ) — ( L 1889 ) D1 त्रिवर्गासेवयेद्यस्तु ( for ° ) — ( L 1895 ) G2 ध्वज राज्ञो, M1 महाराजो ( for धन्वी राजा ) — ( L 1896 ) G2 M1 अप्यनर्घं तु च कुर्यात् ( for ° ) — ( L 1901 ) G1 नर ( for नृप ) — ( L 1902 ) G1 G(ed ) धर्मश्रावण ( for धर्माद° ) — ( L 1903 ) G(ed ) भवेत् ( for तस्मात् ) D1 G2 धर्मे ( for मयि ) — ( L 1907 ) M1 वक्तुं , G(ed ) द्विज ( for परि ) G1 धर्मस्य रूप जगतपूजन — D1 om lines 1908–1909

Colophon — Sub-parvan आश्वमेधिकपर्वणि देवधर्मो , G2 M1 G(ed.) देवधर्मो — Adhy name G(ed ) सर्वधर्मप्रशंसा — Adhy no D1 G1 2 M1 G(ed.) 15

( L 1910 ) G1 महामुनिः , G2 युधिष्ठिर ( for महामतिः ) — ( L 1911 ) अभाषत ( for उवाच ह ) — Before line 1912, D1 ins युधिष्ठिर — ( L 1917 ) D1 अन्यथा ( for न वद ). — ( L 1920 ) M1 G(ed ) मम ( for धर्म° ) — ( L 1922 ) G1 2 प्रातःस्नायी ( for नित्य° ) — G1 om lines 1924–1925 — ( L 1925 ) G(ed ) स याति ( for यो गच्छेत् ) — ( L 1927 ) G(ed ) स तु भृत्यो ममास्पदे ( for ° ) — ( L 1933 ) M1 यत् ( for या ) G2 जप्यं या च स्तुतिर्विधि ( for ° ) — ( L 1934 ) G2 समाधाय ( for °न ) — ( L 1936 ) D1 जपेत् ( for यस्तु ) — ( L 1937 ) G(ed ) नित्य ( for यस्तु ) — ( L 1944 ) G2 वसु ( for पशु ) G(ed ) पशुं

युधिष्ठिर उवाच ।

देवदेव जगन्नाथ यदूनां कुलवर्धन ।
काल्लँोकान्समवाप्नोति गायत्र्यास्तु प्रभावतः ॥
तत्सर्वं [illegible] भवान्वेत्ति यद्यधीनो महामते ।
कृपया वद सर्वेश लोकनाथ नमोऽस्तु ते ॥

श्रीभगवानुवाच ।

गायत्र्यास्तु समं किंचिदपि लोकेषु नो नृप ॥
गायत्री मोक्षदा ज्ञेया गायत्री पापनाशिनी ।
स्वर्गलोकप्रदा देवी ब्रह्मलोकप्रदायिनी ॥
रुद्रलोकप्रदा सैव सूर्यलोकप्रदा तु सा ।
ध्रुवलोकप्रदा देवी चन्द्रलोकप्रदा तु सा ।
मम लोकं च कौन्तेय गायत्री संप्रयच्छति ॥
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
गायत्री सेव्यते येन तप्तं तेनाखिलं तपः ॥
गायत्रीं भजते यस्तु तन्मना हि महीपते ।
गन्धर्वैः स्तूयमानस्तु मम लोकं स गच्छति ॥
ब्रह्मयज्ञफलं वक्ष्ये शृणु सोमकुलोद्भव ।
ब्रह्मयज्ञं तु यः कुर्याद्ब्राह्मणो व्रतमव्ययम् ।
मम सालोक्यमाप्नोति सत्यं सत्यं मयोदितम् ॥
प्रणवं व्याहृतिं चोक्त्वा गायत्रीं वेदमातरम् ।
पादं पादं जपं कुर्यात्ततो वेदं यथाक्रमम् ॥
इदं तु मन्मतं राजन्मत्प्रियं कुरु पाण्डव ।
यज्जप्त्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥
ब्रह्मयज्ञमिदं श्रौतं यः करोति स मुक्तिभाक् ।
ब्रह्मयज्ञात्तपोवृद्धिर्ब्रह्मतेजः प्रवर्धते ॥
यशो बलं च कौन्तेय धर्मवृद्धिः प्रजायते ।
कुरुते यदि पापानि ह्यवधूय दिवं व्रजेत् ॥
वैश्वदेवं ततः पश्चाद्बलिकर्म विधानतः ।
क्रियते येन राजेन्द्र नित्यं तत्र त्रिविष्टपम् ॥
बलिकर्म प्रकुर्वन्ति चक्राकारं द्विजोत्तमाः ।
ते सर्वे चक्रिणो भूत्वा प्रयान्ति मम मन्दिरम् ॥
राज्यकामो ध्वजाकारं पुत्रार्थी शूर्पवत्नृप ।
चक्राकारं तु भोगार्थी वल्मीकं बहुपुत्रवान् ॥
चक्राकारप्रभावेणापि तेषां फलन्ते ह्यहम् ।
एवं चतुर्विधं ज्ञेयं बलिकर्म नृपोत्तम ॥
तुर्यं तव हितं ज्ञेयं चक्राकारं नृपोत्तम ।
मोक्षं संप्रापयत्याशु कामांश्च त्रिविधान्नृप ॥
मा ध्यायन्भोजने काले मौनी सस्तुतवाग्द्विजः ।
कुरुते भोजनं यस्तु अमृतत्वं [illegible] गच्छति ।
द्वात्रिंशत्कवलं यस्तु भोजनं कुरुते द्विजः ।
स्वर्लोकमवाप्नोति गन्धर्वैरुपसेवितः ॥
मिताहारी भवेद्यस्तु नीरजो गतकल्मषः ।
पुण्यलोकमवाप्नोति पूजितो दिवि दैवतैः ॥
पश्चिमा तु तथा संध्या सादित्या प्रार्थयेत्तु यः ।
भानौ ह्यनुदिते पूर्वां समभ्यर्च्य सूर्यसंनिधिम् ॥
देवानृषींस्तु संतर्प्य रवौ मध्याह्नमागते ।
नमस्कारं प्रकुर्वीत ततोऽर्घ्यं सवितुः कुरु ॥
यश्चैवं कुरुते नित्यं स मुक्तो नात्र संशयः ॥
काले काले तु यः कुर्याद्देवतापूजनं गृहे ।
पुरुषसूक्तविधानेन स मुक्तो नात्र संशयः ॥
गृहार्चना गृहस्थस्य सर्वपापप्रणाशिनी ।
मन्मूर्तिः सर्वदा पूज्या संसारं तर्तुमिच्छता ॥

---

धर्मं च मारनाम् (for ᵇ) — For line 1945 G3 subst

114** जप्यमाने भवेद्विप्राण् गायत्रीया (sic) प्रभावतः ।

— G3 वैशंपायन (for युधिष्ठिर) — (L 1949) D1 कुलनन्दन, G1 कीर्तिवर्धन, M1 कुल° (for कुल°) — (L 1951) G(ed) मद्भावीन (for °नो) — (L 1956) D1 देवी (for सैव) D2 G3 प्रदायिनी (for प्रदा तु सा) — G3 om line 1957 — (L 1958) G(ed) सुत (for मम) G3 त्रिकाला (for गायत्री) — (L 1961) D1 जपते (for भजते) — (L 1963) D1 कुलोत्तम (for °द्भव) — (L 1964) D1 ब्रह्मणो लोकमुत्तमम् (for ᵇ) — (L 1965) G1 G(ed) मम लोकमवाप्नोति (for ᵃ) — (L 1968) G3 सर्वदा (for पाण्डव) — (L 1970) D1 मुक्तिमान्, G2 M1 मुक्तवान (for मुक्तिभाक्) — (L 1973) G(ed) ह्यवधूय (for ह्य°) — After line 1973 D1 ins

115** संध्यां माध्याह्निकीं कुर्याद्भुक्त्यर्थं कुलोद्भव ।
समभ्यर्च्य तथा देवं मां क्षीरोदनिवासिनम् ।
पौरुषेण तु सूक्तेन षोडशैरुपचारकैः ॥
धूपदीपादिनैवेद्यैर्गन्धपुष्पाञ्जलीनपि ।
समर्प्य देवदेवाय तद्भक्ताय विशेषतः ॥

— (L 1976) D1 यत्र (for येन) — G(ed) om lines 1976–1977 — (L 1978) D1 भारवार्थी तु (for राज्यकामो), — (L 1979) M1 G(ed) चक्राकारं (for चक्रा°) D1 वीणार्थी (for भो°) D1 वल्मीकान् (for °कं) G3 वल्मीका बहुपुत्रकान् (for ᵈ) — (L 1980) D1 ब्रूमो नृणाम् (for प्रदातृणाम्) — (L 1982) D1 कार्यं, M1 मुख्यं (for तुर्यं) M1 G(ed) नरोत्तम (for नृपो°) — (L 1983) D1 च, G(ed) त्वां (for स) M1 मोक्षस्थानं प्रयात्याशु (for ᵃ) — (L 1984) G(ed) सस्तवाग् (for सस्तुत°) D1 मौनी सत्कृतवाग्नृप, G3 मौनी सस्तुतवाचर (for ᵃ) — (L 1986) G3 नर (for द्विज) — (L 1987) G1 M1 शोभितः (for सेवितः) — After line 1987, D1 ins

116** द्वात्रिंशत्कवलान्यश्च भुङ्क्ते ग्रासान्निवर्जितः ।
त्वरया भुङ्क्ते यस्तु स वेदाध्ययने कृशम् ॥

— (L 1988) G(ed) निरोगो (for नीरजो) — (L 1990) G(ed) सावित्री (for सादित्या) — (L 1991) G3 अर्के (for भानौ) — (L 1993) D1 स्तोत्रं तु (for ततोऽर्घ्यं) — (L 1995) G3 G(ed) प्रातःकाले (for काले काले) M1

कर्णपाशैः कृष्यमाणा गर्ते घोरान्धकारके ॥
पादाभ्यामाहताश्च केचित्कण्ठे प्रबन्धिताः ।
बहून्यब्दायुतं भारं निश्वासेन प्रयान्ति वै ॥
अधोमारुह्य केचित्तामाभेन तथापरे ।
कर्णाभ्यां च तथा केचिद्धस्तौ यान्ति पापिनः ॥
केचित्कृष्यमाणा जम्बुभिर्पीडिता परे ।
केचित्प्रलुठिता यान्ति ताड्यमानास्तथापरे ॥
निरुच्छ्वासतया केचिद्विस्फारितलोचना ।
छायाजलविहीने तु पथि यान्ति बुभुक्षिता ॥
शोचन्त स्वानि कर्माणि रुदन्तश्च मुहुर्मुहुः ।
शुष्कोष्ठतालुका केचिद्यान्ति यममन्दिरम् ।
शरीरैर्दह्यमानाश्च सुतप्तैरङ्गारैर्भृशम् ॥
तृणैराच्छादिता केचिद्दह्यमाना समन्ततः ।
अधोमुखा कृष्यमाणा केचिन्मलकर्दमे ॥
तप्तसैकतमार्गेषु केचिन्नग्ना प्रयान्ति वै ।
कुशाजिनं वहन्तश्च शवं केचित्प्रयान्ति वै ॥
भक्ष्यमाणा मांसानि पिबन्तो रुधिरं स्वकम् ।
गृध्रकङ्कैर्महानादैरद्यमाना शिवादिभिः ॥
वहन्त कण्टकयूपं अभिदंष्टा प्रयान्ति वै ।
गदाग्रैर्निशितैर्घोरैर्भक्ष्यमाणा प्रयान्ति वै ॥
खरमारुह्य केचित्तु केचिद्वै भानमङ्कके ।
काकगृध्रं तथोलूकं सिंहं व्याघ्रं तथा वृकम् ।
आरुह्य पापिनो यान्ति यमलोकं भयावहम् ॥
क्षारमांसनिचयं भुञ्जन्तो यान्ति पापिनः ।
पुरीषमूत्रनिचयं विशन्त पापिन पथि ॥
हा हतोऽस्मि हतोऽस्मीति क्रन्दमानास्तथा परे ।
त्रासाद्विवर्णवदना घूर्णितविलोचना ॥
मत्तहस्त्यश्ववृन्दाश्च गजदन्तैः प्रहारिता ।
क्षुत्तृषिता प्रयान्त्येव पापिन पाण्डुनन्दन ॥
पिशाचैर्भक्षिता केचिच्चण्डैर्भूतगणैस्तथा ।
राक्षसैर्भक्षिता केचिड्डाकिनीकुलसंकुले ॥

कूष्माण्डभैरवगणैर्महाजगरकारिभिः ।
भयभैः खादिता केचिन्महिषैर्महदंष्ट्रिभिः ।
जीर्णाङ्गानि वहन्तश्च शुष्कास्थिनिचयानि ते ॥
महावराहयूथैश्च दारिता यान्ति पापिनः ।
अहंकारयुता तत्र तत्र राक्षसभक्षिता ॥
परदाररता तत्र तत्र शिरोविभेदिता ।
परद्रव्यापहरणात् शराग्न्यां विनियोजिता ॥
समेरुहा महाकूपे कृष्यमाणा अभिलया ।
प्रयान्ति मरुतार्ते नरकं दारुणं भृशम् ॥
छुरैरुत्कृत्य मांसानि छिन्नदेहास्तथापरे ।
छिन्नहस्ता वहन्तश्च स्वशिरा करसंपुटे ।
प्रयान्ति मानिन पापा महाभया निर्घृणात्मना ॥
स्वगुह्यं केचिदुत्कृत्य व्यादन्तो यान्ति पापिनः ।
हा पुत्रेति रुदन्तश्च हा तातेति तथापरे ॥
हा अम्बेति तथा चान्ये हा स्वसेति तथापरे ।
*छिद्धि कान्ते मम प्राणि प्राणिपुत्रका तथापरे ॥*
महाराज महाभाग रक्ष मां शरणागतम् ।
एवं वाक्यानि सततं प्रयान्ति प्राणकातुरा ॥
विस्मृत्य स्वानि कर्माणि मूढा पूर्वं वदन्ति हि ।
*मौनमाश्रित्य यान्त्येव कर्मज्ञा कुरुनन्दन ।*
एवं बहुविधाकारं पापिनो यान्ति तत्पथि ॥
श्रुत्वैव नरकं राजन्धर्मपुत्रो युधिष्ठिरः ।
मूर्च्छितो भ्रातृभिः सार्धं भीतभीतो व्यतिष्ठत ॥
दृष्ट्वा वै पुण्डरीकाक्ष कम्पमानं युधिष्ठिरम् ।
मा भैषीरिति चोवाच स्व राजन्धर्मतत्परः ॥

श्रीभगवानुवाच ।

धर्मिष्ठानां गतिं वक्ष्ये तव प्रीत्या नराधिप ।
निबोध त्वं सुरैर्जुष्टां सुखदां तव शाश्वतीम् ॥
धर्मिष्ठा ये नरश्रेष्ठा दानशीला सुबुद्धयः ।
अतीव सुखसंपन्ना प्रयान्ति यममन्दिरम् ॥
अचला ये च धर्मिष्ठा सुखमन्त स्वादु यान्ति वै ।

—(L. 2660) G(ed) त्वक्षमानाश्च (for शुष°) —(L. 2661) G1 M1 °श्वास ; G(ed) °श्वाडे (for °श्वा) — D1 G(ed.) om line 2662 —(L. 2662) G1 कण्ठ (for कर्णे) —(L. 2663) G1 पादाभ्यां पादहताश्च (for °) —(L. 2666) M1 कर्णाग्रेण (for °भ्यां च) — G2 om lines 2672–2675 G1 M1 om. line 2673 —(L. 2674) G1 तुषै राच्छादिते कूपे (for °) — G1 M1 om line 2675 D1 om. line 2676 —(L. 2677) G1 पङ्क (for शव) — For line 2680, G1 subst

136** कण्टके नरके घोरे प्रयाति यमसादनम् ।

— M1 om line 2681 —(L. 2681) D1 G(ed) दीर्घं (for दुर्गं) G(ed) बध्यमाना (for भक्ष्य°) —(L. 2682) G1 आरोप्य (for आरुह्य) —(L. 2683) G(ed) सिंहव्याघ्रौ (for सिंहं व्याघ्रं) —(L. 2685) G(ed) भक्षयन्तः प्रयान्ति वै (for °) — M1 om lines 2688 2689 —(L. 2689) G(ed) °दन्ताद् (for °वृन्दाः) — M1 om. lines 2691–2695 —(L. 2691) D1 माहिषे दशवाहिभिः (for °). —(L. 2692) G1 शुनकीगणसंकुले, G(ed.) डाकिनीगणपीडिता (for °) —(L. 2693) G(ed) डाकिन्यजगराद्यैः (for °) — D1 om (hapl.) line 2694 —(L. 2694) G1 घट्टिता, G(ed) धर्षिता (for खादिता) —(L. 2695) G(ed) निचयानपि (for °नि ते) — D1 om (hapl) line 2699 —(L. 2705) G1 M1 उत्कृष्य (for °त्य) G2 स्वपादं केचिदुद्दिश्य (for °) — For line 2707, G(ed) subst.

137** तथा हा मातरित्यन्ये सख हाहेति चापरे ।

—(L. 2710) G1 प्रयाति प्राणिनः पथि (for °) — Before line 2714 all Mss. ins. वैशम्पायन —(L. 2714) M1 G(ed) दृष्ट्वा (for श्रुत्वैव) —(L. 2715) G2 प्रयात चरणीतत्वे (for °) — M1 om. the ref —(L. 2722) M1 G(ed) नरश्रेष्ठ (for च धर्मिष्ठा) D1 अध्वदाने तु धर्मिष्ठा (for

क्षीरदा ये तु सुखिनः पिबन्ति क्षीरमुत्तमम् ॥
घृतदा मधुदाश्चैव क्षीरदाश्च नृपोत्तम ।
सुधापानं प्रकुर्वन्ति प्रयान्ति यममन्दिरम् ॥
शाकदः पायसं भुञ्जन्दीपदः प्रज्वलन्दिशः ।
वस्त्रदो राजशार्दूल दिव्याम्बरधरो ययौ ॥
अलंकारप्रदो याति पूज्यमानोऽमरैः सह ।
गोदानेन नरो याति सर्वकामसमन्वितः ॥
भूमिदो गृहदश्चैव विमाने सर्वसंपदा ।
अप्सरोगणसंकीर्णे क्रीडन्याति यमालयम् ॥
हयदो गजदश्चापि यानदश्च नृपोत्तम ।
यमालयं विमानेन याति भोगसमन्वितः ॥
मलत्रोऽम्बुदश्चैव कृष्णाजिनमहीप्रदः ।
फलदः पुष्पदश्चैव याति संतोषसंयुतः ॥
ताम्बूलदो नरो याति सुखात्मा यममन्दिरम् ।
विद्यादानरतो याति पूज्यमानोऽग्रजन्मना ॥
सर्वभूतदयायुक्तः पूज्यमानोऽमरैः सदा ।
पुराणपाठको याति पूज्यमानो मुनीश्वरैः ॥
शृण्वन्ति सततं ये तु पुराणं मनुजेश्वर ॥
ते चन्द्रधवलैर्यानैः प्रयान्ति यममन्दिरम् ॥
ज्ञानपूर्णा नरा यान्ति कृते ये तु यमालयम् ।
त्रेतायां तपसा लोकं मम प्राणेश्वरस्य ह ॥
द्वापरे यज्ञविधिना प्रयान्ति पदमव्ययम् ।
कलौ युगे नरश्रेष्ठ पुराणश्रवणादरः ।
प्रयाति परमं स्थानं यत्र गत्वा न शोचति ॥
कलौ युगे मनुष्याणां पुराणश्रवणात्मम ।
कीर्तनाद्राजशार्दूल मम लोके भविष्यति ॥
पुराणश्रवणान्मर्त्यः पुत्रपौत्रादिसंयुतः ।
भुक्त्वा भोगान्यथाकामं तदन्ते मामुपैति च ॥
कलौ देवाः प्रशंसन्ति पुराणश्रवणं परम् ।
पदं मुक्तिमवाप्नोति सत्यं सत्यं मयोदितम् ॥

आत्मार्थं वा परार्थं वा यो वदेद्धर्मसंहिताम् ।
प्रयाति सुखमार्गेण देवलोकं सुखावहम् ॥
धर्मशास्त्रे भक्तियंस्य वर्तते कुरुनन्दन ।
तत्पर्वं स्तूयमानस्तु स याति यममन्दिरम् ॥
उपवासैर्नरा यान्ति देवविधानेन धर्मिणः ।
गजोष्ट्रवृषभैर्यान्ति विमानेन च भारत ॥
चतुर्दन्तमयं यानमारूढा यान्ति तत्पथि ।
यान्ति देवगणैः सार्धं दिव्यरूपधरा दिवम् ॥
रथं माणिमयं दिव्यं आमूलस्वर्णभूषणम् ।
आरुह्य सुखिनो यान्ति धार्मिकाः पाण्डुनन्दन ॥
केचिद्विमानमारुह्य सूर्यकान्तिसमप्रभम् ।
प्रयान्ति नरशार्दूल मम लोकं सुखावहम् ॥
स्वर्णधामरमयुक्तं सेव्यमानाप्सरोगणैः ।
ते चन्द्रधवलैर्यानैः प्रयान्ति मम मन्दिरम् ॥
धर्मशास्त्रसमं सर्वं प्राप्य पथि प्रमो ।
क्रीडयित्वा यथाकामं प्रयान्ति मम मन्दिरम् ॥
आहिताग्निनो भूत्वा ह्यग्निहोत्ररता सदा ।
प्रयान्ति मम लोकं वै पुण्यात्मानश्च ते तथा ॥
परोपकारनिरता धर्मध्यानपरायणाः ।
उत्तमा यान्ति राजेन्द्र सत्यलोकं ब्रह्मणा ॥
ब्रह्मविद्याकर्तारस्तथा वैराग्यधर्मिणः ।
प्रमादविश्रमनर्थे प्रयान्ति मम मन्दिरम् ॥
नित्यदानपरा राजविप्रं विप्रपूजकाः ।
विप्रपादोदकपराः उत्तमो यान्ति सन्दनम् ॥
एवं धर्मपरा यान्ति सुखेन मम मन्दिरम् ।
परत्रेह च राजेन्द्र धर्मं नृप सदा मता ॥
य इदं पुण्यमाख्यानं धर्माधर्मं हि पाण्डव ।
शृणोति सततं भक्त्या मुच्यते सर्वपातकैः ॥

Colophon.

युधिष्ठिर उवाच ।

भगवन्देवदेवेश मायातीत महामते ।
नमामि पुण्डरीकाक्ष त्वत्पादकमलं शुभम् ॥
पापिनो ये तु मनुजाः पापं कृत्वा सुदारुणम् ।
नरकं यान्ति ते नाथ मुच्यन्ते न कथं प्रभो ॥
यदि मुक्ताः प्रयत्नेन तेषां का गतिरुच्यते ।
किं भवन्ति च ते नाथ कथं गर्भं विशन्ति ते ॥
गर्भस्थाः किं नु कुर्वन्ति जातमात्रा यदूत्तम ।
वृक्षत्वे च पशुत्वे च मृगत्वे क्रिमियोनिषु ॥
पक्षित्वे पापकर्माणो मत्स्यत्वे च महामते ।
एतान्सर्वान्ममानन्त स्पष्टीकर्तुं त्वमर्हसि ॥

श्रीभगवानुवाच ।

शृणु पाण्डव वक्ष्यामि नराणां पापकर्मणाम् ।
गर्भस्थानां बहिःस्थानां जन्तूनां वर्तनं प्रभो ॥
नरकेषु चिरं मग्ना जन्तवो नित्यदुःखिताः ।
शोचन्तः स्वानि कर्माणि बहुकालं रुदन्ति हि ॥
सर्वानेतान्महाघोरान्नरकाननुभूय च ।
क्रमेण दैवयोगात्तु निर्विशन्ति महीतलम् ॥
सर्वदुःखसमायुक्ताः सर्वोपद्रवसंकटे ।
स्थावरत्वे नियोज्यन्ते भज्यन्ति प्रभवन्ति च ॥
वृक्षगुल्मलतावल्लीगिरयश्च तृणानि च ।
स्थावरा इति विख्याता महामोहसमावृताः ॥
दवाग्निना हि दह्यन्ते छिद्यन्ते पापकर्मभिः ।
वेपन्ते हि महावातैः शुष्यन्ते चण्डरश्मिभिः ।
हन्यन्ते हस्तिभिस्तात शुष्कायन्ते ह्यवृष्टिभिः ॥
फलार्थं छिद्यमानाश्च गृहार्थं नरसत्तम ।
चितार्थमिन्धनार्थं च महामोहसमावृताः ॥
एवं क्लेशसमायुक्ताश्चिरं तिष्ठन्ति भूतले ।
ततः पशुत्वमापन्ना जायन्ते क्रिमियोनिषु ॥
कृमयस्तु महाभाग सदा [illegible]रोपजीविनः ।
क्षणार्धमुपजीवन्ति क्षणार्धं तु म्रियन्ति च ॥
बलवद्भिश्च खाद्यन्ते ह्यशक्ता ह्यात्मरक्षणे ।
शीतवातातपक्लेशभूयिष्ठाः क्षुधिता भृशम् ॥
मलमूत्रादिमार्गेषु संचरन्तो नृपोत्तम ।
सुखलेशमजानन्तो म्रियन्ते दुःखजीविनः ॥
पक्षियोनिं ततः प्राप्य बलिभिः पक्षिभिर्हताः ।
चरणान्निधनं प्राप्ताः खादिता मांसलोलुपैः ॥
म्रियन्ते केचिदण्डेषु द्विजाता मांसजीविनः ।
केचिद्गृहाङ्गणे सदा नीडेषु प्रचरन्ति च ॥
पक्षैर्वियोजिताः केचिद्दह्यन्ते मनुजैर्भुवि ।
केचित्परार्थमाहारमुपाद्य क्षुधिता भृशम् ।
बल्यर्थं निहताः केचिच्चेष्टन्ते भुवि मानवैः ॥
केचित्तु भूभृतां गेहं भुक्त्वा ह्याहारमुत्तमम् ।
बध्यन्ते वागुरैः केचिन्म्रियन्ते मनुजैः सह ॥
मार्जारोरगदष्टाद्यैः खाद्यन्ते केचिदन्यथा ।
एवं क्लेशसमायुक्ता निधनं यान्ति पाण्डव ।
पशुयोनिं ततो गत्वा छिद्यन्ते बहुधा नृप ॥
वक्ष्ये तान्मूढधीन्मत्तानारमपापमजानतः ।
शृङ्गिणो दंष्ट्रिणः केचित्केचित्पादनखायुधाः ।
केचिद्दहन्ति मनुजान्केचिद्दारान्वहन्ति च ।
कुर्वन्ति कलहं केचिदन्योन्यं मदगर्विताः ।
केचित्पद्भ्यां शिरसा केचिद्दन्तैर्नखैः परे ।
कुर्वन्ति कलहं केचिद्धर्ममेता वृथा नृप ॥
कर्षन्ति केचित्तु स्वार्ता वहास्तिष्ठन्ति केचन ।
मांसाशिनो दुरात्मानः केचित्कर्मविशेषतः ॥
भुञ्जन्ति केचिद्राजेन्द्र दुहन्ति च पिबन्ति च ।
मरणं यान्ति केचित्तु ह्यन्योन्यकलहान्नृप ॥
महापापसमायुक्ता वर्तन्ते नृप कानने ।
पिबन्ति रुधिरं केचित्फलानि च तथापरे ॥
खादन्ति कन्दमूलानि तुषारांश्च लिहन्ति च ।
खादन्ति दुर्बलान्केचिद्रमन्ते मातरं परे ।
कामयन्ते तथा चान्ये मातरं स्वसखीजनम् ॥
जातिभेदमविज्ञाय रमन्ते काममोहिताः ।
प्राप्नुवन्ति तथा चान्ये बन्धनं त्वविशङ्कया ॥

---

G1 om the ref D1 राजा (for युधिष्ठिर) — (L. 2781) D1 जगत्पते (for महामते) — (L. 2784) G(ed) केन (for नाथ) — (L. 2787) G3 जातमात्रे (for °मात्रा) — (L. 2788) G3 M1 कृमि (for क्रिमि) — After line 2788 D1 ins

139** पाषाणत्वे लताभावे तृणगुल्मकृतौ हरे ।
केन दोषेण नाथन्ते पुमांसस्तद्वदस्व मे ॥
वृकव्याघ्रवराहादि सिंहवानरयोनिषु ।
जायन्ते केन दोषेण तत्सर्वं कथ्यतां प्रभो ॥
उष्ट्रवाजी खरखर गजसिंहादियोनिषु ।
करस्य पापस्य कृतार समुत्पन्ना महामते ॥
रक्षःपिशाचभावेषु शाकिनीडाकिनीतनौ ।
कस्माद्दोषात्प्रजायन्ते कियन्मात्रा यदूत्तम ॥

— (L. 2799) D1 निचयश् (for गिर°) — (L. 2815) G(ed) चरणैर् (for चरणात्) D1 चिरेण निधनं याता (for °) D1 G(ed) खाद्यन्ते (for खादिता) — (L. 2816) G1 जाता वै मांसजीविभिः (for °) — (L. 2817) G1 महारण्ये (for गृहा°) D1 प्रविशन्ति, M1 प्रचलन्ति (for °रन्ति) G3 व्याधैश्च निधनं गता (for °) — (L. 2821) D1 भ्रमन्ति ह्याहारमुत्तमम् (for °) — (L. 2825) G(ed.) ततः प्राप्य (for ततो गत्वा) — For line 2826, G1 subst

140** मध्ये तान्मन्यमानानां पापजन्मपरिग्रहान् ।

— (L. 2829) M1 केचिदन्योन्यगर्विता (for °) — (L. 2832) छिद्यन्ते (for कर्षन्ति) — (L. 2834) G(ed.) भुञ्जन्ति (for दुहन्ति) — (L. 2840) D1 मातरं सुखहेतवे (for °) — (L. 2841) G1 M1 रमन्ते कामुका हि ताम् (for °)

गङ्गे गङ्गेति यो ब्रूयाद्योजनानां शतैरपि ।
मुच्यते सर्वपापेभ्यो गङ्गास्नानफलं लभेत् ॥
मम पादोद्भवा देवी विश्वेश्वरमनोपगा ।
संसेव्या सर्वदा देवैः संसारच्छेदलिप्सुभिः ॥
तन्मृत्तिका ललाटे तु ध्रियते येन पाण्डव ।
तन्नेत्र नेत्रं शिरसि विधोरर्धं च धारयेत् ॥
यन्मज्जने महापुण्यं दुर्लभं ह्यकृतात्मनाम् ।
साधूनां सुलभा गङ्गा प्रीता मोक्षप्रदायिनी ॥
यत्र स्नाता पापिनोऽपि पितृमातृकुलानि च ।
सहस्राणि समुद्धृत्य प्रयान्ति मम मन्दिरम् ॥
स स्नातः सर्वतीर्थेषु गङ्गां स्मरति यः सदा ।
पुण्यक्षेत्रेषु सर्वेषु स्थितवांश्चात्र संशयः ।
योजनत्रितयं गत्वा गङ्गायामिति गच्छति ॥
यत्र स्नातं नरं दृष्ट्वा नराः पापयुता अपि ।
मुच्यन्ते सर्वपापेभ्यो नात्र कार्या विचारणा ॥
यदम्भः स्पर्शमात्रेण सर्वपापविमोक्षितः ।
यन्मृदं मस्तके धृत्वा वैष्णवो भवति ध्रुवम् ॥
देहेऽनुलेपनं कृत्वा देहबन्धो न जायते ॥
कदा यास्याम्यहं गङ्गां कदा यास्यामि तामहम् ।
अनुतप्यति यो नित्यं स विष्णुर्नात्र संशयः ॥
योजनत्रितयं यस्तु गङ्गायामिति गच्छति ।
सर्वपापविनिर्मुक्तो गङ्गास्नानफलं भवेत् ॥
सैव गङ्गा महापुण्या नर्मदाख्या प्रविश्य वै ।
मेषादिषु च मासेषु पावयत्यखिलं जगत् ॥
गोदावरी भीमरथी कृष्णा रेवा सरस्वती ।
तुङ्गभद्रा च कावेरी कालिन्दी सरयूर्नृप ॥
वेत्रावती ताम्रपर्णी शतद्रुश्च महानदी ।
एवमादिषु सर्वासु नदीषु सततं स्थिता ॥
या पुण्यसरितः प्रोक्ता शास्त्रेषु मुनिपुङ्गवैः ।
तासु सर्वजलस्था सा पावयत्यखिलं जगत् ॥
मकरस्थे रवौ गङ्गा कलमार्गे व्यवस्थिता ।
पुनाति स्नानपानाद्यैः पावयत्यखिलं जगत् ॥
गङ्गायाः सदृशो नास्ति पापारण्यदवानल ।
भवव्याधिहरा गङ्गा तस्मात्सेव्या प्रयत्नतः ॥
गङ्गाजलकणेनापि यः सिक्तो मनुजेश्वर ।
सर्वपापविनिर्मुक्तः स याति परमां गतिम् ।
आकल्पजन्मभिः पापं सञ्चितं यत्नरैर्नृप ।
तत्सर्वं लयमायाति प्रयागे माघमज्जनात् ॥
ब्रह्मादयः सुराः सर्वे रुद्रादित्या मरुद्गणाः ।
गन्धर्वा लोकपालाश्च यक्षगुह्यककिंनराः ॥
ब्राह्मी माहेश्वरी लक्ष्मी शचिर्मेनादितिर्दितिः ।
घृताची मेनका रम्भा ह्युर्वशी च तिलोत्तमा ॥
सर्वास्ता देवपत्न्यश्च देवाः सर्वे युधिष्ठिर ।
माघमासे च संप्राप्ते चन्द्रसूर्यग्रहे नृप ।
व्यतीपाते पुण्यदिने स्नातुमायान्ति देवताः ॥
अश्वमेधसहस्रेण वाजपेयायुतेन च ।
यत्फलं प्राप्यते सद्भिर्गङ्गाया माघिके दिने ॥
किमत्र बहुनोक्तेन गङ्गायाः सदृशं भुवि ।
नास्ति नास्ति नृपश्रेष्ठ तस्मात्सेव्या प्रयत्नतः ॥
सर्वकामप्रदा देवी सर्वोपद्रवनाशिनी ।
गङ्गा सेव्या प्रयत्नेन ह्यक्षयं मोक्षमिच्छता ॥

युधिष्ठिर उवाच ।

गङ्गां गन्तुमशक्तानां का गतिः पुरुषोत्तम ।
तीर्थं किं पुण्डरीकाक्ष पवित्रं पापनाशनम् ॥
लोकं गुभानि किं नाथ पूज्यं किं पुण्यकर्मणाम् ।
एतन्मे ब्रूहि लोकेश त्वदन्यः को वदेन्मुनि ॥

भगवानुवाच ।

हन्त ते कथयिष्यामि पवित्रं पापनाशनम् ।
सालग्रामशिलार्चनमत्रावां परं नृप ॥
सालग्रामार्चनाद्राजन्मानवा गतकिल्बिषाः ।
प्रयान्ति मम लोकं वै दीप्यमाना दिशो दश ॥
महद्विमानमारूढा गन्धर्वैरुपसेविताः ।
मम लोकं प्रयान्त्यत्र विश्वासं कुरु पाण्डव ॥
मुमुक्षुभिरहं पार्थ पूज्य एव हि सर्वदा ।
सालग्रामशिलाचक्रे वज्रकीटविनिर्मिते ॥
यः पूजयति मां चक्रे सालग्रामे नृपोत्तम ।
राजसूयसहस्रेण तेनेष्टं प्रतिवत्सरम् ॥
अपि पापसमायुक्ता धर्मकार्यविदूषकाः ।
सालग्रामार्चनात्पार्थ नैव यान्ति यमक्षयम् ॥
सालग्रामे यथा प्रीतिस्तथा लक्ष्म्यां न विद्यते ।

*) —(L 3211) D1 तीर्थेषु (for सर्वेषु) — D1 G1 M1 G(ed) om line 3212 —(L 3215) G1, 2 M1 G(ed) यदङ्ग (for यदम्भ) —(L 3218) G1, 2 M1 G(ed) द्रक्ष्यामि (for यास्यामि) —(L 3219) D1 विष्णुलोके महीयते (for *) — G2 om line 3220 —(L 3224) G1 G(ed) भीमनदी (for °रथी) —(L 3227) G2 पुण्यासु (for सर्वासु) — D1 om (hapl) lines 3228–3230 —(L 3229) G(ed) °कल्लानात् (for °स्था सा) —(L 3233) G1 G(ed) ध्येया (for सेव्या) —(L 3238) M1 कद्रादित्यमरुद्गणैः (for *). —(L 3240) G2 मनाः स्तुर (for मेनादितिर्) — G2 om. lines 3244–3246 —(L 3248) D1 क्षेत्र (for नास्ति)

—(L 3250) G2 सर्वथा मनुजे शुभे (for *) —(L 3251) G2 गङ्गाया तु च मिच्छता (for *) —(L 3254) G2 सर्वज्ञस्य महामते (for *) — G1 कृष्ण (for भगवान्). —(L 3255) G2 शृणु त्वं, M1 अहं ते (for हन्त ते) —(L 3256) D1 सर्वेषु, G1 G(ed) परंतप (for परं नृप) G2 भक्तानां परमं नृप (for *) — G2 om lines 3257–3260 —(L 3257) D1 M1 सालग्रामार्चना राजन् (for *). — *After line 3264, G2 ins*

146** पूजयन्तो च विशेषाद्विश्वासं कुरु पाण्डव ।

— G2 om lines 3264–3266 —(L 3264) D1 M1 -सास॰

एकादश्यां दिने यस्तु भोक्तुमिच्छति सुव्रत ।
स भोक्तु सर्वपापानि स्पृहयात्तुनं संशय ॥
यानि कानि च पापानि ब्रह्महत्यादिकानि च ॥
अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे ॥
महापातकयुक्तो वा युक्तो वा सर्वपातकैः ।
एकादश्यां निराहार स्थित्वा याति परां गतिम् ॥
एकादशी महापुण्या मम प्रियकरा तिथि ।
सेवन्या सर्वदा विप्रैः संसारच्छेदलिप्सुभिः ॥
स्वर्गमोक्षप्रदा ह्येषा सर्वपापप्रणाशिनी ।
सर्वसंपत्करी ह्येषा सुरत्वप्रदायिनी ।
सुपुत्रदायिनी ह्येषा सर्वविद्याप्रदायिनी ॥
बाल्ये वयसि वार्धक्ये यौवने वा नरेश्वर ।
उपोष्यैकादशीं भक्त्या गमिष्यन्ति दिवं हि ते ॥
किमत्र बहुनोक्तेन मोक्षद पाण्डुनन्दन ।
तस्मात्त्वं सर्वकालेषु ह्येकादश्या व्रतं कुरु ॥
इति ते कथितं सर्वं पुण्यमेकादशीव्रतम् ।
यच्छ्रुत्वा सर्वपापेभ्यो मुक्तोऽनन्त समश्नुते ॥

Colophon

सूत उवाच ।

एवं वदति विप्रेन्द्रा धर्मे कृष्णे जनार्दने ।
आज्ञप्तो बलदेवेन दूतोऽभ्येत्य वचोऽब्रवीत् ॥
नमस्ते सर्वलोकेश वासुदेव जगत्पते ।
शत्रुभिः पीडितान्बन्धून्स्वकीयान्पाहि सुव्रत ॥
द्वारवत्युपकण्ठं तु निरुद्धं पौण्ड्रकेण ते ॥
बलेन महता देव ससालक्षशतेन हि ।
अहं योद्धाथ वा त्वं वा किं करोमि च तद्वद ॥
मन्मुखेन भवानित्थमुक्तस्त्व सीरपाणिना ।
न शक्यमत्र वस्तु मे यास्यामि भवदाज्ञया ।
ज्ञातु वचोचितं कार्यं तद्भवान्गन्तुमर्हति ॥
एवमुक्तो जगन्नाथ प्रहृष्ट सर्ववेदिना ।
दूतेन स महस्वेति गाङ्गेय प्रत्युवाच ह ॥
देवव्रत महाभाग श्रूयतां वचनं मम ।
पाण्डूना त्वं हितार्थाय शेषधर्मं वद प्रभो ॥
त्वया नाविदितं किंचिन्नारदादपि श्रुतम् ।
नारदाय मया पूर्वमिमं धर्मं सुविस्तरम् ॥
प्रोक्तं सुरनदीतीरे तस्मादेतत्त्वया श्रुतम् ।
तत्सर्वं वद तत्त्वेन पाण्डवेभ्यो यदुश्रुतम् ॥
धर्मेण रक्ष तान्सर्वानिमांस्त्वं सततं प्रियान् ।
तव कीर्तिर्भवेच्छुद्धा लोकेऽस्मिापि विसारिणी ।
अस्य शेषं भवान्वेत्ति पाण्डुपुत्रान्प्रबोधय ॥
इत्युक्तो वै जगन्नाथो देवदेवो यदूत्तमः ।

---

(for महाघ्न ) — ( L 3321 ) G2 मोक्षदं सर्वदाश्चर्यं ( for °) — G1 om 3324-3325 — ( L 3328 ) G1 M1 ब्रह्म हत्यासनानि च ( for ᵇ) — After line 3333, D1 ins

151** आशौचे तु यथा श्राद्धमाशौचान्ते विधीयते ।
तथैवैकादशीश्राद्धं द्वादश्यामेव कारयेत् ॥
अस्तमिते सूर्ये यथा श्राद्धं परेऽहनि ।
तथैवैकादशीश्राद्धं द्वादश्यामेव कारयेत् ॥
एकादश्यां न यो नित्यं निषिद्धफलमेव हि
भुङ्क्ते यदि मूढात्मा स सोमफलं लभेत् ॥
कमलोपमयापस्तु व्रतभङ्गं करोति न ।
सोऽभयव्रतभङ्गं हि प्राप्नोत्येव न संशय ॥
श्रुता हि दानधर्मेण निषिद्धफलेष्वपि ।
व्रतलोपभयाद्वापि कार्यं तत्फलमव्ययम् ॥
प्रायश्चित्तादिकं कर्म तथा मत्स्यपणे विभो ।
तेनैव सकलं पापं विनश्यति न संशय ।
तस्मात्त्विषिद्धय युक्त्या पालयेदेकादशी तिथिः ॥

— ( L 3334 ) G(ed) सर्वसारकरी ह्यथा ( for ᵇ) — ( L 3335 ) G(ed) सर्वमोक्षप्रदा ह्यषा ( for °) G1 सर्वपापप्रणाशिनी, G(ed) पुत्रपौत्रप्रदायिनी ( for ᵇ) — D1 om line 3336 — ( L 3337 ) — ( L 3336 ) G(ed) कलत्र ( for सुपुत्र ) D1 यौवने न नृपात्तम ( for °) — For line 3337, G(ed) subst ,

152** बाल्ययौवनकौमारवार्धकेषु नरेश्वर ।

— After line 3340, G2 ins

153** सर्वकामप्रदा ह्येषा मोक्षदा मुक्तिदा विभो ।

— After line 3341 D1 G2 ins

154** श्रोतृणां सर्वपापघ्नं कीर्तनं च तथा विभो ।

— ( L 3342 ) G2 मुक्तो नाक गमति हि ( for ᵇ). — For line 3342, G(ed) subst

155** शृणोति यः स पापेभ्यो मुक्तः स्वर्गमवाप्नुते ॥

COLOPHON — *Sub-parvan* D1 G1 M1 आश्चर्यपर्वणि तीर्थधर्मो, G2 G(ed) शेषधर्मो — *Adhy name* D1 तीर्थी-नाम एकादशीवर्णनम्, G(ed) आचारश्राद्धमाहात्म्यवर्णनम् — *Adhy. no* D1 G1 2 M1 G(ed) 25

— After the above, G(ed) reads lines 6560-6646 ( L 3345 ) D1 नमोऽस्तु ते ( for जगत्पते ) — ( L 3347 ) D1 पौण्ड्रके सह, G(ed) °शालिना ( for °केण ते ) — ( L 3350 ) G2 श्रीकृष्ण मन्मुखेनोक्त, G(ed) संप्रुखे मगवन्निदं ( for °) — G1 om lines 3352-3355 — ( L 3353 ) M1 वक्तुम् ( for गन्तुम् ) — Before line 3355, M1 ins श्रीभगवान्° — ( L 3356 ) — ( L 3355 ) D1 महाप्राज्ञ ( for °भाग ) — ( L 3358 ) G(ed) G(ed) पाण्डवाना ( for पाण्डूना त्वं ). — ( L 3359 ) G(ed) मोक्ष ( for अय धर्मं ( for इमं धर्मं ) — ( L 3361 ) [illegible] ( for ᵇ) — ( L [illegible] वेद्मि ते ( for [illegible] ) — Before line 3364, D1 ins सूत उवाच — ( L 3365 ) G(ed.) श्रीमन् ( for मित ) — Before line 3366, D1 ins श्रीभग-

पाण्डवा श्रोतुकामास्ते प्रणम्य निभृता स्थिता ॥
ऋषयो द्विजमुख्याश्च दीक्षिता वनवासिन ।
सश्रद्धा स्थिता सर्वे श्रोतुं धर्मकथामृतम् ॥
कृते दृष्टे श्रुते धर्मे कीर्तित चानुमोदिते ।
नाशयेत्सर्वपापानि कृष्ण एव जगन्मय ॥

Colophon

वैशंपायन उवाच ।

इति सप्रणता पार्था धर्मे कृष्णे जनार्दने ।
श्रोतुकामाश्च ते सर्वे ब्राह्मणा ब्रह्मवित्तमा ॥
वासुदेव चिरं ध्यात्वा धर्मपुत्र प्रतापवान् ।
नत्वा पप्रच्छ धर्मात्मा धर्मं सुरनदीसुतम् ॥

युधिष्ठिर उवाच ।

कर्मणा येन मनुजा नरक यान्ति दु खिता ।
केषां सत्त्व वा तात लभंत स्वर्गमुत्तमम् ॥
ऋणीना च प्रदातृणा ऋणस्थस्य गतिस्तु का ।
तत्सर्वं वद तत्त्वेन देवव्रत महामते ॥

भीष्म उवाच ।

शृणु राजन्पुरा वृत्तमाश्चर्यं पुण्यवर्धनम् ।
भद्रकस्य तु संवाद गोवृषस्य महा मम ॥
काश्मीरे पुण्यदेशे तु सर्वसंपत्समाकुले ।
ब्राह्मणो भद्रको नाम सर्वाचारविवर्जित ॥
कृपिको तु स्वभावेन मूर्खो सदा वेदविरोधकृत् ।
पितृमातृकलैस्त्यक्त द्यूतभाजी तु कामुक ।
राजदण्डभयाद्दीनो देशान्तरमुपागमत् ॥
तस्मिन्देशे चिर काले स्थित्वा राजेन्द्र दुर्मति ।
नीलवर्णमनड्वाह महिष समचोरयत् ।
तौ वञ्चयित्वा तन्नाम्नौ स्वदेश प्राप्तवान्पुन ॥

वैशंपायन उवाच ।

पितामहस्य वचन श्रुत्वा विस्मयकारकम् ।
धर्मसूनुर्महाप्राज्ञ इद वचनमब्रवीत् ॥

युधिष्ठिर उवाच ।

किं कर्म कृतवांस्तात स्वदेशे ब्राह्मणाधम ।
कथा श्रुत्वा प्रवृत्तोऽभूद्बान्धवेभ्य किमब्रवीत् ॥
तत्सर्वं वद तत्त्वेन देवव्रत महामते ।
कृष्णो यथा स कृपया ह्यवोचदखिलेश्वर ॥

भीष्म उवाच ।

भद्रके ह्यागते सर्वेऽपि बान्धवा परिशङ्किता ।
ऊचु परमधर्मज्ञा पुरस्तस्यातिकोपिता ॥
किमर्थमागतो भद्र पापरूप भयंकर ।
गच्छ गच्छ पुनस्तूर्णं बन्धूनामहितकर ॥
परुषं स्वजनस्येदं निशम्य वचनं तदा ।
भद्रक प्राह तान्सर्वान्विप्रश्चन्धर्मनन्दन ॥
भो भो बन्धुजना सर्वे शृणुध्व वचनं मम ।
यदा भवद्भिर्निरस्तस्तदा गङ्गामुपागमम् ॥
तत्रस्था ब्राह्मणा सर्वे सत्कर्मपरितोषिता ।
युष्मादृशा महाभागा मम सर्वे ददुश्च ते ॥
तच्छ्रुत्वा बान्धवा सर्वे वचन चेदमब्रुवन् ।
सुखी भव महाभाग गार्हस्थ्य वै सदा कुरु ।
गार्हस्थ्येन तु धर्मेण महच्छ्रेयो भवेद्ध्रुवम् ॥
तानेव वञ्चयित्वा स भद्रक पापनिश्चय ।
युगधरौ तु तौ कृत्वा ययौ कृषिभुव प्रति ॥
किंचिद् बन्धुभि पृष्टो गूढरूपोऽतिपापकृत् ।
प्रारम्भ करवाणीति बान्धवेभ्यस्तदाब्रवीत् ।
सभ्रम कृतवांस्तत्र भद्रक पापनिश्चय ॥
ततो हल समादाय दीर्घं कृत्वा मनुत्तमम् ।
उपानहौ धर्मरज्जु वेणुदण्डसमन्वितम् ॥
स्कन्धे राजन्महच्छीर कम्बलेनावगुण्ठित ।
पूर्वपश्चिमलाङ्गूल कौपीनपरिशोभित ।
ययौ कृषिभुव राजन्भद्रक पापनिश्चय ॥
गच्छ गच्छेति पापात्मन्पास्यामि रुधिर तव ।
इति जल्पन्स मूर्खो वै तृष्णया परिपीडित ।
भद्रक पापकृत्क्रूरो द्रुत भूमिं चकर्ष स ॥
मध्याह्नसमये श्रान्त महिषं समपीडयत् ।
गाढदु ख विशेषेण भानुरश्मिप्रपीडितम् ॥
आश्वास्य वदर्ना स्वेन रसनाकम्पितानन ।
अपत सहसा भूमौ सूनवक्रोरदर्शन ॥
त विलोक्य कृपायुक्त विह्वल भुवि चेष्टितम् ।

— (L 3491) $G_1$ $M_1$ धाल्येषु G(ed) लोकेश (for °षु) — $G_3$ om the ref — (L 3494) $D_1$ निवृत्त (for निभृता) — (L 3496) $G_3$ श्रोतु धर्मामृत द्विजा (for °) — (L 3497) G(ed) दृष्ट (for धर्मे) $G_3$ कृतधर्मे श्रुत दृष्टे (for °)

Colophon — *Sub-parvan* $D_1$ आश्चर्यपर्वणि शेषधर्मा, $G_{1\cdot2}$ $M_1$ शेषधर्मा G(ed) अ श्वर्यपर्व — *Adhy name* G(ed) श्रीकृष्णमहिमा — *Adhy no* $D_1$ $G_{1\cdot2}$ $M_1$ 26, G(ed) 27

(L 3500) $G_3$ G(ed) लोककामाद् (for श्रोतु°) — $G_{1\cdot2}$ om the ref — (L 3505) $D_1$ G(ed) ऋणानां (for ऋणीना) — (L 3509) $M_1$ G(ed) सनातन (for °शुभे) — (L 3511) $G_3$ विरोधक (for °कृत्) — (L 3513) G(ed) भो (for भोजा) — (L 3516) $G_1$ तद्राष्ट्राद (for तद्राजौ) — (L 3517) $G_3$ G(ed) तद्वाक्य (for वचनं) $D_1$ श्रुत्वा विस्मयमागत (for °) — $G_3$ $M_1$ om the ref — (L 3519) G(ed) स्वदेशे भद्रको द्विज (for °) — (L 3520) $M_1$ G(ed) प्रवर्तन (for प्रवृत्तोऽभूद्) — (L 3530) G(ed) सत्यक्तस् (for निरस्तस्) $G_1$ G(ed) उपागत (for °गमम्) — (L 3532) $M_1$ महासत्त्वो (for °भागा) — (L

स्नानहीनः सदा पापी तथा पितृविदूषकः ।
गुरुदेवान्द्विजान्बन्धून्सर्वान्मित्रं गवां कुलम् ।
पुराणधर्मशास्त्राणि निन्दको नरकं व्रजेत् ॥
स्नाने जपे तथा होमे भोजने देवसंनिधौ ।
बहुभाषी नरो यस्तु दारुणं नरकं व्रजेत् ॥
परदारपरद्रव्यपरक्षेत्रापहारकाः ।
परनिन्दापरा मूर्खास्ते वै निरयगामिनः ॥
ब्राह्मणेभ्यः प्रतिश्रुत्य दास्यामीति धनादिकम् ।
पश्चान्नास्तीति यो ब्रूयात्तमाहुर्ब्रह्मघातकम् ॥
नास्ति नास्तीति यो ब्रूयादतिथौ गृहमागते ।
तस्य जिह्वां समुद्धृत्य घोरास्तु यमकिंकराः ।
दहन्ति युगपर्यन्तं कुम्भीपाकेऽतिदारुणे ॥
पानीयमन्नदानं च तथा ताम्बूलभोजने ।
तृणकाष्ठशिलाकाला घ्नदाता नरकं व्रजेत् ॥
सर्वेषामेव पापानां पापमेकं महत्तरम् ।
लाङ्गलाकर्षणं पापं महापापं प्रकीर्तितम् ।
यः सदा कर्षते मूर्खो ब्राह्मणो भ्रूणहा हि सः ॥
देवाः पितृगणा विप्रास्तथा गन्धर्वचारणाः ।
हलकर्म प्रकुर्वाणं तथा त्यक्ष्यन्ति प्रभुम् ।
तेपुत्रे तु समुद्दीक्ष्य निर्भाग्यो भव नारकी ॥
कुले कुलप्रसूता ये सर्वकर्मबहिष्कृताः ।
दरिद्रा अन्नहीनाश्च सर्वे संतानवर्जिताः ।
बन्धुभिः संपरित्यक्ता गन्तारो नरकं ध्रुवम् ॥
कुम्भीरौरवकाकोलक्षेपयन्त्रामिपत्रकम् ।
तप्ततैलं तप्तकुम्भं घटायन्त्रमधोमुखम् ॥
व्याघ्रशूलं यमकीटं वृकराक्षसभक्षणम् ।
एतेषु नरकेष्वेते पतिष्यन्ति न संशयः ॥
एवं शास्ताः पूर्वकाले स्वं स्वं धाम ययुस्तदा ।
तस्मात्सर्वेषु कालेषु कृषीं पापं न कारयेत् ॥
सर्वभूतहितः शान्तो दान्तः परमबुद्धिमान् ।
स्वधर्मनिरतो यो वै स याति परमां गतिम् ॥

भीष्म उवाच ।

एवं निशम्य राजेन्द्र रङ्गभूमौ पपात ह ।
पापबुद्धिं विसृज्याशु किं करोमीति चाब्रवीत् ॥
कृतकृत्योऽसि भद्र त्वं गच्छ सौम्य यथासुखम् ।
त्वमस्माद्धारात्मुक्तः पापात्खलु सुदारुणात् ॥

गोपतिरुवाच ।

न गच्छामि महाभाग पूर्वे तव ऋणं गतम् ।
तद्धनं तव हस्ते च दत्त्वा यास्यामि निर्वृतिम् ॥

भद्रक उवाच ।

कथं त्वमृणवांस्तात मद्विधे चापि किं नु मे ।
ऋणभङ्गः कथमहं तत्सर्वं कृपया वद ॥

गोपतिरुवाच ।

निष्क्रयं गृहीत्वा तु तव हस्तान्महामते ।
ईदृशं जन्म संप्राप्तं ततो घोरं भयावहम् ॥
इदानीमुचितं ब्रूहि ऋणान्निस्तारकारणम् ।
मुच्येय हि कथं तात तदुपायं वदस्व ह ॥

भद्रक उवाच ।

त्वयोक्तं तद्धनं दत्त्वा मम हस्ते महामते ।
महिषेण समं गच्छ ऋणान्मुक्तो न संशयः ॥

गोपतिरुवाच ।

पौरुषं कुरु विप्रेन्द्र यथातथ्यं ब्रवीमि ते ।
मा वयोऋणवान्कश्चिद्भुवि भागमिष्यति ।
निष्क्रयं तस्य हस्ताद्गृहीत्वावां विसर्जय ॥

भीष्म उवाच ।

एवमुक्त्वा तु राजेन्द्र नमस्कृत्वा तु तं द्विजम् ।
तूष्णीमास्ते गवां नाथो ब्राह्मणो विस्मयं वहन् ॥
एतस्मिन्नन्तरे शूद्रोऽप्याययौ विप्रसंनिधिम् ।
सोऽतीव त्वरया युक्तो वाक्यमेतदुवाच ह ॥
विप्राद्य श्रूयतामेतो विक्रीयते त्वया यदि ।
निष्क्रयं प्रदास्यामि मूल्यमतो प्रदीयताम् ॥

विप्र उवाच ।

तथा करोमि ते शूद्र सधनं च ददस्व मे ।
गोपतिं मादृय येमौ तव हस्ते न संशयः ॥

भीष्म उवाच ।

ब्राह्मणस्य वचः श्रुत्वा शूद्रको दत्तवान्धनम् ।
स्वगृहं प्राप्तवान्राजेन्नादाय तत परम् ॥
बध्वा गोष्ठे स्वे शूद्रः शुश्रमाने सुतैः सह ।
अन्योन्यकण्ठबद्धाश्च रज्जुभिः परिपीडितौ ।
अभूतां तत्क्षणादेव परासू पतितौ भुवि ॥

— After line 3607 D₁ G₁ M₁ G(ed.) ins an addl colophon [ *Subj arcan* D₁ आश्चर्यपर्वणिधर्मा, G₁ M₁ G(ed) शेषधर्मा — *Adhy name* D₁ G₁ M₁ 27 G(ed) 28 ]. — D₁ गोपतिर् (for अनङ्गान्) —(L 3612) M₁ अस्नात सर्वदा पापी (for °) — M₁ om lines 3615-3616 —(L. 3620) G(ed) वक्ति (for ब्रूयाद्) G(ed) दारुणं नरकं व्रजेत् (for °) — After line 3620 D₁ G₁ ins.

159** पितृपूजां गृहार्थी च धर्मोद्धुरो शुभाम् ।
पितृं पुनर्वा पूजामहा वा नरकं व्रजेत् ॥

—(L 36*5) D₁ तृणकाष्ठानि गात्राणि (for °) —(L 3643) G₁ M₁ न हन्त् (for राजेन्द्र) and भूमौ भद्र (for रङ्गभूमौ) — Before line 3646, G₁ ins भद्रक — For line 3646 G₁ subst.

160** तद्धनं च निर्मुक्तं गच्छ गच्छ सुदारुणात् ।

—(L 3648) M₁ G(ed) उर (for च) —(L. 3652) D₁ G(ed) सुघोरं च (for ततो घोरं) —(L. 3658) D₁ ऋणदं (for ऋणवान्) —(L 3664) D₁ विप्राद्य; G₁ हे विप्र (for विप्राद्य) —(L. 3665) C(ed) प्रदेहि मे (for प्रदीयताम्)

वैशंपायन उवाच ।

देवदेवारविन्दाक्ष मायातीत महामते ।
त्वत्पादकमलं वन्द्यं नमामि सततं विभो ॥
इति निश्चित्य मनसा धर्मराज पितामहम् ।
विनयानतो भूत्वा प्राञ्जलिर्वाक्यमब्रवीत् ॥

युधिष्ठिर उवाच ।

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
मोक्षोपाय सतां सद्य यन्मे तद्ब्रूहि पापहम् ॥

भीष्म उवाच ।

पापिनो मनुजस्येह सत्सङ्गान्मुक्तिरिष्यते ।
परया हरिभक्त्या च शाश्वती भवति प्रभो ॥
शृणु पार्थ महाभाग माहात्म्यं शार्ङ्गधन्विन ।
तस्य संनिधिमात्रेण नराणां मुक्तिरव्यया ॥
नारायण परं ज्योतिर्ज्योतिषां ज्योतिरुत्तमम् ।
ये प्रपन्ना महात्मानस्तेषां मुक्तिर्हि शाश्वती ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
सर्वपापहरं पुण्यमायुर्वर्धनमुत्तमम् ॥
आसीत्पुरा महाराज क्षत्रियो लोककण्टक ।
नक्षत्रवर्मा बलवान्मूर्खो वै लोकपीडक ॥
परदारपरद्रव्यग्रहणे सततोद्यत ।
अधर्मनिरतो नित्यं बहुधा जनपीडक ॥
हतवान्ब्राह्मणान्गाश्च शतशोऽथ सहस्रशः ।
देवस्वहरणे नित्यं परस्वहरणे तथा ।
उद्युक्त सर्वदा राजन्क्षत्रव्याधैश्च सेवित ॥
तेन पापान्यनेकानि कृतानि सुबहूनि च ।
न तेषां शक्यते वक्तुं सख्या वर्षकोटिभि ॥
स कदाचिन्महाभाग सर्वपापकृतकोपम ।
विदेहनगरं राजन्सर्वसंपत्समायुतम् ॥
योषिद्भिर्भूषिताभिश्च पुरुषै परमायुधै ।
सर्वमङ्गलसंयुक्तैर्विविधैश्च पदातिभि ॥
अलङ्कृत विपणिभिस्तोरणै सर्वतोमुखै ।
ययौ पुरं बहुविधै पूरित धनराशिभि ॥
तस्योपकण्ठे देवस्य मन्दिरं मणिपूरितम् ।
हाटकैर्निर्मितै कुम्भै शालाकै काञ्चनैश्चितम् ।
तप्तकाञ्चनसाहस्रैर्निर्मितैस्तोरणैर्युतम् ॥
एवंभूत देवगृहं नानागोपुरशोभितम् ।
नक्षत्रवर्मा बलवान्दृष्ट्वा तत्र मुदं ययौ ॥
इहाम्बरं सुवर्णानि बहूनीति विनिश्चित ।
जगाम विष्णुभवनं नक्षत्रश्चौर्यलोलुप ॥
तत्रापश्यद्द्विजवरं शान्तं तत्त्वार्थकोविदम् ।
परिचर्यापरं विष्णोरुदङ्कं तपसां निधिम् ।
एकाकिनं दयालुं च नि स्पृह ध्यानलोलुपम् ॥
दृष्ट्वा नक्षत्रवर्मासौ स्वचौर्यस्यान्तरायिनम् ।
देवनाद्द्रव्यजालं ॥ समादातुमना निशि ।
उदङ्कं हन्तुमारेभे विकृत्यासिर्मदोद्धत ॥
पादेनाक्रम्य तद्वक्षो जटा संगृह्य पाणिना ।
हन्तुं कृतमतिं क्रूरमुदङ्क प्रेक्ष्य चाब्रवीत् ॥
भो भो साधो वृथा मां त्वं हनिष्यसि निरागसम् ।
मया किमपराद्धं ते कृतं तद्ब्रूहि सुव्रत ॥
कृतापराधिनं लोके शिक्षां कुर्वन्ति पार्थिवा ।
न हिंसन्ति वृथा सौम्य सज्जना अपि पापिनम् ॥
विरोधिष्वपि मूर्खेषु दृष्ट्वा वै बोधमाद्गुणान् ।
विरोधं नाधिगच्छन्ति सज्जना शान्तचेतस ॥
बहुधा बाध्यमानोऽपि यो नर क्षमयान्वित ।
स उत्तम नर प्रादुर्विष्णो प्रियकर स्मृत ॥
अहो विविधैं बलवान्बाधते विविध जनान् ।
सत्सङ्गविहीनोऽपि बाध्यते हि दुरात्मना ॥
अहो निष्कारणं लोके बाध्यन्ते पापिनो जनान् ।
तत्रापि साधून्बाधन्ते न समानान्कथंचन ॥
अहो माया बलवती मोहयत्यखिलं जगत् ।
पुत्रमित्रकलत्रार्थं सर्वदु खे नियोक्ष्यते ॥
परद्रव्यापहरणे कलत्रं पोषितं त्वया ।
अन्ते तत्सर्वमुत्सृज्य एक एव प्रयाति हि ॥
मम माता मम पिता मम भार्या ममात्मज ।
ममेदमिति जन्तूनां ममता बाधते वृथा ॥
यावदर्जयति द्रव्यं तावदेव हि बान्धवा ।
धर्माधर्मौ सहैवास्तां धनादीना समानेने ॥
यज्ञादि तद्व्रतादय यद्य भावि न तद्वयेत् ।

(L. 3971) G₁ प्रपन्नार्तिहर प्रभो (for $^{b}$) — D₁ om. the ref. — (L. 3976) G(ed.) शुभं मे ब्रूहि पावनम् (for $^{b}$) — G₁ om. the ref. — (L. 3977) G₁ पापिनो मनुजा सर्वे (for $^{b}$) — (L. 3980) D₁ स्मरण (for सांनिध्य) — (L. 3981) D₁ ब्रह्म (for ज्योति) — (L. 3984) G₁ M₁ आयुर्वर्धनकारणम् (for $^{b}$) — (L. 3987) G(ed.) हरणे सततोद्यत (for $^{b}$) — (L. 3998) D₁ G₁ M₁ G(ed.) तोमरै (for तोरणै) — (L. 4002) G(ed.) चित्रैश्च (for साहस्रै) G₁ M₁ वृतम् (for युतम्) — (L. 4004) G(ed.) सु (for वि) G₁ बहूत्र सुनिश्चित (for $^{b}$) — (L. 4006) M₁ क्षत्रियश् (for नक्षत्र) — (L. 4009) G₁ नि स्पृहं ध्यानलोलुप (for $^{b}$) — (L. 4011) D₁ समादातुमथाविशि (for $^{b}$) — (L. 4014) M₁ G(ed.) घोरम् (for क्रूरम्) — (L. 4016) M₁ कृतापराधं लोके हि (for $^{b}$) — (L. 4020) G₁ साधु (for शान्त) — (L. 4022) D₁ M₁ विष्णो प्रियकरं नरा (for $^{b}$) — (L. 4023) D₁ G₁ विहितान् (for विविध) G₁ जनम् (for जनान्) M₁ बाधते विहितात्मना (for $^{b}$) — (L. 4025) G(ed.) नरान् (for जनान्) G₁ बाध्यन्ते विविधा जना (for $^{b}$) — (L. 4028) G₁ a सर्वदु [illegible] (for °दु खे) D₁ सर्वदु खेन बाध्यते (for $^{b}$) — (L. 4029) M₁ G(ed.) कलत्रं पोषयत्यपि (for $^{b}$) — (L. 4031) D₁ नृपात्मज (for ममात्मज) — (L. 4034) D₁ सम जने (for

वैशंपायन उवाच ।

श्रुत्वैतत्पुण्यमाख्यानं प्रसन्नवदनो नृप ।
कृष्णं भक्तप्रियं नत्वा पाहि पाहीति चाब्रवीत् ॥

युधिष्ठिर उवाच ।

शङ्खतीर्थमिति ख्यातं कावेर्या दक्षिणे तटे ।
कृष्णेन सूचितं देव तस्योत्पत्तिं वदस्व मे ॥
कावेर्याः पुण्यनद्यास्तु स्थानं यत्पुण्यवर्धनम् ।
यस्मिन्देशे ऋषिगणा देवताः सततं स्थिताः ॥
पुण्याश्रमसमायुक्तमुभयोस्तीरयोरपि ।
प्रख्यातं पापदं स्थानं तान्मे सम्प्रकीर्तय ॥
ब्रह्मक्षत्रियवैश्यानां शूद्राणां चैव योषिताम् ।
मुक्तिप्रदेति विख्याता कावेरीं तां प्रकीर्तय ॥

भीष्म उवाच ।

ब्रह्मणा हि पुरा गीतं नारदाय महात्मने ।
तेनेदं मम धर्मात्मन्कारुण्यात्कथितं खलु ॥
भूमदक्षिणकाले तु मया वै सेविता पुरा ।
सर्वपापहरा देवी कावेरी कलिनाशिनी ॥
त्वदर्थं सम्प्रवक्ष्यामि श्रुतपूर्वं मया शुभम् ।
तदर्थं तव वक्ष्यामि शृणु नान्यमना प्रभो ॥
कावेर्या दक्षिणे पार्श्वे श्रीनिवासस्य पूरुष ।
शङ्खतीर्थमिति ख्यातं तीर्थानामुत्तमं परम् ॥
पुरा सुधांशुर्धर्मात्मा चचार तप उत्तमम् ।
मधुकैटभहन्तुर्वै प्रसादात्कान्तिमाप्तवान् ॥

युधिष्ठिर उवाच ।

किमर्थं तप्यते तेन तारकाणामधिपेन वै ।
तस्मै वरं कथं दत्तं विष्णुना सर्वजिष्णुना ॥
देवव्रत महाभाग कथ्यतां मे कुतूहलम् ।
अस्ति चेन्मयि कारुण्यं तव देवव्रत प्रभो ॥

भीष्म उवाच ।

पुरा बृहस्पतेर्भार्यां हीतांशुः सौम्यरूपवान् ।
अपहृत्य चिरं कालं तया सार्धं मुमोद ह ॥
विज्ञाय चरितं त्वेतन्नार्याया वाचिन प्रभो ।
मा मेति प्रार्थयित्वा तं पश्चाच्चैव शशाप ह ॥
क्षयी भव दुराचार सर्वलोकेषु निन्दित ।
इति शप्तः क्षमस्वेति देवैः स प्रार्थितो विभुः ।
सुरलोकं विसृज्यैव प्रपेदे ब्रह्मणः सभाम् ॥
तदाप्रभृति धर्मात्मा विसृज्य च वरानना ।
अस्मिन्क्षेत्रे तपश्चक्रे बृहस्पतिभयार्दितः ॥
वर्षाणामयुतं शशश्चचार तप उत्तमम् ।
शापाच्च तपसा चैव कृशाङ्गो भाति चन्द्रमाः ।
अवशिष्टकलामात्रो देवानामग्रभुक्तदा ॥
वागीशं तुष्टुवुर्देवाः क्षम्यतां क्षम्यतां प्रभो ।
वृद्धिं ददस्व भूयस्त्वमस्माकं हितकाम्यया ॥

भीष्म उवाच ।

तथाकरोद्देवगुरुर्देवानां हितकाम्यया ।
तपसा कृपया चैव भूयो वृद्धिमवाप्तवान् ॥
तस्मिन्काले जगन्नाथमम्भोजीरकमलापतिम् ।
ददर्श सर्वलोकानां योगिध्येयमरिंदमम् ॥

चन्द्रमा उवाच ॥

नमस्ते लोकनाथाय नमस्ते धर्मरूपिणे ।
नमस्ते कमलाकान्त प्रणतार्तिप्रणाशन ॥
आद्यन्तशून्यं देवेशं सृष्टिस्थित्यन्तकारिणम् ।
वेदमूर्तिं सहस्राक्षं नौमि सर्वात्मकं हरिम् ।
अरविन्दमुदाराङ्गं पीताम्बरधरं हरिम् ।
कौस्तुभेन विराजन्तं सर्वेशं तं नमाम्यहम् ॥
पापघ्नं सर्वभक्तानां दिव्यमालाविभूषितम् ।
नीलजीमूतसंकाशं तं नतोऽस्मि रमापतिम् ॥
आकाशमध्यगं देवमनन्तमपराजितम् ।
वासुदेवं प्रपन्नोऽस्मि सर्वपापक्षयोऽस्तु मे ।
नमस्कारप्रभावेन सर्वपापक्षयोऽस्तु मे प्रभो ॥
स्तूयमानं सदा देवैर्देवैश्च ब्रह्मादिभिः ।
नतोऽस्मि त्वं हरिं सूक्ष्मं नाशं यातु च मे जरा ॥
अन्तर्यामिञ्जगत्साक्षिन्भक्तवत्सल सर्वग ।
मत्कृतपापानि सर्वाणि यान्तु नाशं नमोऽस्मि ते ॥
इति स्तुतो जगन्नाथः सर्वसिद्धनिषेवितः ।
आययौ गरुडारूढो यत्रास्ते रोहिणीपतिः ॥
ध्यायन्तं सर्वगं देवं हरिं शङ्खादिभूषितम् ।
दृष्ट्वा सर्वगतो विष्णुर्विधुमाह सविस्मयः ॥
वरं वरय भद्रं ते निशाकर सुधाकर ।
स्तोत्रेण तपसा चैव तुष्टोऽहं नितरां प्रभो ॥

31 ; G(ed.)

(L. 4099) $D_1$ $G_1$ कृष्णभक्ति (for कृष्णं भक्त) —(L. 4101) G(ed) वदाशु (for वदस्व) —(L. 4106) [illegible] ब्राह्मणक्षत्रियविशां (for °) — For lines 4106–4109, $D_1$ subst :
174** भीष्म ।
तातादहं संप्रवक्ष्यामि शृणु नान्यमना प्रभो ।
—(L. 4110) $D_1$ कावेर्या दक्षिणे कूले (for °) —(L. 4122) G(ed) काम्य- (for सौम्य ). —(L. 4127) $D_1$ शप (for शप्त्वा) —(L. 4131) $D_1$ वायुभक्षः सदा श्रीमाश्च (for °) — $D_1$ om lines 4135–4137 —(L. 4139) [illegible] अरिंदम, $G_1$ अनुत्तमम् (for अरिंदमम्) — $G_1$ $M_1$ [illegible] (for चन्द्रमाः) $D_1$ om line 4140 —(L. 4141) [illegible] नमस्ते लोकमूर्तये (for °) —(L. 4143) $M_1$ सर्वाधिग (for °त्मक) —(L. 4149) $D_1$ -क्षयं कुरु; $G_1$ क्षयात्मम; [illegible] मम (for -क्षयोऽस्तु मे) —(L. 4151) G(ed) मुनिभिः (for देवैश्च) —(L. 4153) $D_1$ $G_1$ अन्तर्यामी जगत्साक्षी (for °) $D_1$ $G_1$ $M_1$ सर्वगो ($D_1$ °गो) भक्तवत्सल°) [illegible] श्रीपते [illegible]

इत्युक्तो देवदेवेन सुधांशुस्त प्रणम्य च ।
ययाचे श्रीपतिं देव वराणामुत्तमं वरम् ॥
पाहि पाहि जगन्नाथ कान्ति मे वर्धयस्व ह ।
सौभाग्यमण्डलं देहि गुरोः शाप निवारय ॥
इत्युक्तो वै जगन्नाथ शङ्खपूतेन वारिणा ।
अभिषिच्य वर तस्मै ददौ सर्वगत प्रभु ॥
तमाह शर्वरीनाथ नमन्तं सौम्यवर्चसम् ।
परिपूर्णा कला सर्वा ह्रासवृद्ध्या भवन्तु ते ॥
शृणु सौम्य महाभाग त्वया यःसेवित स्थलम् ।
शङ्खतीर्थमिति ख्याति गमिष्यति न संशय ॥
त्वया च यत्कृत स्तोत्र पठता शृण्वतामपि ।
सर्वपापानि नश्यन्तु रोगाणि प्रलयन्ति च ॥
अस्मिन्वै मज्जनात्तीर्थे सर्वसम्पद्विवर्धनि ।
अस्नायिना मनुष्याणा दारिद्र्य भवति ध्रुवम् ॥
एवमुक्त्वा जगन्नाथ शीतांशु धर्मनन्दन ।
अदूरे तस्य पुरत श्रीनिवासस्थल गत ॥
स्थित्वा तत्र मुहूर्त तु पूजितो देवतागणै ।
स्वधाम प्रययौ श्रीमान्नारदाद्यैरभिष्टुत ॥
निशाकरोऽपि धर्मात्मा मुनिभि परिपूजित ।
तस्मादेशाद्ययौ स्वर्गं प्रपद च स्वक पदम् ॥
सर्वे ऋषिगणा विप्रास्तत्र चतुष्कल्मषा ।
यशैर्यज्ञपतिं केचिज्ज्ञानयोगविचक्षणा ।
आराध्य च चिर काल तत्पद ते प्रपेदिरे ॥
पौलस्त्यनिधन कृत्वा रामचन्द्र प्रतापवान् ।
अत्र स्नात्वा कपिगणै पुनीत स्वपुर ययौ ॥
पुरा हि भार्गवो रामो रात्रवध्यानिहत्य च ।
स्नात्वात्रैव चिर काल प्रपदे परम पदम् ॥
सुत्रामा देवराजश्च अहल्या काममोहित ।
गत्वा तु तत्फल प्राप्य स्त्रीचिह्न गौतमात्खलु ॥
तद्दोषपरिहारार्थं स्नात्वा चात्रत्रय प्रभो ।
अत्रैव प्राप्तवान्लभ्य सर्वतेजोमय शुभम् ॥
श्रीनिवासमिद क्षेत्र शङ्खतीर्थात्पुर स्थितम् ।
स्नातानां सर्वपापघ्नं भुक्तिमुक्तिफलप्रदम् ॥
कावेरीमज्जनं पुण्य दुर्लभ ह्यकृतात्मनाम् ।
पुरा सञ्चितपुण्यानामप्रयत्नेन लभ्यते ॥
पुरा लोकहितार्थाय ब्रह्मणा निर्मिता त्वियम् ।
तस्मात्स्नातव्यमत्रैव नित्यश पापभीरुभि ॥
करोमि मज्जन देव्या कावेर्यां यो वदेत्सुधी ।
वदते तस्य पापौघो नाशकालो ममेति च ॥
आकल्पजन्मभि पाप संचित यत्तै प्रभो ।
तत्सर्वं भस्मसान्माघे कावेरीमज्जनाद्भवेत् ॥
तेजोमयेषु लोकेषु भुक्त्वा भोगाननेकश ।
पश्चान्मोक्षमवाप्नोति कावेर्यां स्नाति यो नर ॥
कावेरी तु महापुण्या स्मृता पापप्रणाशिनी ।
संसेव्या सर्वदा विप्रै संसारच्छेदलिप्सुभि ॥
पापक्षयकर स्नान सृष्टिकर्ता पितामह ।
इय लोकहितार्थाय निर्ममे निपुण क्षितौ ॥
दक्षिणस्या दिशि विभु कावेरीं कलिनाशिनीम् ।
सह्यसुतरन्निभागे नश्यन्ता पापिनामघम् ।
सृष्ट्वा मुद ययौ श्रीमांस्तस्यां स्नात्वा तु नो भयम् ॥
विष्णुपादोद्भवा देवी कावेरी पापनाशिनी ।
मज्जना सर्वपापानि छिनत्त्येव न संशय ॥
चन्द्रसूर्यग्रहे चैव सक्रान्त्यायने तथा ।
सिद्धयोगे पुण्यदिने वन्द्यादित्यमरुद्गणा ॥
गन्धर्वा लोकपालाश्च यक्षविद्याधरा नृप ।
ब्राह्मी माहेश्वरी लक्ष्मी शची सप्तादितिर्दिति ॥
घृताची मेनका रम्भा सुर्वशी च तिलोत्तमा ।
अन्याश्चाप्सरसो तथा कावेर्यां स्नानतत्परा ।
माघे चैतासु तिथिषु स्नात्वा यान्ति सुरालयम् ॥
भस्मानि यत्र दृश्यन्ते कावेर्या पार्श्वयोरपि ।
सुराणां तु सदस्थान विद्धि तत्रैव भारत ॥
तप कुर्वन्ति मुनयो ह्यद्यापि मनुजेश्वर ।
स्नात्वा त्रिसारिपद्वर्गा ह्यद्य पापकर्मभि ॥
स्नातव्य यत्नतो राजन्कावेर्यां धर्ममिच्छता ।
स्नातानां तु शुभो लोको भविष्यति न संशय ॥
तस्मात्त्वमपि राजेन्द्र कावेरीस्नानमाचर ।
वाञ्छितार्थप्रदा देवी कावेरी पापनाशिनी ॥

वैशम्पायन उवाच ।

य इद पुण्यमाख्यानं नारदेन प्रभाषितम् ।
श्रुत्वा पापविनिर्मुक्तो ब्रह्मलोक स गच्छति ॥

Colophon

स्म (for ⁵) — (L. 4159) $D_2$ महाभागो (for सुधाकर) — $D_1$ om — (L. 4163) $D_1$ कान्ति मे वर्धय प्रभो (for ³) — (L. 4174) $M_1$ मज्जता (for °नात्) lines 4173-4174 — (L. 4185) — (L. 4479) $M_1$ मुनिभि पूजितस्तदा (for ³) — (L. 4186) $D_2$ $G_1$ $M_1$ मुनि , G(ed) त्वपि (for कपि) — (L. 4188) $M_1$ अहल्या-G(ed) निगृह्य (for निहत्य) — $G_1$ s om lines 4192-4194 काममोलुप (for ³) — (L. 4192) $D_1$ देवतैरपि पूजितम् (for ³) — (L. 4195) — (L. 4197) $G_1$ स्नातव्यम् $G_2$ प्रयत्नेन हि लभ्यते (for ⁴) — (L. 41⁹⁸) (for स्ना°) $D_2$ तस्मात्स्नात्य सर्वेष (for °). — (L. 4199) $G_1$ s $M_1$ G(ed.) कावेर्यां दक्षसन्निधौ (for ³) — (L. 4201) $D_1$ $M_1$ G(ed) येषन्त वरय मायावि (for °) — (L. 4208) $G_1$ स्नानतो, $G_2$ सेवतो (for मज्जनात्) — (L. 4216) G(ed) धृतिर् G(ed) सुध (for विभु°) — $G_2$ रम्भा मेना दिवि (for दितिर्) $G_1$ धृति (for दिति) — After line 4319, $D_1$ ins सुभा (for ³) — 175** स्नातव्यं राजन् राजन्कावेर्यां धर्ममिच्छता । — (L. 4223) $D_1$ ते प्रणा नाशिप्रहृता (for °) — $D_1$ om. line 4334 — (L. 4224) $G_2$ सुरम् (for धर्मम्) — (L. 4229) G(ed.) प्राप्नोति पापनिर्मुक्तो (for °)

वैशंपायन उवाच ।
शङ्खतीर्थस्य माहात्म्यं कावेर्यां स्नानवैभवम् ।
श्रुत्वा धर्मसुतः श्रीमान्गाङ्गेयं पुनरब्रवीत् ॥
युधिष्ठिर उवाच ।
श्रीनिवासमिदं क्षेत्रं गदितं भवता प्रभो ।
तस्योत्पत्तिं च माहात्म्यं विस्तरेण वद प्रभो ॥
भीष्म उवाच ।
शृणु पाण्डव वक्ष्यामि श्रोतॄणामघनाशनम् ।
सर्वसंपत्करं पुण्यमायुरारोग्यवर्धनम् ॥
पुत्रदं पुत्रकामानां मोक्षदं मोक्षकामिनाम् ।
अनन्तं श्रीनिवासस्य क्षेत्रस्य फलमव्ययम् ॥
ब्रह्मणा हि पुरा गीतं नारदाय महात्मने ।
तेन मे गदितं राजन्ब्रवीमि हि तेऽधुना ॥
तीर्थानामुत्तमं तीर्थं क्षेत्राणां च तथोत्तमम् ।
श्रीनिवासमिदं क्षेत्रं सर्वसिद्धनिषेवितम् ॥
यत्र सिद्धाश्च ऋषयस्त्रिदशैरभिपूजितम् ।
तन्मध्ये तु महात्मानस्तपः कुर्वन्ति चाधुना ॥
पुरतः पश्चिमे भागे दक्षिणाभिमुखो नृप ।
दक्षिणे चोत्तरे चैव कावेरी पूर्वगामिनी ॥
तन्मध्ये जगतां नाथः साक्षात्परमपुरुषो मतः ।
लोकमातुर्महालक्ष्म्या पुरे योगभृद्धरिः ॥
अनन्तस्तक्षकश्चैव वासुकिः शङ्खपालकः ।
भुजगेन्द्रेण तिष्ठन्ति श्रीनिवासस्य संनिधौ ॥
इन्द्रो यमः प्रचेताश्च कुबेरः शाकिनीश्वरः ।
अग्निश्च निर्ऋतिर्वायुर्दिक्पालाः समतः स्थिताः ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
सर्वदुःखोपशमनमायुर्वर्धनकारणम् ॥
पुरा हि कैटभो राजन्दैत्यानामग्रणीर्बली ।
तपश्चचार राजेन्द्र देवानां जयकाङ्क्षया ॥
स्थिरचित्तेन चिरं कालं निगृहीताखिलेन्द्रियः ।
वायुभक्षो निराहारो जितक्रोधो नृपोत्तम ॥
तलाय पिण्डमादाय भक्षयित्वा पुनः पुनः ।
अचरद्घोरमतुलं तपः परमपावनम् ।
त्रैलोक्यमपि सकलं तेनैव तपसा नृप ॥
तस्मिन्काले देवपतिर्देवैः सह युधिष्ठिर ।
तपसा भीतिमापन्नो ब्रह्मलोकमुपागमत् ॥
ब्रह्मयोनिं चिरं स्थित्वा देवैः सह पुरंदरः ।
किं भविष्यति मल्लोकमिति चिन्त्य मुहुर्मुहुः ।
पञ्चाशद्युगपर्यन्तमास्ते तत्र युधिष्ठिर ॥
उपद्रवं तु देवानां ज्ञात्वा तत्र पितामहः ।
मा भैर्देवराज त्वं वेद्मि लोकस्य कण्टकम् ॥
शमयिष्यामि तं मूर्खं वरेण त्वं क्षमस्व ह ।
इत्युक्त्वान्तर्दधे देवो देवानां हितकाम्यया ।
यत्रास्ते दैत्यमुख्यः स देवं प्राप्तवान्द्रुतम् ॥
तपश्चरन्तं धर्मात्मा नीलजीमूतसंनिभम् ।
रवौ न्यस्तदृशं दृष्ट्वा वाक्यमेतदुवाच ह ॥
भो भो दैत्यपते त्वं तु कृशोऽसि नितरां प्रभो ।
विद्धि विधातारं दैत्य वरदोऽस्मि वदस्व तत् ॥
तुष्टोऽहं तपसा तेन पश्य मां त्वत्समीपगम् ॥
इति वाक्यं तदा श्रुत्वा ब्रह्मणो लोककण्टकः ।
निरीक्ष्य तं नमस्कृत्य वाक्यमेतदुवाच ह ॥
पाहि लोकपते ब्रह्मन्पश्य मां तपसि स्थितम् ।
ज्ञात्वा तु मत्कृतं कर्म विजयं दातुमर्हसि ।
लोकानां चैव सर्वेषां तथा पातालगह्वरम् ॥
त्वां च देवपतिं ब्रह्मन्मुत्रामाणमरिंदमम् ।
ददासि यदि मे ब्रह्मन्धर्मं नाशमेव च ॥
भीष्म उवाच ।
इति तस्य वचः श्रुत्वा परमेष्ठी पितामहः ।
तथास्त्विति समामन्त्र्य तत्रैवान्तरधीयत ॥
वरेण तेन दैत्योऽपि गर्वितः पुरुषाधमः ।
इन्द्रस्य नगरं गत्वा पीडयामास देवताः ॥
प्रार्थ्यमानोऽमरेन्द्रैश्च जितः स्वर्गो भवेति च ।
पूज्यमानः सुरगणैर्यमलोकमथागमत् ॥
जित्वा स सूर्यनगरं पुनितो वरुणेन च ।
कौबेरं लोकमागत्य पूजितस्तेन समतः ॥
तत्र श्रिया समस्तोऽसौ पदेनानेन सुव्रत ।
ब्रह्मणो लोकमासाद्य राजर्षिगणसेवितम् ।
कृताञ्जलिर्नमस्कृत्य धातारमिदमब्रवीत् ॥
जिता हि लोकाः सर्वे च वैकुण्ठं तेनमुन्नदे ।
तत्र स्थितं हरिं जित्वा ततः स्वस्थो भवामि च ॥

COLOPHON — *Sub-parvan* D1 आश्चर्यपर्वणि शेषधर्मे, G1 ः G(ed.) इनधर्म। — *Adhy. name* D1 कावेरीमाहात्म्यम्, G(ed) शङ्खतीर्थमाहात्म्यम् — *Adhy. no.* D1 G1 ः 32; G(ed) 33

(L. 4237) D1 G2 उत्तमम् (for अव्ययम्) —(L. 4242) G2 भूषितम् (for ०दितम्) —(L. 4246) G(ed) तन्मध्ये तु जगन्नाथ (for ०) —(L. 4253) M1 आयुर्वर्धनमुत्तमम् (for ०) —(L. 4254) G1 G(ed) राजन्दैत्यानामग्रणीर्बली (for ०) —(L. 4255) G2 त्रैलोक्य० (for देवानां) —(L. 4259) G2 दारुणम् (for ०पावनम्) G1 G(ed) तपसा तेन पावन (for ०) —(L. 4263) G(ed.) ब्रह्माणं सुचिरं स्तुत्वा (for ०) —(L. 4268) D1 M1 शमयिष्यामि च तं मूर्खं, G2 शमयिष्यामि महाभाग (for ०) G2 G3 M1 असुर (for वरेण) —(L. 4269) G(ed) ०हितेषु (for ०काम्यया) — After line 4272, G1 ins.

176** पाहि लोकपते ब्रह्मन्पश्य मां तपसि स्थितम् ।

—(L. 4275) G1 ३ M1 तुष्टो (for तुष्टो) G(ed) तुष्टोऽहं तपसानेन (for ०) —(L. 4277) G2 आलोक्य तं नमस्कृत्वा (for ०) —(L. 4282) G2 नाथ मे (for ब्रह्मन्) G1 धर्मो नाशमेते च (for ०) —(L. 4290) D1 आगत्य, G(ed)

गमिष्ये त्वत्प्रसादेन हरिं जेतुं पितामह ।
इत्युक्त्वा प्रययौ पार्थे क्षीरोदं बलदर्पितः ॥
तत्र सर्वगतं विष्णुमदृष्ट्वा विस्मयं गतः ।
किं करोमि क्व यास्यामि क्व च पश्यामि सांप्रतम् ॥
कर्मणा फलदो विष्णुर्भूलोके स्थितिमेष्यति ।
इति निश्चित्य मनसा भूलोकं प्राप्तवान्प्रभुः ॥
तस्य बुद्धिरियं जाता मज्जाड्यस्याविदुर्मते ।
विवेकं नैव पश्यन्ति बलिनः कामुका खलु ॥
अहो हरिः सर्वगतो भूमौ संप्रति संस्थितः ।
पातालं नेतुमिच्छामि सद्वीपां वसुधाम् ॥
इति निश्चित्य मनसा सागरं समुपाविशत् ।
कल्पमात्रमभूत्तोयं तस्य दैत्यस्य धर्मज्ञ ॥
प्रसार्य हस्तं पाताले वामं दक्षिणमुत्तरे ।
चालयामास पृथिवीं कल्पान्ते दिग्गजा इव ॥
वसुधा लोकमातेयं कम्पमाना पुनः पुनः ।
सस्वारीजगतामीशं सर्वेशं भक्तवत्सलम् ॥

वसुधोवाच ।

श्रीनिवास नमस्तेऽस्तु नमो विश्वकुटुम्बिने ।
नमो विश्वपते तुभ्यं नमस्ते जलशायिने ॥
नमः क्षीराब्धिवासाय नमस्ते सूक्ष्मरूपिणे ।
नमो देवाधिदेवाय नमो विद्युत्प्रभाय च ॥
नमस्ते वसुधानाथ नमस्ते भक्तवत्सल ।
शङ्खचक्रगदापाणे नमो नन्दकधारिणे ॥
पाहि मां भयसंत्रस्तां पद्मनाभाय ते नमः ।
नमश्चैतन्यरूपाय पृथ्वीधर नमोऽस्तु ते ॥
मत्स्यवामनरूपाय कूर्मरूपाय ते नमः ।
नारसिंहाय रामाय नमो दामोदराय च ॥
कृष्णाय यादवेन्द्राय वासुदेवाय चक्रिणे ।
नमस्ते पुण्डरीकाक्ष पाहि लोकपते प्रभो ॥
इति स्तुतो जगन्नाथो धरण्या पाण्डुनन्दन ।
सांनिध्यमगमद्विष्णुरन्तर्यामी जगन्मयः ॥
मा भैषीरित्युक्तमात्रे तु विद्युन्मण्डलवत्प्रभुः ।
चक्रमादाय चिच्छेद कैटभस्य शिरस्तदा ॥

परामाश्चर्य विप्रेन्द्रा तथा सार्वभौमरिंदम ।
इदं क्षेत्रं समागत्य शोभितं प्रभुरव्ययः ॥
अत्र स्थितं हरिं ज्ञात्वा सर्वलोकधरः प्रभुः ।
अनन्तं प्रेषयामास स्वसुतं शङ्खपालकम् ॥

अनन्त उवाच ।

शृणु पुत्रक माहात्म्यं श्रीनिवासो जगन्मयः ।
कावेर्या दक्षिणे पार्श्वे कावेर्याश्च तरंगिते ॥
ऋषेरौद्दालकस्यैव ह्याश्रमं मुनिसेविते ।
सिद्धविद्याधरगणैः सेविते पुण्यपादपे ।
श्वेततित्तिरिविल्वैश्च श्वेतजम्बूकपित्थकैः ॥
एवं भूते जगन्नाथ श्रीनिवासो जगन्मयः ।
श्रिया च वसुमत्या च सेव्यमानस्तु तिष्ठति ॥
तमेव सेवमानस्तु वर्तयस्व तदन्तिके ।
अदृष्टं सर्वमनुजैः परां सिद्धिं गमिष्यसि ॥
एवं प्रबोधितस्तेन ह्यनन्तेन महामना ।
शङ्खपालो नमस्कृत्य वचनं चेदमब्रवीत् ॥
भगवन्सर्वनागेन्द्र सर्वशास्त्रविशारद ।
किमर्थं लभ्यते तेन ऋषिणा करुणात्मना ॥
तदहं श्रोतुमिच्छामि विस्तरेण महामते ।
यद्यहं सर्वनागेन्द्र कृपा मयि तवास्ति चेत् ॥
इत्युक्तः शङ्खपालेन शेषो लोकधरः प्रभुः ।
औद्दालकस्य चरितमब्रवीत्कामदं शुभम् ॥

Colophon

अनन्त उवाच ।

ऋषिरौद्दालको नाम वेदवेदाङ्गपारगः ।
शान्तो जितेन्द्रियो मौनी सदा ध्यानपरायणः ॥
अत्रैव सुचिरं कालं तपश्चक्रे महामतिः ।
चत्वारिंशद्युगं तात ह्यहोरात्रमिवाकरोत् ॥
तेनैव तपसा तुष्टो ब्रह्मा लोकपितामहः ।
यत्र तिष्ठति धर्मात्मा ऋषिरौद्दालको मुनिः ।
॥ देवमधिगम्याशु वचनं चेदमब्रवीत् ॥
औद्दालक महाभाग तुष्टोऽहं तपसा हि ते ।
वरं वरय भद्रं ते वरदोऽहं प्रजापतिः ॥

---

आगम्य ( for °स्य ) —( L 4294 ) G1 जितास्म लोकान्त्वतोऽहं ; G3 M1 जिता स्म लोकास्ताताहं ( for ° ) —( L 4298 ) G1 दृष्ट्वा विस्मयमागत , G3 अदृष्ट्वा स्थानमागत ( for ° ) —( L 4310 ) G(ed) मुहुर्मुहु ( for पुन पुन ) —( L 4318 ) G(ed) वित्रस्ता ( for °सं° ) —( L 4320 ) G3 कूर्मवाराहरूपिणे , M1 °रूप नमोऽस्तु ते ( for ° ) —( L 4331 ) D1 नमो दाशरथ नम ( for ° ) —( L 4322 ) D1 वासुदेव त्रिविक्रम ( for ° ) —( L 4325 ) G3 अन्तर्याम जगद्गुरु ( for ° ) —( L 4326 ) G(ed) मा भैषीरिति तानुक्त्वा ( for ° ) —( L 4328 ) M1 धर्मात्मा ( for विश्वात्मा ) —( L 4333 ) D1 कावेर्या चतुरान्तके , G3 पुलिने च मनोरमे ( for ° ) — G3 om line 4334 —( L 4336 ) G3 G(ed) श्वेतैश्च ( G3 केतकी ) तित्तिणीबिल्वै ( for ° ) —( L 4339 ) D1 तस्य वै सेवनार्थं तु , G3 तस्य वै शुश्रूषणरत ( for ° ) —( L 4345 ) M1 कृपा मयि नवास्ति चेत् ( for ° ) —( L 4346 ) D1 तत्सर्वं वद नागेन्द्र ( for ° ) M1 सर्वशास्त्रविशारद ( for ° ) —Before line 4347, M1 ins भीष्म

Colophon — *Sub-parvan* D1 G1 G(ed) आश्चर्यपर्वणि — *Adhy name* G(ed) कावेरीशेषधर्मो , G3 M1 शेषधर्मो — *Adhy no* D1 G1 : M1 33, G(ed) 34 माहात्म्यम् —( L 4352 ), D1 [अ]

D1 G3 M1 शेष ( for अनन्त ) —( L 4354 ) दिवोत्तम , G3 [अ]होरात्रिम् ( for °त्रम् ) —( L 4354 ) G(ed.) महान् ( for मुनि ) — Before line 4356, M1 ins D1 G1 : तुष्टो ( for तुष्टो ) D1 तत्र ब्रह्मा —( L 4356 )

ब्रह्मणोदीरितं वाक्यं श्रुत्वा मुनिवरोऽब्रवीत् ।
भगवन्देवदेवेश कृतार्थोऽस्मि त्वदागमे ।
यथा प्रीणाति मे विष्णुस्तथा कुरु महामते ॥
शृणुष्व मद्वचः पुत्र यत्र लोकेश्वरो हरिः ।
हनिष्यत्यसुरं शूरं तदा ते दर्शनं भवेत् ॥
स्थित्वात्र कतिचित्काले श्रीनिवासो जगन्मयः ।
वेदान्तैः सेव्यमानः सन्स्वं धाम समुपैष्यति ॥
राज्ञां तु दुर्विनीतानां पौलस्त्यस्य दुरात्मनः ।
कृत्वा तु निधनं तेषामत्रैव धातुमेष्यति ।
रामाख्यो भगवान्विष्णुः सत्यं सत्यं न संशयः ॥
पुरंदरमुखा देवाः स्थास्यन्त्यत्रैव नित्यशः ।
श्रीनिवासमिदं क्षेत्रं लोके ख्यातिं गमिष्यति ॥
इत्युक्त्वान्तर्दधे पार्थ देवानां प्रपितामहः ।
तदाप्रभृति धर्मिष्ठ ऋषिरौद्दालको बुधः ।
प्रसन्न इन्द्रद्युम्नस्य पद्मपादे मुदा द्विज ॥
आविर्भूय धर्मात्मा देवोऽपि जगतांपतिः ।
श्रीनिवासस्य सेवार्थं गच्छ पुत्र कुरुष्व ह ॥
द्वेषेणैव प्रयुक्तोऽसौ शङ्खपालः प्रतापवान् ।
अमुं क्षेत्रं समागत्य परिचर्यापरो मुनिः ।
विष्णोः सर्वात्मनो रानचर्यापि कुरुते मुनी ॥

युधिष्ठिर उवाच ।

पातालात्कुत्र सांनिध्यमगमच्छङ्खपालकः ।
देवव्रत महाभाग स देशो मे वदस्व ह ॥

भीष्म उवाच ।

अगस्त्ये पश्चिमे तीर्थे शङ्खाख्ये तु महाह्रदे ।
आविर्भूय द्वेषेण चोदितः शङ्खपालकः ॥
तदिदं चाभवत्क्षेत्रं क्षेत्राणामुत्तमं परम् ।
तीर्थानां चैव सर्वेषामुत्तमं तत्प्रचक्षते ॥
अगस्त्यो भगवानत्र लिङ्गभूतात्तु शंकरात् ।
तपस्तप्त्वा महातेजा अणिमादिगुणी ह्यभूत् ॥

युधिष्ठिर उवाच ।

किमर्थमत्र दृश्यन्ते नैव ते द्रुमनायक ।
एको वसति बिल्वोऽसौ श्वेतः पुण्यतरः किल ॥

भीष्म उवाच ।

कृते कपित्थकेतकया त्रिश्रेणी द्वापरे नृप ।
जम्बूः कलौ युगे विरलो युगानां तु क्रमाद्गता ॥

श्रीनिवासपुरं ज्ञेयं कावेर्या दक्षिणे तटे ।
युगत्रयात्प्रभृत्यस्य तमो वै क्षयमेष्यति ॥
दयया श्रीनिवासस्य ऋषिरौद्दालकः स्मृतः ।
स्वर्गस्थो मुनिरिन्द्र विद्धि गतानां वसतां किमु ॥
अद्यापि निर्जराः सर्वे परमस्थानकाङ्क्षया ।
वाञ्छन्ति वस्तुमत्रैव ऋषयश्च तपोधनाः ।
स्नातानां सर्वपापानि छित्वा मुक्तिं ददाति च ॥

युधिष्ठिर उवाच ।

औद्दालको मुनिश्रेष्ठ किं कार्यमकरोत्ततः ।
तस्मै वरः कथं दत्तो विष्णुना प्रभविष्णुना ।
तत्सर्वं वद तत्त्वेन देवव्रत महामते ॥

भीष्म उवाच ।

तपः कुर्वति धर्मिष्ठे श्रीनिवासो जगन्मयः ।
सांनिध्यमगमद्ब्रह्मन्धिया सार्धमरिंदम ॥
दृष्ट्वा तस्य शरीरं तु सर्वलोकेश्वरो हरिः ।
ददौ वरं समाहूय ब्राह्मणं विगतस्पृहम् ॥

श्रीभगवानुवाच ।

तुष्टोऽस्मि तव धर्मज्ञ तपो निर्वर्त्यतां द्विज ।
द्विवारं ते मम ब्रह्मन्दर्शनं तु भविष्यति ॥
मम रामस्य रामस्य ततो मल्लोकमेष्यसि ।
त्वया स्थितमिदं स्थानं धर्मवृद्धिर्भविष्यति ॥
इत्युक्त्वान्तर्दधे देवो देवानां हितकृद्धरिः ।
तस्मात्त्वमपि राजेन्द्र श्रीनिवासं भजस्व [illegible] ॥
स्नात्वा यस्ततो अर्घ्यं कावेर्यां हरिसंनिधौ ।
श्रीनिवासमिदं क्षेत्रं दुर्लभं तु कलौ युगे ।
पुरा संचितपुण्यानामप्रयत्नेन वर्धते ॥
तत्र स्नाता पापिनोऽपि पितृमातृकुलानि च ।
सहस्राणि समुद्धृत्य विष्णुलोकं प्रजन्ति हि ॥
सर्वपापक्षयकरी सर्वोपद्रवनाशिनी ।
स्मृतार्तिनाशिनी राजन्कावेरी पुण्यदायिनी ॥
दृष्टमात्रा हि कावेरी श्रीनिवासस्य संनिधौ ।
ददाति श्रीयुतं स्थानं नात्र कार्या विचारणा ॥
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
श्रीनिवासं च कावेरीं नित्यं स्मरति यो नरः ॥
स्वर्गलोकप्रदा नृणां ब्रह्मलोकप्रदा तु सा ।

(for हि ते) —(L. 4357) $M_1$ उपागन (for प्रजापति) — Before line 4359 $M_1$ ins औद्दालकि and before line 4361, $D_1$ $M_1$ ins ब्रह्मोवाच —(L. 4361) $G_1$ यथा योगेश्वरो हरिः (for [b]) —(L. 4365) G(ed) महात्मन (for दुरा°) — $D_1$ om line 4368 —(L. 4372) G(ed) °देवेन (for °देवस्य) $D_1$ $G_2$ G(ed) द्विजोत्तम (for मुदा द्विज) —(L. 4376) $D_1$ $G_2$ ऽभवत् (for मुनिः) —(L. 4379) $G_1$ कथयस्व, G(ed) म वदाथ (for मे वदस्व) —(L. 4380) $G_2$ $M_1$ °ह्रदे (for °ह्वये) —(L. 4383) $G_1$ G(ed) तीर्थानामुत्तमं चैव (for [a]) $G_1$ G(ed.) सर्वेषां (for उत्तमं) —(L. 4385) $G_2$ महाघोर (for °तेजा) $G_1$ $M_1$ गुणान्वितः ; G(ed) गुणान्वितो (for °गुणी ह्यभूत्) — $G_2$ om lines 4392–4396 —(L. 4393) $D_1$ $G_1$ $M_1$ स्थितानां (for स्मृतः) —(L. 4401) $G_2$ श्रीनिवासो महामते (for [b]) — $G_1$ om the ref —(L. 4404) $D_1$ तुष्टो (for तुष्टो) —(L. 4405) G(ed) द्वापरान्ते (for द्विवारं ते) —(L. 4406) $G_2$ ततो लोकं गमिष्यसि, $M_1$ ततो लोकमुखे (for [b]) —(L. 4407) $D_1$ धर्मवृद्ध, G(ed) पुण्यवृद्धिः (for धर्म°) —(L. 4408) $M_1$ शुभ

सूर्यलोकप्रदा देवी चन्द्रलोकप्रदा तथा ।
सूर्यचन्द्रमसोर्योगे शिवलोकप्रदायिनी ॥
स्नाताना सगमे चास्या श्रीनिवासस्य चाग्रत ।
विष्णुलोकप्रदा नृणा साक्षात्कृष्णेन भाषितम् ॥
षण्मास पुत्रकामस्तु स्नाति तत्र हि यो नर ।
कृपया वासुदेवस्य पुत्राश्च लभते ध्रुवम् ।
राज्यकामो लभेद्राज्य धनकामो लभेद्धनम् ॥
अब्दत्रय व्रत कृत्वा कावेर्या स्नाति यो नर ।
इह लोके सुख भुक्त्वा वैकुण्ठ सोऽश्नुते सुखम् ॥
एव प्रबोधितस्तेन कावेर्या स्नानवैभवम् ।
देवव्रतेन धर्मात्मा धर्मपुत्रो महामति ॥
प्रणम्य वैभव देव्या कावेर्या विविध स्थलम् ।
श्रोतुकामो महातेजा गाङ्गेय पुनरब्रवीत् ॥

युधिष्ठिर उवाच ।

पितामह नमस्तेऽस्तु पीत्वा तव वचोऽमृतम् ।
तृप्तिरद्य न मे जाता कावेर्यास्तीर्थसभवे ॥
सगमे कपिलायास्तु कावेर्याश्च महामते ।
यत्फल तु भवेन्नृणा तन्मे त्व कृपया वद ॥
चन्द्रार्कपुष्करिण्योस्तु वह्निपुष्करिणी तटे ।
कुम्भयोगे महाक्षेत्रे हेमवत्यास्तु सगमे ॥
विमेश्वरे भृगुक्षेत्रे गजारण्यस्य वैभवम् ।
तत्रैव तस्य विवर नृपाणा तत्र वर्तनम् ॥
अन्यच्चैव भवान्वेत्ति कावेर्या स्नानवैभवम् ।
कीर्तयस्व महाभाग कीर्तनादघनाशनम् ॥

सूत उवाच ।

प्रार्थितो धर्मपुत्रेण भीष्म कुरुकुलोत्तम ।
चिर ध्यात्वा नमस्कृत्य गङ्गा यदुकुलोत्तमम् ।
समब्रवीन्मधुर वाक्य धर्मसूनुमरिंदमम् ॥
परोपकारिण सन्तो धर्मार्थे स्वकलेवरे ।
वाचा किमुत सर्वेषा कुर्वन्ति प्रीणयन्ति च ॥
ये लोके भूसुरा विप्रा धर्मान्वदन्त्यभिप्सया ।
ते सर्वे पापनिर्मुक्ता प्रयान्ति ब्रह्मण पदम् ॥
रात्रौ दिनमुखे विप्रा निरुद्योगमना प्रभो ।
शृण्वन्ति सत्कथा ये ते यान्ति विष्णो पर पदम् ॥
कावेर्या कीर्तन ये तु कुर्वन्ति ह्यनिश नरा ।
ते सर्वे पापनिर्मुक्ता प्रयान्ति ब्रह्मण पदम् ॥
श्रीनिवासस्य माहात्म्य कावेर्या स्नानवैभवम् ।
शृणोति य सदा भक्त्या सर्वान्कामान्समश्नुते ॥
य इद पुण्यमाख्यान शृणोति श्रद्धया नर ।
सर्वपापविनिर्मुक्तो ब्रह्मलोक स गच्छति ॥

Colophon

वैशंपायन उवाच ।

श्रीनिवासस्य माहात्म्य श्रुत्वा प्रीतो महामति ।
धर्मराज पुन प्राह कावेरीं कीर्तयेति च ॥

भीष्म उवाच ।

अहो वक्ष्यामि माहात्म्य कावेर्या कुरुनन्दन ।
यस्य श्रवणमात्रेण सर्वपापै प्रमुच्यते ॥
चन्द्रार्कपुष्करिण्योश्च माहात्म्य प्रवदामि ते ।
पुष्करिण्योर्मर्यामध्य पापिनामघनाशनम् ॥
वह्निपुष्करिणीं गत्वा नरा पापात्मना अपि ।
प्रयान्ति विष्णुभवन परमानन्ददायकम् ॥
वह्निपुष्करिणीस्नान हंसस्यानलोकनम् ।
कुर्वन्ति ये नरा भक्त्या अहल्नार्कसमप्रभा ।
हसयुक्तेन यानेन यान्ति विष्णो पर पदम् ॥
वह्निपुष्करिणीं राम शाश्विमकुलसभव ।
अकरोद्भार्यया सार्धं लक्ष्मणेन महात्मना ॥
ब्राह्मणेभ्यो धन दत्त्वा महति सन्निधापण ।
मायव्याख्या शिला रामश्चिरस्य जजाप च ॥
देवाना चैव सर्वेषा मातर भुवनेश्वरीम् ।
आराध्य मनसा गङ्गाकावेरीं वै ननाम च ॥

(for हित ) — G2 om lines 4410–4414 — (L. 4410) G(ed) स्नानं यथाविधि जप्य ( for ° ) — (L 4412) G(ed) लभते ( for वधते ) — G2 om lines 4419–4429 M1 om. line 4422 — (L. 4423) G(ed) सहस्रमरणमात्रेण ( for ° ) D1 शिवलोकं ददाति सा ( for ° ) — (L. 4425) G(ed) विष्णुलोको भवेन्नृणा ( for ° ) — (L. 4427) D2 M1 देवदेवस्य ( for वासु° ) — (L 4428) G2 G(ed) धनलाभो ( for °कामो ) — D1 G1 2 M1 om line 4429 — After line 4430, G(ed) ins

177** इह लोके सुखं भुक्त्वा वैकुण्ठे सोऽश्नुते सुखम् ।

— Before line 4431, D1 G1 ins सूत and G(ed) वैशंपायन — — (L. 4433) G(ed) शिरसा ( for वैभवं ) G1 कावेर्याः स्नानवैभवम्, G(ed) °र्या विविधस्थलम् ( for ° ) — G1 om. the ref — (L 4438) G2 यद्भवेत्तु फलं नृणां ( for ° ) — (L 4439) D1 तन्त्र ( for वद ) — (L. 4441) G(ed) गजारण्ये च वैभवम् ( for ° ) — (L. 4445) G1 हरि ( for महा ) — (L. 4447) D1 भरिंदम, G1 अनुत्तमम् ( for अरिंद° ) — (L 4449) D2 परोक्षे ( for धर्मार्थे स्व ) — G1 M1 om (hapl ) 4452–4455 — (L. 4452) D1 निरुद्योगे महामते, G(ed) °न्त निरुद्यमा ( for ° ). — (L. 4454) D1 कुर्वन्ति ये नरा ( for ° )

Colophon — S Bparra. D1 C1 M1 अध्यायः, Ca Ch Da G(ed) शेषधर्मो G2 G(ed) °ध्यायः — A lhy name M1 G(ed) कावेरीमाहात्म्यम् — A lhy no D2 G1 2 M1 31, G(ed) 35

(L. 4460) G(ed) °मतिः ( for महामतिः ) — (L. 4461) G1 G(ed) °पुनः ( for °पुन ) — (L. 4462) D1 कावेर्याः स्नानवैभवम् ( for ° ) — (L. 4463) C1 M1 मम

आहूय सीतया सार्धं तत्र विश्रवसः सुतम् ।
अब्रवीन्मधुरं वाक्यं सर्वलोकोपकारकम् ॥
विभीषण महाभाग ब्राह्मणेभ्यो ददस्व ह ।
सौवर्णानि च रत्नानि धनानि विविधानि च ॥
रावणो निहतः संख्ये सीतार्थं सर्वराक्षसैः ।
राक्षसानां च सर्वेषां तृप्तिरद्य भविष्यति ॥
यत्त्वया सेविता देवी कावेरी पापनाशिनी ।
निवापः क्रियतामत्र युष्मत्पितृगणं प्रति ॥
अत्र कुर्वन्ति ये श्राद्धं पितॄणां मुक्तयेऽनघ ।
तेषां पुरातनास्तात प्रयान्ति हरिमन्दिरम् ॥
जपं कुर्वन्ति ये विप्रा ह्यत्र पापविवर्जिताः ।
प्रयान्ति हरिमालोक्य नारदात्तु मया श्रुतम् ॥
सह्यात्तु यत्कृतं पापमज्ञेन त्वयापि वा ।
तत्सर्वं लयमायातु ह्यगस्त्यात्तु महाप्रभो ॥
तस्मज्ञात्प्राप्यते स्वर्गो हु सह्याद्रिरयो ध्रुवम् ।
तस्मात्त्वया कृतं सह्यस्तेनैव लयमेष्यति ॥
कृतकृत्यो भवानेको राक्षसानां दुरात्मनाम् ।
तत्सद्मतोऽप्यसह्रिस्व तव जात महामते ॥
अगस्त्येन पुरा तात कावेरी पुण्यदायिनी ।
सर्वलोकहितार्थाय निर्मिता पुण्यकर्मणा ॥
वैदेहि पश्य कावेरीं गङ्गाख्यां सर्वतोमुखाम् ।
कवेरकन्यां सर्वासां नदीनां प्रवरां शुभाम् ॥
अगस्त्यपत्नीं पापघ्नीं ब्रह्मणो मानसीं सुताम् ।
स्नातव्यमत्र वै भीरु त्वया दानानि यत्नतः ॥
स्नातव्यानि च विप्रेभ्यो वासांसि विविधानि च ।
रत्नानि विप्रमुख्येभ्यो भूमिदानमनुत्तमम् ॥
भीष्म उवाच ।
राघवेन्द्रस्य तद्वाक्यं श्रुत्वा परमपावनम् ।
पौलस्त्यप्रमुखाः सर्वे स्नाताश्च कपिराक्षसाः ॥
वैदेही च महाभागा स्नात्वा दत्त्वा वसूनि च ।
कान्तिं लेभे स्वकां तत्र सर्वतेजोमयीं शुभाम् ॥
एतस्मिन्नन्तरे धीमान्मुनीनामग्रणीः प्रभुः ।
मुनीनामपि सर्वेषामगस्त्यो भगवानृषिः ।
सेव्यमानो मुनिगणैराययौ रामसंनिधिम् ॥
बोधायनस्तु भगवानापस्तम्बोऽथ गालवः ।
शातातपो मय शङ्खः कात्यायनबृहस्पती ॥
संवर्तो यमकण्वौ च गौतमः पुलहः क्रतुः ।
विश्वामित्रः स्थूलशिराः कचच्यवनभार्गवौ ॥
सत्याषाढः शतानन्दो देवलो लोमशः प्रभुः ।
व्यासः पराशरश्चैव याज्ञवल्क्यश्च भारत ॥
एवमाद्या महात्मानो मुनयः संशितव्रताः ।
राममालोकितुं जग्मुर्दर्शनान्मुक्तिदं प्रभुम् ।
अगस्त्यमग्रतः कृत्वा सर्वे वै मुनिपुंगवाः ॥
कृताशिषं राममुदीक्ष्य सर्वे
सत्यक्तकृच्छ्रं सह लक्ष्मणेन ।
निरीक्ष्य सेनां महतीं विमानं
सविस्मयं पुष्पकमाजगाम ॥
अथ रामो महातेजा गायत्र्याख्यशिलातले ।
मत्वा मुनीनां तेषामर्घ्यं पाद्यं चकार ह ॥
विनयावनतो भूत्वा रामो धर्मभृतां वरः ।
सस्मितं वचनं चेदमुवाच वदतां वरः ॥
कुशलं वो मुनिश्रेष्ठाः पुनीतो भवदागमे ।
सौमित्रिर्जानकी चाह ऋक्षवानरराक्षसाः ॥
अद्य मे सफलं जन्म जीवितं च सुजीवितम् ।
अद्य मे पापजातानि ध्वस्तानि भवदागमे ॥
इत्युक्त्वा तु मुनीन्सर्वान्पुनर्नत्वा महामतिः ।
प्राञ्जलिः सीतया सार्धमुत्तस्थे लक्ष्मणेन च ॥
गृहीतार्घ्यैर्मुनिगणैर्निषीदेत्यनुसञ्जितम् ।
अगस्त्योऽप्याह धर्मात्मा रामचन्द्रमकल्मषम् ॥
काकुत्स्थ करुणासिन्धो राम राम हितकर ।
दिष्ट्या प्राप्तोऽसि वैदेह्या लक्ष्मणेन महात्मना ॥
त्वया संरक्षितो लोको अद्य वै करुणाकर ।
निहत्य रावणं संख्ये महाबाहुं दुरासदम् ॥
ऋषीणामग्निकल्पानां रक्षितानि तपांसि ते ॥
अस्माभिर्यानि कर्माणि कृतानि सुबहूनि च ।
सफलानि भवन्त्यद्य राम त्वद्दर्शनात्प्रभो ॥

---

पापात् (for सत्रपापे) — (L. 4470) D1 हस्तयुक्तविमानेन (for °) — (L. 4471) G(ed) वह्निपुष्करिणीतानम् (for °) — (L. 4481) M1 सीतार्थे तव राघवे (for °) — G3 om line 4484 — (L. 4486) G3 नष्टा खलु पापकर्मणः (for °) — (L. 4488) G3 नात्र कार्या विचारणा (for °) — (L. 4491) C1 दुःसह्यात्के मजेत् (for °) — G1 om lines 4492–4493 D1 om. line 4494 — (L. 4500) D1 संतर्प्य चात्र वैदेहि (for °). — G1 om. lines 4503–4504 M1 om. the ref — (L. 4507) D1 G(ed.) योगिनाम् (for मुनी°). — D1 G1 M1 om line 4508 — (L. 4509) D1 M1 ऋषि (for मुनि) — (L. 4512) G1 संवर्तकश्च वत्सश्च (for °) — (L. 4514) D1 सत्याश्रुत (for °षाढ) — (L. 4516) G1 महाभागा (for °त्मानो) D1 ऋतवश्च मुनीश्वराः (for °). — (L. 4520) M1 संत्यज्य सर्वं (for °कृच्छ्रं) — (L. 4522) D1 सविस्मितं तत्पुरुषस्वरा द्विजाः; M1 °च ते नरवानरा जनाः, G(ed) °वानरास्तुरकेऽपरे श्रु° — Before line 4527, G(ed) ins. श्रीराम — (L. 4527) G1 कुलं च मे, M1 कुशलं वे (for °लं वो) — (L. 4529) G1 अद्य मे जन्मसाफल्यं (for °) — (L. 4532) D1 वचसा (for °से) — For line 4533, G1 subst.

178** गृहीतार्घ्ये मुनिगणे ऋषिः परमपावनः ।

— (L. 4533) D1 [उ]क्तमत्वरा (for [अ]नुसञ्जितम्) — Before line 4535, D1 ins. अगस्त्य: — D1 om. (hapl.) lines 4544–4545 M1 om. (hapl.) lines 4544c–4545a — After line 4547, D1 ins.:

सूर्यलोकप्रदा देवी चन्द्रलोकप्रदा तथा ।
सूर्याचन्द्रमसोर्लोकं शिवलोकप्रदायिनी ॥
स्नातानां संगमे चास्या. श्रीनिवासस्य चाग्रत· ।
विष्णुलोकप्रदा नृणां साक्षात्कृष्णेन भाषितम् ॥
षण्मासं पुत्रकामस्तु स्नाति तत्र हि यो नर ।
कृपया वासुदेवस्य पुत्रांश्च लभते ध्रुवम् ।
राज्यकामो लभेद्राज्यं धनकामो लभेद्धनम् ॥
अब्दत्रयं व्रतं कृत्वा कावेर्यां स्नाति यो नर ।
इह लोके सुखं भुक्त्वा वैकुण्ठे सोऽश्नुते सुखम् ॥
एवं प्रबोधितस्तेन कावेर्यां स्नानवैभवम् ।
देवव्रतेन धर्मात्मा धर्मपुत्रो महामति. ॥
प्रणम्य वैभवं देव्या कावेर्या विविधं स्वकम् ।
श्रोतुकामो महातेजा गाङ्गेयं पुनरब्रवीत् ॥

युधिष्ठिर उवाच ।

पितामह नमस्तेऽस्तु पीत्वा तव वचोऽमृतम् ।
तृप्तिरद्य न मे जाता कावेर्यास्तीर्थसंभवे ॥
संगमे कपिलायास्तु कावेर्याश्च महामते ।
यत्फलं तु भवेन्नृणां तन्मे त्वं कृपया वद ॥
चन्द्रार्कपुष्करिण्योस्तु वह्निपुष्करिणी तटे ।
कुम्भयोणे महाक्षेत्रे हेमवत्यास्तु संगमे ॥
विश्वेश्वरे भृगुक्षेत्रे गजारण्यस्य वैभवम् ।
तत्रेदं तस्य विवरं ऋषीणां तत्र वर्तनम् ॥
अन्यच्चैव भवान्वेत्ति कावेर्या स्नानवैभवम् ।
कीर्तयस्व महाभाग कीर्तनादघनाशनम् ॥

सूत उवाच ।

प्रार्थितो धर्मपुत्रेण भीष्म कुरुकुलोत्तम. ।
चिरं ध्यात्वा नमस्कृत्य गदा यदुकुलोत्तमम् ।
अब्रवीन्मधुरं वाक्यं धर्मसूनुमरिंदमम् ॥
परोपकारिण सन्तो धर्मार्थं त्यक्तदेहा ।
वाचा किमुत सर्वेषां कुर्वन्ति प्रीणयन्ति च ॥
ये लोके भूसुरा विप्रा धर्मान्वदन्त्यभिप्सया ।
ते सर्वे पापनिर्मुक्ता प्रयान्ति ब्रह्मण पदम् ॥
रात्रौ दिनमुखे विप्रा निरस्तोपमना प्रभो ।
शृण्वन्ति मत्कथा ये ते यान्ति विष्णो परं पदम् ॥
कावेर्या कीर्तनं ये तु कुर्वन्ति ह्यनिश नरा ।
ते सर्वे पापनिर्मुक्ता प्रयान्ति ब्रह्मण पदम् ॥
श्रीनिवासस्य माहात्म्यं कावेर्या स्नानवैभवम् ।
शृणोति य सदा भक्त्या सर्वान्कामान्समश्नुते ॥
य इद पुण्यमाख्यानं शृणोति श्रद्धया नर. ।
सर्वपापविनिर्मुक्तो ब्रह्मलोकं स गच्छति ॥

Colophon.

वैशंपायन उवाच ।

श्रीनिवासस्य माहात्म्यं श्रुत्वा प्रीतो महामति ।
धर्मराजः पुन प्राह कावेरीं कीर्तयेति च ॥

भीष्म उवाच ।

अहो वक्ष्यामि माहात्म्यं कावेर्या कुरुनन्दन ।
यस्य श्रवणमात्रेण सर्वपापै प्रमुच्यते ॥
चन्द्रार्कपुष्करिण्योश्च माहात्म्य प्रवदामि ते ।
पुष्करिण्योस्तयोर्मध्यं पाविनामघनाशनम् ॥
वह्निपुष्करिणीं गत्वा नरा पापाहता अपि ।
प्रयान्ति विष्णुभवनं परमानन्ददायकम् ॥
वह्निपुष्करिणीस्नानं ईश्वरस्यावलोकनम् ।
कुर्वन्ति ये नरा भक्त्या उद्यन्नार्कसमप्रभाः ।
हंसयुक्तेन यानेन यान्ति विष्णो परं पदम् ॥
वह्निपुष्करिणी राम आदित्यकुलसंभव. ।
अकरोत्स्नानमार्याया सार्धं लक्ष्मणेन महात्मना ॥
ब्राह्मणेभ्यो धनं दत्त्वा सहरिः सविभीषण' ।
गायत्र्याख्यां शिला राक्षसधिरस्य जजाप च ॥
देवानां चैव सर्वेषां मातर भुवनेश्वरीम् ।
आराध्य मनसा राजन्कावेरीं वै ननाम च ॥

---

( for हित- ). — G₂ om. lines 4410–4414 —( L. 4410 ) G(ed) G(ed.) स्नानं सयत्नपो जप्य ( for ° ). —( L. 4412 ) G(ed) लभ्यते ( for वर्धते ) — G₂ om lines 4419–4429 M₁ om तत्स्मरणमात्रेण ( for ° ). line 4422 — ( L. 4423 ) G(ed ) तत्स्मरणमात्रेण ( for ° ). — ( L. 4425 ) G(ed ) विष्णु- D₁ शिवलोकं ददाति सा ( for ⁴ ) —( L. 4425 ) G(ed ) विष्णु- लोको भवेन्नृणा ( for ° ) —( L. 4427 ) D₁ M₁ देवदेवस्य ( for वासु° ) —( L 4428 ) G₁ G(ed ) धनलाभो ( for °कामो ) — D₁ G₁ ₂ M₁ om line 4429. — After line 4430, G(ed ) ins. '

177** इह लोके सुखं भुक्त्वा वैकुण्ठे सोऽश्नुते सुखम् ।

— Before line 4431, D₁ G₁ ins सूत. and G(ed ) वैशं- पायन . — —( L. 4433 ) G(ed ) शिरसा ( for देव्या ). G₂ कावेर्या स्नानवैभवम् ; G(ed ) °र्यां विविधस्वनम् ( for ⁴ ). — G₂ om. the ref —( L. 4438 ) G₂ यत्फलं तु फलं मुना ( for ° ). —( L 4439 ) D₁ चन्द्र· ( for वह्नि ). —( L. 4441 ) G(ed ) गजारण्ये च वैभवम् ( for ⁴ ). — ( L. 4446 ) G₁ हरिं ( for गदा ). — ( L. 4447 ) D₁ भारिदम' ; G₁ अनुत्तमम् ( for अरिंद° ) — ( L. 4448 ) D₁ धनैर्थैः ( for धर्मार्थं त्य- ) — G₁ M₁ om ( hapl ) 4452–4455. — ( L. 4452 ) D₁ निरुद्योगे महात्मनु , G(ed ) °ण निरोधेन्द्रिया ( for ⁴ ). —( L. 4454 ) D₁ कुर्वन्तोऽहर्निश नरा ( for ⁵ )

COLOPHON — *Sub-parvan*. D₁ G₁ M₁ आनुशासनिक· शेषधर्म· ; G₂ G(ed ) दानधर्म· — *Adhy name* M₁ G(ed ) कावेरीमाहात्म्यम् — *Adhy no* · D₁ G₁ ₂ M₁ 34. G(ed) 35.

( L. 4460 ) G(ed ) महीपति ( for महामति ) —( L. 4461 ) G₁ G(ed ) धर्मपुत्र ( for °राज ) —( L. 4462 ) D₁ कावेर्या स्नानवैभवम् ( for ⁴ ) —( L. 4463 ) G₁ M₁ सर्व-

आहूय सीतया सार्धं तत्र विश्रवसः सुतम् ।
अब्रवीन्मधुरं वाक्यं सर्वलोकोपकारकम् ॥
विभीषण महाभाग ब्राह्मणेभ्यो ददस्व ह ।
सौवर्णानि च रत्नानि धनानि विविधानि च ॥
रावणो निहतः सङ्ख्ये सीतार्थे सर्वराक्षसैः ।
राक्षसानां सर्वेषां तृप्तिरत्र भविष्यति ॥
यस्त्वया सेविता देवी कावेरी पापनाशिनी ।
निवापः क्रियतामत्र युष्मत्पितृगणं प्रति ॥
अत्र कुर्वन्ति ये श्राद्धं पितॄणां मुक्तयेऽनघ ।
तेषां पुरातनास्तात प्रयान्ति हरिमन्दिरम् ॥
जपं कुर्वन्ति ये विप्रा अत्र पापविवर्जिताः ।
प्रयान्ति हरिसालोक्यं नारदात्तु मया श्रुतम् ॥
सत्रात्तु यत्कृतं पापमप्रज्ञेन त्वयापि वा ।
तत्सर्वं लयमायातु ह्यगस्त्यात्तु महाप्रभो ॥
सत्स्नात्वाप्स्यते स्वर्गं तु मज्जास्थिरो ध्रुवम् ।
तस्मात्त्वया कृतं सत्रस्तेनैव लयमेष्यति ॥
कृतकृत्यो भवानेको राक्षसानां दुरात्मनाम् ।
सत्कृतोऽप्यसन्निव तव जात महामते ॥
अगस्त्येन पुरा तात कावेरी पुण्यदायिनी ।
सर्वलोकहितार्थाय निर्मिता पुण्यकर्मणा ॥
वैदेहि पश्य कावेरीं गङ्गाख्यां सर्वतोमुखाम् ।
कवेरकन्या सवासा नदीनां प्रवरा शुभाम् ॥
अगस्त्यपत्नीं पापघ्नीं ब्रह्मणो मानसीं सुताम् ।
स्नातव्यमत्र वै भीरु त्वया दानानि यत्नतः ॥
दातव्यानि च विप्रेभ्यो वासांसि विविधानि च ।
रत्नानि विप्रमुख्येभ्यो भूमिदानमनुत्तमम् ॥
भीष्म उवाच ।
राघवेन्द्रस्य तद्वाक्यं श्रुत्वा परमपावनम् ।
पौलस्त्यप्रमुखाः सर्वे स्नाताश्च कपिराक्षसाः ॥
वैदेही च महाभागा स्नात्वा दत्वा वसूनि च ।
कान्तिं लेभे स्वकां तत्र सर्वतेजोमयीं शुभाम् ॥
एतस्मिन्नन्तरे धीमान्मुनीनामग्रणीः प्रभुः ।
मुनीनामपि सर्वेषामगस्त्यो भगवानृषिः ।
सेव्यमानो मुनिगणैराययौ रामसंनिधिम् ॥
बोधायनस्तु भगवानात्मख्योऽथ गालवः ।
शातातपो मय शङ्खः कात्यायनबृहस्पती ॥
संवर्तो यमकण्वौ च गौतमः पुलहः क्रतुः ।
विश्वामित्रः स्थूलशिराः कचश्च्यवनभार्गवौ ॥
सत्यापाढः शतानन्दो देवलो लोमशः प्रभुः ।
व्यासः पराशरश्चैव याज्ञवल्क्यश्च भारत ॥
एवमाद्या महात्मानो मुनयः संशितव्रताः ।
राममालोकितुं जग्मुर्दर्शनान्मुक्तिदं प्रभुम् ।
अगस्त्यमग्रतः कृत्वा सर्वे वै मुनिपुंगवाः ॥
कृताशिषं राममुदीक्ष्य सर्वे
सत्यचक्रूचुः सह लक्ष्मणेन ।
निरीक्ष्य तेषां महतीं विमान
सविस्मयं पुष्पकमाजगाम ॥
अथ रामो महातेजा गायत्र्याख्यशिलातले ।
नत्वा मुनीनां सर्वेषामर्घ्यं पाद्यं चकार ह ॥
विनयावनतो भूत्वा रामो धर्मभृतां वरः ।
सस्मितं वचनं चेदमुवाच वदतां वरः ॥
कुशलं वो मुनिश्रेष्ठाः पुनीतो भवदागमे ।
सौमित्रिर्जानकी चाहं प्लवगामरराक्षसाः ॥
अद्य मे सफलं जन्म जीवितं च सुजीवितम् ।
अद्य मे पापजालानि ध्वस्तानि भवदागमे ॥
इत्युक्त्वा तु मुनीन्सर्वान्प्रणतेऽत्र महामतिः ।
प्राञ्जलिः सीतया सार्धमुत्तस्थे लक्ष्मणेन च ॥
गृहीतार्घ्यैर्मुनिगणैर्निषीदेत्यनुसंज्ञितम् ।
अगस्त्योऽप्याह धर्मात्मा रामचन्द्रमकल्मषम् ॥
काकुत्स्थ करुणासिन्धो राम राम हितकर ।
दिष्ट्या प्राप्तोऽसि वैदेह्या लक्ष्मणेन महात्मना ॥
त्वया संरक्षितो लोको अद्य वै करुणाकर ।
निहत्य रावणं सङ्ख्ये महाशत्रुं दुरासदम् ॥
ऋषीणामभिकल्पानां रक्षितानि तपांसि ते ॥
अस्माभिर्यानि कर्माणि कृतानि सुबहूनि च ।
सफलानि भवन्त्यद्य राम त्वद्दर्शनात्प्रभो ॥

---

पापात् ( for सत्रपापे ) — ( L 4470 ) $D_1$ हसदुष्कविभावेन ( for ° ) — ( L 4471 ) G(ed) वहिपुष्करिणीस्नानम् ( for ° ) — ( L 4481 ) $M_1$ सीतार्थे तव राक्षसे ( for ° ) — $G_3$ om line 4484 — ( L 4486 ) $G_2$ नष्टा स्युः पापकर्मण ( for ° ) — ( L 4488 ) $G_3$ नात्र कार्या विचारणा ( for ° ) — ( L 4491 ) $G_2$ तु सद्यान्तरके मजेत् ( for ° ) — $G_3$ om lines 4492 4498 $D_1$ om line 4494 — ( L 4500 ) $D_1$ सतर्पं चात्र वैदेहि ( for ° ) — $G_2$ om lines 4502 4504 $M_1$ om. the ref — ( L 4507 ) $D_1$ G(ed) योगिनाम् ( for मुनी° ). — $D_1$ $G_1$ $M_1$ om line 4508 — ( L 4509 ) $D_1$ $M_1$ ऋषि ( for मुनि ) — ( L 4512 ) $G_2$ सवर्तेकश्च कण्वश्च ( for ° ) — ( L 4514 ) $D_1$ सत्यायुष ( for °षाढ° ) — ( L 4516 ) $G_2$ महाभागा ( for °त्मानो ) $D_1$ ऋषयश्च मुनीश्वरा ( for ° ). — ( L 4520 ) $M_1$ संलक्ष्य सर्वं ( for °चक्रूचुः ) — ( L 4522 ) $D_1$ सविस्मयं तस्थुरकल्मषा द्विजाः ) $M_1$ °य ते गगने मया जना G(ed) °वास्तारस्तुरकल्मषा द्विजाः — Before line 4527 G(ed) ins श्रीराम — ( L 4527 ) $G_1$ कुलं च मे $M_1$ कुशलं वे ( for °लं वो ). — ( L 4529 ) $G_2$ अद्य मे जन्मसाफल्यं ( for ° ) — ( L 4532 ) $D_1$ वत्सलो ( for °स्थे ) — *For line 4533 $G_2$ subst.*

178** गृहीतार्घ्ये मुनिगणे कपि परमपावन ।

— ( L 4533 ) $D_1$ [उ]क्तमञ्जसा ( for [अ]नुसंज्ञितम् — Before line 4535, $D_1$ ins अगस्त्य — $D_1$ om ( hapl ) lines 4544 4545 $M_1$ om ( hapl ) lines 4544° 4545° — After line 4547, $D_1$ ins

संसारपाशविच्छेदी स त्वया पूजितो हरिः ॥
एते वयं मुनिश्रेष्ठ द्रष्टुकामा जनार्दनम् ।
तन्निवेशितचित्ता हि प्राप्ताः परमधार्मिकाः ॥
ईदृशं वचनं श्रुत्वा व्यासस्य जगतीपते ।
प्रोवाच नारदो धीमान्वाग्मी वेदविदां वरः ॥
कृतकृत्योऽस्मि भद्रं वो यूयं भूतहिते रताः ।
शाश्वैर्धर्मैः सदा लोकान्भक्त्या रक्षितुमिच्छथ ॥
वैकुण्ठलोके संभूता वार्ता परमपावना ।
श्राविता सा मया सन्तो वक्ष्ये शृण्वन्तु तां शुभाम् ॥
मायावी परमानन्दस्त्यक्त्वा वैकुण्ठमुत्तमम् ।
स्वामिपुष्करिणीतीरे रमया सह मोदते ॥
इत्यब्रुवमिदं वाक्यं श्रुत्वा सेन्द्रा मरुद्गणाः ।
तत्र सेवितुमुद्युक्ता गन्ताऽहं च जगद्गुरुम् ॥
किं करिष्यथ विप्रेन्द्रा दर्शनं ह्यत्र दुर्लभम् ।
तस्मात्तत्र गमिष्यामि इत्युक्त्वा खं समारुहत् ॥
अगस्त्यप्रमुखाः सर्वे ऋषयश्च तपोधनाः ।
जग्मुस्ते व्योममार्गेण यत्र धर्मगिरौ हरिः ॥
स्वामिपुष्करिणीतीरं गत्वा ते ऋषयः सुराः ।
स्नात्वा पीत्वा शुभं तोयं हरिं द्रष्टुं विचेरतुः ॥
पश्चिमं भागमासाद्य मुनयो विष्णुतत्पराः ।
तत्रापश्यन्महाभूतं मेरुमन्दरसंनिभम् ॥
सहस्रादित्यसंकाशं विद्युच्चञ्चललोचनम् ।
सर्वायुधधरं देवं दृष्ट्वा विस्मयमागताः ॥
दक्षिणां दिशमाजग्मुः स्वामिपुष्करिणीतटात् ।
तत्रासुरान्दानवादीन्राक्षसान्पिशिताशनान् ॥
ध्यायन्तश्च जपन्तश्च नमस्यन्तश्च तान्बहून् ।
दृष्ट्वा विस्मयमापन्नाः पूर्वां दिशमुपाययुः ॥
तत्रासीनं देवपतिं त्रिदशैरुपसेवितम् ।
यक्षकिंनरकिंपुरुषचारणाद्यैरभिष्टुतम् ॥
सिद्धगन्धर्वदेवाद्यैर्ऋषिभिश्चाप्सरोगणैः ।
स्तूयमानं हरिं साक्षाच्छ्रीनिवासं जगद्गुरुम् ॥
कदा द्रक्ष्यामि तद्रूपं योगिनामपि दुर्लभम् ।
कदा मे जन्मसाफल्यं भविष्यति सुरार्चितम् ॥
देहि मे दर्शनं देव प्रणतार्तिप्रणाशन ।
त्वं गतिः सर्वभूतानां देवानामपि मोक्षदः ।
पाहि पाहि जगन्नाथ भूयो भूयो नमोऽस्तु ते ॥
इति स्तुवन्तं देवेशं देवराजं पुरंदरम् ।
वेङ्कटाद्रेः पुरोभागे स्वामिपुष्करिणीतटे ।
देवताभिः समासीनं ध्यायन्तं पुरुषोत्तमम् ॥
तं दृष्ट्वा विस्मिताः सर्वे ह्यगस्त्यप्रमुखा द्विजाः ।
कौबेरीं दिशमाजग्मुर्द्रष्टुकामा जनार्दनम् ॥
तत्रापश्यन्द्विजवरान्सप्तद्वीपनिवासिनः ।
राज्ञो मुनिगणांश्चैव भूसुरान्वेदवादिनः ॥
भूलोकवासिनश्चैव मनुजान्मनुजेश्वर ।
मुदमापुर्महात्मानो मुनयः शुद्धबुद्धयः ॥
स्तुवन्ति गृण्वन्ति नमन्ति केचि-
दानन्दजाश्रूणि सृजन्ति केचित् ।
आक्रुश्य चाक्रुश्य वदन्ति केचि-
द्धरे मुरारे पुरुषोत्तमेति ।
लुण्ठन्ति केचित्परिरम्भयन्ति
तूष्णीं तु तिष्ठन्ति हसन्ति केचित् ॥
ध्यायन्ति केचित्कलशान्वहन्ति
पूर्णान्मुरारेरभिषेकहेतोः ।
पुष्पाणि सौरभ्ययुतानि गन्धं
कर्पूरकस्तूरिसमं वहन्ति ॥
आराय सर्वे वृषभाद्रिनाथं
न मार्गमाणा विचरन्ति तत्र ॥
एवं स्तुवत्सु देवेषु ऋषिगन्धर्वकोटिषु ।
पुष्पवृष्टिः पपाताशु पर्वतोपरि सर्वतः ॥
भेरीमृदङ्गपटहैर्निःसाणाद्यैश्च डिण्डिमैः ।
शङ्खकाहलसंनादैः संकुलं समजायत ॥
तस्मिन्नवसरे विष्णुः प्रादुरासीत्सरित्तटे ।
मेरुमन्दरसंकाशैर्जाम्बूनदपरिष्कृतैः ।
नानारत्नचितैर्दिव्यैर्विमानैरुपशोभितः ॥
कोटिसूर्यप्रतीकाशश्चन्द्रकोटिसुशीतलः ।
स्वर्लोकाद्भूमिपर्यन्तं प्रादुरासीद्धियः पतिः ॥

°बुद्धे ) — ( L. 6213 ) G(ed) देवेशो ( for लोकेशो ) — ( L. 6221 ) $G_3$ बाधा ( for व्यासो ) — Before line 6222, $D_1$ ins व्यास — $G_3$ om lines 6227 6228. — ( L. 6227 ) $M_1$ सेवितो ( for पूजितो ) — ( L. 6240 ) G(ed) [अ]ब्रुवन् सर्वे ( for °वमिदं ) — ( L. 6241 ) $G_6$ तत्र सार्धं समुद्युक्ता ( for ° ) — ( L. 6242 ) $D_1$ $G_1$ $M_1$ ह्यत्र दर्शनदुर्लभः, G(ed) ह्यत्र दुर्लभदर्शना ( for ° ) — ( L. 6251 ) $D_1$ $G_3$ अदृष्ट्वा ( $G_3$ दृष्ट्वा त ) विस्मयं गता ( for ° ) — For line 6254 G(ed) subst

224** नमस्यतो ध्यायतश्च जपतश्चापि तान्बहून् ॥

— ( L. 6257 ) Hypermetric G(ed) -गन्धर्व ( for किंपुरुष ) — ( L. 6258 ) G(ed.) सिद्धकिंपुरुषाद्यैश्च ( for ° ) — ( L. 6259 ) G(ed) जगत्पतिम् ( for जगद्गुरुम् ) — ( L. 6263 ) G(ed) मोक्षद ( for °दः ) — ( L. 6271 ) $M_1$ -चारणान् ( for -वादिनः ) — ( L. 6273 ) $G_1$ मुनयः शुभदर्शनाः ( for ° ). — ( L. 6276 ) $G_1$ उत्पुत्य चोत्पुत्य ( for आक्रुश्य चाक्रुश्य ) G(ed.) नदन्ति ( for व° ) — After line 6276, G(ed) ins :

225** गायन्ति गीतं परितो महान्तः

— After the above, G(ed) reads lines 6303 6322. — ( L. 6282 ) $G_1$ युतानि ( for -युतानि ) G(ed.) गन्धान् ( for गन्धं ) — After line 6285 $G_1$ G(ed.) ins

226** देवा मनुष्या अपि योगिनश्च

$G_1$ cont

227** गायन्ति गीताः महतो महात्मनः ॥

अश्वमेधसहस्रं त्वं कुरु चित्तविशुद्धये ।
अन्यथा निर्मला बुद्धिर्न भविष्यति पद्मज ॥
एतच्छ्रुत्वा चिन्तयानो ब्रह्मा लोकपितामहः ।
न शक्यं कर्तुमेकोऽपि कथमेतदिहाब्रवीत् ॥
पुनश्चोवाच सा वाणी धातारं व्याकुलेन्द्रियम् ।
मेघगम्भीरया वाचा शृणुष्वेति पितामह ॥
गङ्गाया दक्षिणे भागे योजनानां शतद्वये ।
पञ्चयोजनमात्रेण पूर्वाम्भोधेस्तु पश्चिमे ॥
वेगवत्युत्तरे तीरे पुण्यकोट्यां हरिः स्वयम् ।
वरदः सर्वभूतानामद्यापि परिदृश्यते ॥
कर्तव्यस्तत्र वै यज्ञस्त्वया चित्तविशुद्धये ।
सहस्राणां फलं तेऽस्तु ह्येकेन स्थानवैभवात् ॥
श्रुत्वा तत्प्रीतिसंयुक्तो धाता देवगणैः सह ।
गन्तुं मनो दधे ब्रह्मा यज्ञं कर्तुं च सुव्रत ॥
दिक्पालैर्देवगन्धर्वैर्वसुरुद्रादिभिः सह ।
हयमेधं महायज्ञमकरोदृषिभिः सह ॥
हवींषि भुञ्जमानानां पश्यतां मरुतां प्रभुः ।
प्रादुरासीन्महावेद्यामुत्तरस्यां महाद्युतिः ॥
शङ्खचक्रधरः श्रीमान्नीलजीमूतसंनिभः ।
वेदैरुपनिषद्भिश्च मूर्तिमद्भिः प्रसेवितः ॥
इन्द्रादिलोकपालैश्च ब्रह्मादिभिरनेकशः ।
यक्षविद्याधरगणैः किंनरैश्चारणैरपि ॥
नदीनदसहस्रैश्च गङ्गाद्यैरुपसेवितः ।
सप्तसागरपृथ्वीशैः सप्तद्वीपनिवासिभिः ॥
ऋषिदेवगणैर्देवः प्रादुरासीन्महाद्युतिः ।
पीताम्बरधरः श्रीमान्विष्णुः पद्मदलेक्षणः ॥
कौस्तुभेन विराजन्तं श्रीवत्साङ्कितवक्षसम् ।
नत्वा पुनः पुनर्ब्रह्मा लोककर्ता जगन्मयः ।
अस्तौषीत्कमलाकान्तमपवर्गफलप्रदम् ॥

ब्रह्मोवाच ।

श्रीपते पुण्डरीकाक्ष सर्वलोकहितंकर ।
पाहि मां कमलाकान्त त्वत्पादकमलं गतम् ॥
वरदं सर्वभूतानामीश्वरं पुरुषोत्तमम् ।
नमामि पुण्डरीकाक्षं गरुडासनमव्ययम् ॥
पीताम्बरधरं देवं वनमालाविभूषितम् ।
चतुर्बाहुमुदाराङ्गं नमामि कमलापतिम् ॥
येनेदं भुवनं व्याप्तं देवतिर्यङ्नरादिकम् ।
तं वासुदेवममलं प्रणतोऽस्मि जनार्दनम् ॥
नित्यानन्दाय शुद्धाय शूरायानाथपालिने ।
सर्वज्ञाय नमस्तुभ्यं सर्वभूतान्तरात्मने ॥
यज्ञभोक्त्रे नमस्तुभ्यं यज्ञकर्त्रे सुरोत्तम ।
हविर्मन्त्रस्वरूपाय यजमानस्वरूपिणे ॥
देवतिर्यङ्मनुष्याणां जनयित्रे नमोऽस्तु ते ।
पाहि मां देवदेवेश भूयो भूयो नमोऽस्तु ते ॥

भीष्म उवाच ।

इति स्तुवन्तं देवेशं पद्मयोनिमरिंदमम् ।
प्रसन्नवदनो विष्णुर्ब्रह्माणं प्रत्युवाच ह ॥
प्रीतिमानस्मि भद्रं ते स्तोत्रेणानेन पुत्रक ।
हयमेधेन महता भक्त्या विधानतश्च ह ।
त्रिकालमर्चय त्वं मां कृते ह्यस्मिन्युगोत्तमे ॥
त्रेतायां तु गजेन्द्रेण प्रार्थितो मुक्तिकामिना ।
कृतकृत्येन विदुषा भक्तेन तु महात्मना ॥
द्वापरे देवगुरुणा मुनिशापाच्च भीरुणा ।
भक्त्या परमया चैव पूजितो द्वापरं चिरम् ॥
वर्तयिष्ये मुनिगणैः सेन्द्रैः सुरगणैर्वृतः ।
यक्षकिंनरसंघैश्च गन्धर्वैश्चाप्सरोगणैः ॥
कलौ तु पूजितः पुत्राद्यैः शेषेण पूजितः ।
मनुजैः पूजनादिभिश्च भूसुरैश्च विशेषतः ।
क्षीराब्धौ पूजितो नित्यं वत्स्यामि कमलासन ॥
इत्युक्त्वा देवदेवोऽसौ तत्रैवान्तरधीयत ।
विस्मयं परमं जग्मुर्देवाः सर्वे दिवि स्थिताः ॥
हयमेधेन विधिना ब्रह्मा लोकपितामहः ।
इष्ट्वा विष्णुक्रमार्गेण ब्राह्मणान्पर्यपूजयत् ॥
अन्नदक्षिणवस्त्राद्यैर्भूमिक्षेत्रगृहादिभिः ।
देवानृषिगणांश्चैव पूजयामास भूसुरान् ॥
तस्मिन्नवसरे देवाश्चक्रुश्च विविधान्मखान् ।
वाजपेयादिभिर्यज्ञैरिष्टकाचयनादिभिः ॥
ऋषयो मनवश्चैव लोकपालाः कुरूद्वह ।

---

—(L. 6342) G(ed) आस्ते चिन्ताकुलेन्द्रियः (for ^a) —(L. 6348) G1 न शक्यं वक्तुमेकोऽपि (for ^a) G(ed.) सहसं कथम् अब्रवीत् (for ^b) —(L. 6352) M1 एक (for पञ्च) —(L. 6357) D1 G1 श्रुत्वा प्रीतिसमायुक्तो (for ^a) G(ed) स देवर्षि (for धाता देव) — After line 6358 G(ed) ins

230** ततः काञ्चीं समासाद्य वाटिकायां तु तत्र वै ।

—(L. 6367) D1 M1 नदीनां शतसाहस्रैर् (for ^a), G1 M1 सेवितम् (for °त), —(L. 6369) G1 देवे (for देव). — G1 om. lines 6378 6380 — After line 6379, G1 ins

231** आनन्दं परमं व्याप्तमवतीर्य नरादिकम् ।

—G1 om line 6380 —(L. 6381) G(ed.) अतुलं (for अमलं) —(L. 6383) G1 M1 सर्वभूतान्तरायिने, G1 °तनिवासिने (for ^b) — G1 om the ref. —(L. 6390) G1 सुमन, G1 पद्मज (for पुत्रक) —(L. 6391) D1 मरुतो (for महता) —(L. 6392) G1 कृपयो ह्यस्मिन्नगोत्तमे (for ^b) —(L. 6397) D1 मुनिवरैर् (for °गणैर्) D1 G1 M1 ?के सेन्द्रैर् (G1 सोमम) ?? (for ^b) — D1 om (hapl) lines 6398–6399 M1 om line 6398 —(L. 6399) G1 M1 पूजितः पूजनाद्यैः (for ^a) G1 कल्पो (for द्वन्द्वे) —(L. 6404) G(ed.) यज्ञेन (for विधिना) —(L. 6405) M1 ब्राह्मणान्परिपूजयन् (for ^b) G(ed.) —(L. 6406) G(ed) दक्षिणाभस्त्राद्यैर् (for ^a) G(ed.)

मया च करणीयं किमिति तान्प्रत्युवाच ॥
देवा ऊचुः ।
योगमूर्तिं विसृज्यैव दिव्यभोगसमन्वितः ।
अस्मान्वै पातुमिच्छामो ह्यनिशं परमेश्वर ॥
भगवानुवाच ।
सिंहाद्रिरिति विख्यातः पुरस्तात्पर्वतोत्तमः ।
तत्र चरिष्यामि जगतां हिताय त्रिदशेश्वराः ॥
ऋषिविप्रगणैः सार्धं युष्माभिः सह पुत्रकाः ।
अत्राश्चर्यसमायुक्तो वर्ते तत्र महागिरौ ॥
अत्र योगेश्वरो नित्यं तत्र भोगसमन्वितः ।
पालयिष्ये तथा लोकांस्त्रिदशाननुजानपि ।
भवन्तस्तत्र गच्छन्तु सदा भोगेप्सवोऽमलाः ॥
इत्युक्ता हरिणा देवा विमानशतशोभितम् ।
सिंहाद्रिं प्रययुः शीघ्रं बहुजन्तुनिषेवितम् ॥
तत्र स्थित्वा जगन्नाथं चिरं देवं जनार्दनम् ।
नापश्यंस्त्रिदशाः सर्वे योगिध्येयमरिंदमम् ॥
एकविंशे युगेऽतीते तपोभिर्बहुविस्तरैः ।
नारसिंहमदृष्ट्वैव दुःखिता देवसत्तमाः ॥
सिंहरूपी स भगवान्विचचार नगोत्तमे ।
सहस्रादित्यसंकाशो विद्युत्प्रज्वललोचनः ॥
तप्तहाटककेशान्तो विद्युत्सामतनुच्छदः ।
दीप्तहाटकजिह्वाग्रो रक्तलाङ्गूलशोभितः ॥
विचित्रमणिपादैश्च दन्तपङ्क्तिमरीचिभिः ।
भासयन्सर्वककुभो दिव्यसिंहश्चचार ह ॥
कम्पमाना सुरेन्द्रास्ते किमेतदिति शङ्किताः ।
तत्र तत्र निलीयन्ते गिरिगह्वरकोटरे ॥
अथ तस्मिन्नन्तरे दिव्ययोगिगणामलाः ।
शङ्खचक्रधरा वन्द्याः स्तूयमाना महर्षिभिः ॥
पद्माक्षसूत्रवलया प्रलम्बिवनमालिकाः ।
दिव्यायुधधरा वीरा दिव्यकुण्डलशोभिताः ॥
तप्तहाटकवर्णैश्च रत्नकेयूरशोभिताः ।
केयूरमकुटैर्दिव्यैर्नूपुरैः कनकाङ्गदैः ॥
रशनाभिर्विचित्राभिर्दिव्यरत्नमयैः शुभैः ।
शोभमाना मुनिवरा योगीन्द्राः पर्वतोपमाः ॥
सनत्कुमारो भगवान्सनकश्च सनातनः ।
सनत्सुजातः शान्तात्मा महायोगी सनन्दनः ॥
नारदः पर्वतश्चैव कुमुदो लोकपालकः ।
जयो विजयशेषाद्याः कुम्भयोनिमुखा द्विजाः ॥
अणिमादिगुणोपेता योगीन्द्राः सचतुर्मुखाः ।
एते चान्ये च बहवो वैकुण्ठपुरवासिनः ॥
विमानकोटिसाहस्रैर्जाम्बूनदपरिष्कृतैः ।
कोटिसूर्यप्रतीकाशास्तं देशमुपजग्मतुः ॥
सिंहरूपधरं देवं हरिं दृष्ट्वा मुनीश्वराः ।
दिव्यैः पुष्पैः प्रकीर्याथ प्रणेमुर्देववल्लभम् ॥
ध्यायन्त प्रमदायुक्ता सुखासीना सुरोत्तमाः ।
प्रसीदेति जगन्नाथमुपतस्थुर्महर्षयः ॥
अथान्तरिक्षे जगतामधीशः
सुपर्णमारुह्य सुपर्णकेतुः ।
तस्मौ गिरौ देवगणैः स्तुतोऽसौ
सिंहाद्रिनाथो नरसिंहमूर्तिः ॥
मायामृगोऽसौ मनुजेन्द्रसूनो
सिंहो महानाविरभूत्किलाग्रे ।
स एव देवो जगतां विनेता
जगद्गुरुर्दिव्यमृगेन्द्रमूर्तिः ॥
तत्राविरासीद्गिरिवर्यपृष्ठे
विमानवर्ये बहुमेरुरूपः ।
तन्मध्यवर्ती हरिरव्ययात्मा
प्रत्यान्सुरान्पाति गिरौ प्रलीनान् ॥
देवैरनेकैः परिपूजितोऽसौ
चिरं वसामीति गिरौ नगेन्द्रे ।

6462 —(L. 6462) G₃ नानाशस्त्रनिपीडिताः (for ³) —(L 6463) D₁ पाहि नस्त्रिदशान्धीमन् (for ²) — D₁ G₃ M₁ om the ref —(L 6467) M₁ वा (for च) — After line 6469, G(ed) ins

232** पालयस्व तथा लोकांस्त्रिदशान्मनुजानपि ।

—(L 6472) M₁ गता सर्वे (for गणैः सार्धं) G₃ युष्माकं हितकाम्यया (for ²) —(L 6473) G(ed) समायुक्ते (for ॰युक्तो) D₁ वर्ते तस्मिन्, G₃ वर्तेमहि, M₁ वर्तयेयं (for वर्ते तत्र) —(L 6476) G(ed) भोगेच्छवो (for ॰प्सवो) —(L 6477) D₁ M₁ शोभिनं (for ॰तम्) —For line 6477, G₁ subst

233** इत्युक्त्वा सर्वदेवानां देवो विश्वात्मकः प्रभुः ।

—(L 6478) D₁ M₁ बहुजन्तु(M₁ ॰न्तो)पशोभितम्, G₃ ॰[illegible] (for ²) —(L 6483) G₁ [illegible] (for [illegible] ॰ते देव भगवान् (for ²) G₁ M₁ चचार च (for विचचार) —(L 6485) G₃ विभूषितः (for ॰तनुच्छदः) —(L 6486) D₁ G₁ त(G₁ दी)प्तपावकजिह्वाग्रो (for ²) G(ed) शोभनः (for ॰शोभितः) —(L 6489) G₃ सुरेन्द्राश्च; M₁ सुरा सर्वे (for सुरेन्द्रास्ते) —(L 6490) D₁ विलीयन्ते, G(ed.) निलीनास्ते (for ॰यन्ते) D₁ गिरेः शिखरकोटरे (for ²) —(L 6493) M₁ प्रलम्बिहरिमालिकाः (for ²) — D₁ om line 6495 —(L 6496) G(ed) उज्ज्वलैर् (for केयूर॰) —(L 6497) D₁ G₃ M₁ रत्नचित्रैः (for ॰मयैः) —(L 6498) G₃ पर्वतोपमैः (for ॰पमाः) —(L 6499) D₁ सनन्दनः; G₁ ₃ M₁ सनन्दश्च (for ॰कश्च) —(L 6500) D₁ G₃ महामतिः, G₁ M₁ इत्यपि (for सनन्दनः) —(L 6502) G(ed) शौरी च (for ॰शेषाद्या) M₁ जयेशविजयेशाद्या (for ²) G(ed) कुम्भयोनिर्बृहस्पतिः (for ²) —(L 6506) G(ed) तं देशं जग्मुरञ्जसा (for ²) —(L 6509) G(ed.) च मुदा (for प्रमदा॰) —(L 6515) G₁ ₃ मयोऽसौ, M₁ मृगेन्द्रो (for मृगोऽसौ)

सोमकान्त पुरा राजा सोमवंशे महामति ।
सदा दानपरो नित्य यज्ञकर्मसु निश्चित ॥
बन्धुप्रियो महातेजा गुणवान्धर्मतत्पर ।
आतिथेय सदा विष्णो परिचर्यापरो नृप ॥
सप्तद्वीपवती पृथ्वीं प्रशशास महीपति ।
धर्मेण पालिता सर्वा प्रजास्तेन महात्मना ॥
वाजपेयशत तेन ह्यश्वमेधशत तथा ।
कृते तेनैव महता दवास्तृप्तास्तथाभवन् ॥
एकदा चिन्तयामास प्रासादे देवसन्निभ ।
बहुकालो ह्यतीतो मे पुत्रो नैवाभवन्मम ॥
अपुत्रिणा मया लोक परोऽपि च तथा न हि ।
पितृसततिविच्छेदमभूत्म पापकर्मिण ।
अद्यप्रभृति ते सर्वे किं करिष्यन्ति पूर्वजा ॥
मया कृतानि धर्माणि बहूनि विविधानि च ।
तेषा मध्यक्षता दृष्टा न मया किं कृत पुरा ॥
कमह शरण गत्वा किं नु पृच्छामि धर्मिणम् ।
कालक्षेपो न कर्तव्यो जरया चावृता वयु ॥
इति सचिन्त्य राजेन्द्र सोमकान्ति प्रतापवान् ।
त्रिविष्टपं ययौ विद्वान्द्राप्यमान स्वतेजसा ॥
सुधर्मामण्डप देव पुरदरमरिंदमम् ।
ददर्श देवताभिश्च सेव्यमानमनेकधा ॥
स्वात्मजेन जयन्तेन साधु दृष्ट्वा दिवो पतिम् ।
एव एहीति राजेन्द्र स वज्री समभाषत ॥
दत्त्वा चार्धासन राज्ञे तत्काले भवदागम ।
किमर्थमागमो राजन्द्र किं करवाणि ते ।
तद्ब्रूहि साम्रत वीर करिष्ये वचन तव ॥
एव पृष्टस्तु भूपाल शक्रेण तु महात्मना ।
धर्मविल्कथयामास स्वमागमनकारणम् ॥
अपुत्रिणो मे दवेश पुत्र त्व दातुमर्हसि ।
नापुत्रस्य च लोकोऽस्ति त्वया वै गदित पुरा ।
तत्कारणं प्रार्थयाम्यद्य कामद सर्वदेहिनाम् ॥

इन्द्र उवाच ।

ममापि च ह्यपुत्रस्य ब्रह्मा लोकपितामह ।
जयन्त दत्तवान्पूर्वं प्रयत्नेन नृपोत्तम ॥
तत्सकाश व्रज त्व हि स वै दास्यति पुत्रकम् ।
काङ्क्षन्ति च दिशापालास्ते सार्धं नु त्वया सह ।
गच्छामि ब्रह्मणो लोकमद्य त्व यातुमर्हसि ॥

भगवानुवाच ।

दिक्पालै सह राजेन्द्र राज्ञा तेन महात्मना ।
मरुत्वानाययौ शीघ्र ब्रह्मणा ह्यविराड्या ॥
नमस्कृत्याब्रवीद्राजन्ब्रह्माण प्रपितामहम् ।
राजाय सार्वभौमश्च दवकार्यरत सदा ।
धर्मविद्धर्मनिरतो ह्यपुत्री च इमे सुरा ॥
सर्वेषा पुत्रसपत्तिं प्रयच्छ भुवनेश्वर ।
अस्ति चेत्तव कल्याण स्पृहा देवेषु भूमिप ॥

ब्रह्मोवाच ।

ब्रह्मप्रतिष्ठां कुरुत ततो वैवाहिक शुभम् ।
राजा दिक्पतय सर्वे कुर्वन्तु मम चाज्ञया ।
तेन पुण्यप्रभावेन पुत्रप्राप्तिर्भवेद् ध्रुवम् ॥
अहमेव शुभ कर्म धर्मार्था धर्ममुत्तमम् ।
कृत्वा वै सर्वलोकाना स्रष्टकर्ता भवामि च ॥
इत्युक्त्वान्तर्दधे दवो ब्रह्मा लोकपितामह ।
राजा च देवता सर्वा स्व स्व स्थान ययुस्तदा ॥
कृत्वा वै द्विजमुख्याणां मौञ्जीबन्धनिवेदनम् ।
राजा पुत्रमवाप्तु वै पितृणा मुक्तयेऽनघ ॥
ब्रह्मप्रतिष्ठामकरोत्काले पुण्यतमे नृप ।
उद्वाहमङ्गलैर्दिव्यै कारयामास सर्वदा ॥
धर्मव्रतो महानासीत्सुतो वै देवसन्निभ ।
तेनैव पितरो मुक्तिमगमन्पुण्यकर्मण ॥
तस्मात्त्व भूभृतां श्रेष्ठ पुत्रसततिप्राप्तये ।
पितृणा मुक्तये तात कुरु वै ब्रह्मवर्धनम् ॥

---

प्मतर, M1 न संशय (for द्विजन्मन) —(L. 6579) G1 M1 [व]दाहरिष्यामि (for °त्स्नीमम्) —(L. 6580) G1 2 चारिवं सोमवंशोद्भवम् (for °) —(L. 6581) G1 2 सोमवंशसमुद्भव (for °) —(L. 6582) D1 G(ed) निष्ठित (for निश्चित) —(L. 6585) D1 G1 प्रशशास महायु( G1 °म )ति (for °) —(L. 6589) G(ed) प्रभया (for प्रासादे) —(L. 6591) D1 अपुत्रिणस्त्वयं लोक, D1 G(ed.) °णामय लोक (for °) —(L. 6594) D1 धर्मार्थ, G1 सर्वाणि, M1 कर्माणि (for ध°) —(L. 6597) G(ed.) ह्यावृता (for व्यापृता) —(L. 6600) D1 सुमण्डपे देवदेव (for °) G1 G(ed) दृश्यमान (G1 देवराज) पुरंदरम् (for °) —(L. 6602) D1 M1 G(ed) पार्थं (for साधु) G1, 2 M1 G(ed) दृष्ट्वा (for दृष्ट्वा) —(L. 6603) D1 M1 वज्रा तु तमभाषत, G1 वज्री नृपम°, G2 वज्री नृपम° (for °) —(L. 6607) G2 वचनम् (for पृष्टस्)

—(L. 6608) G1 स्वागमनकारणम् (for °), —(L. 6613) G1 2 M1 ब्रह्म (for च हि) — G1 om lines 6615 6617 —(L. 6621) G2 अपुत्रस् M1 अपुत्रस् (for ह्यपुत्री) —(L. 6622) G(ed) सर्वेषां त्वं देवेन्द्र (for °) —(L. 6623) G(ed) नित्यश (for भूमिप) —(L. 6627) G(ed) च शुभ (for एव शुभ) G2 G(ed) धर्मिणा (for धर्मार्था) —(L. 6630) G1 M1 सर्वे (for सर्वा) G1 समाययु (for ययुस्तदा) G(ed) स्व स्वं धाम प्रपेदिरे (for °) —(L. 6631) G2 मौञ्जीबन्धनमुत्तमम् (for °) —(L. 6632) G1 समाप्नोति (for अवाप्तु वै) G2 राजा च पुत्रकामोऽसौ (for °) —(L. 6634) D1 M1 G(ed.) उद्वाहमङ्गल द्रव्यै (for °) D1 M1 स कारयति सर्वंश, G2 दुर्वतस्तस्य भूपते (for °) —(L. 6636) D1 G1 M1 कर्मणा (for °ण) —(L. 6639) D1 सुधर्मेत्तं, M1 °मे च (for °र्म च) —(L. 6641) D1 लोक°

आयुष्कर सुधर्म्यं च प्रजावृद्धिकर शुभम् ।
यशस्य लोकविख्यात सर्वलोकेषु पूजितम् ॥
पुण्यलोकप्रद पार्थ विवाहोपनयन परम् ।
मम लोकप्रद धर्म सर्वमङ्गलदायकम् ॥
य शृणोति सदा भक्त्या प्रात काले नृपोत्तम ।
पुत्रप्राप्तिर्भवत्तस्य सत्य सत्य मयोदितम् ॥
स्त्रीसनिधौ निशाया तु पठेत्प्राप्नोति पुत्रकम् ।
आरोग्य बलवृद्धिं च कान्तिं च निरुपद्रवाम् ॥

Colophon

द्रौपद्युवाच ।

गङ्गासुत नमस्तेऽस्तु कुरुवृद्ध महामते ।
द्वैपायन मे तात सर्वमप्यद्वाविष्यसि ॥
स्त्रीणा तु किं व्रत प्रोक्त सर्वसपत्कर परम् ।
विख्यात त्रिषु काले तन्मे ब्रूहि पितामह ॥
पाञ्चाल्या वचन श्रुत्वा यज्ञपत्नीजनै सह ।
भीष्मो वेदविदा श्रेष्ठो द्रौपदीं वाक्यमब्रवीत् ॥
वक्ष्ये परमकल्याणि सर्वसपत्कर शुभम् ।
आदौ भगवता प्रोक्त नारदाय महात्मने ।
नारदो ब्रह्मपुत्रस्तु ममावोचच्छुभ व्रतम् ॥
चातुर्मास्यव्रत पुण्य सर्वमङ्गलकारणम् ।
अपवर्गप्रद नृणा सर्वेषामघनाशनम् ।
स्त्रीणा पतिव्रताना तु सर्वमङ्गलद शुभम् ॥
श्रावणे मासि शुक्ले तु दशम्या तु शुभे दिने ।
स्वगृह लेपयेद्भक्त्या कृष्णे निर्दिष्टवत्सला ॥
ह्यारवालङ्कारयेद्देव गन्धपुष्पाक्षतादिभि ।
पतिसेवापरा भूत्वा नत्वा नारायण प्रभुम् ॥
नत्वा पतिव्रता भक्त्यपति परमपावनम् ।
प्रार्थयेत्परया भक्त्या करिष्ये त्वत्प्रसादत ॥
एकान्यामेकभुक्ता तु पादसेवा करोमि ते ।
यथा प्रीणाति भगवास्तथानुज्ञा ददस्व ह ॥
प्रार्थयेत्पुण्डरीकाक्ष प्रसीदेति तत परम् ।
प्रसन्नो भव देवेश सर्वज्ञ त्वा नमाम्यहम् ॥
त्वत्प्रसादात्तु भगवन्करिष्ये व्रतमुत्तमम् ।
अविघ्न कुरु मे नाथ सर्वलोकनमस्कृत ।
कृपया तव देवेश करिष्ये व्रतमुत्तमम् ॥
नमस्ते पुण्डरीकाक्ष नमस्ते गरुडध्वज ।
नमस्ते कमलाकान्त भूयो भूयो नमोऽस्तु ते ॥
इद मन्त्र समुच्चार्य प्रार्थय कमलापतिम् ।
त्वत्प्रसादाद्व्रत सम्यक्सफल भवति ध्रुवम् ॥
एव गृहार्चन सम्यक्प्रार्थयित्वा पुन पुन ।
पतेरनुज्ञया रात्रौ भद्रदीप प्रकल्पयत् ॥
कुर्वैकभुक्त पूर्वेद्युरन्यद्युरपि सुव्रते ।
कर्तव्य यद्धरे सम्यक् तद्वक्ष्ये शृणुष्व ह ॥
एकादश्या समुत्थाय स्नात्वा च प्रार्थयत्पतिम् ।
कृतस्वस्तिकविन्यासा गृहदेवस्य सनिधौ ॥
एकादशीव्रत कर्तुमनुज्ञा दातुमर्हसि ।
त्वत्प्रसादादह कर्तुं यतिष्ये नाथ सप्रति ॥
[illegible] मे हरिर्गुरुर्बन्धुरपवर्गप्रदो विभु ।
त्वया सरक्षिता नित्य त्वत्पादकमल गता ।
भोक्ता मे शिक्षिता च त्व त्वदन्यो न गतिर्मम ॥
रात्रौ जागरण कृत्वा उपोष्यैकादशीदिनम् ।
द्वादश्या प्रातरुत्थाय स्नान कुर्वीत वाग्यत ॥
भक्तिमान्व्रतमानदस्तु विष्णुसूक्तादिमन्त्रके ।
स्नापयेत्परया भक्त्या गन्धोदककुशादकै ॥
पुरुषसूक्तविधिना गायत्र्या वा सुरेश्वरम् ।
अष्टाक्षरविधानेन अथ वा द्वादशाक्षरे ॥
पूजयेद्देवदेवश घण्टानादसमन्वितम् ।
आतिय सर्ववाद्यैश्च शङ्खदुन्दुभिकाहलै ॥
एवं प्रपूजयेद्देवमपवर्गप्रद प्रभुम् ।
नामधेयैर्महामन्त्रैर्विरुदैर्वित वन्दनम् ।
स्पर्शने नाधिकारोऽस्ति स्त्रीशूद्राणां विशेषत ॥
एव कृत्वा हरे पूजा बन्धुमानमतिमान्गृही ।
पौरपैस्तु महामन्त्रै सनिधौ पायस हुनेत् ॥
परमान्न हरे प्रीत्यै द्वादश्या हैमपात्रत ।

प्रदो ( for °प्रद ) D1 विवाहोपनयो शुभौ, G2 °ह मोक्षित धनम् ( for °)

Colophon — *Sub-parvan* D1 G1 आश्वमेधिकपर्वणि शेष धर्मा G2 G(ed) शेषधर्मा, M1 आश्वमेधिकपर्वणि हरिवंशे शेष धर्मा — *Adhy name* G1 महाप्रतिष्ठापनम्; G(ed) महाप्रतिष्ठाप्रशसा — *Adhy no* D1 51; G1 3 M1 50

D1 G2 युधिष्ठिर ( for द्रौपदी ) — ( L. 6647 ) G2 M1 पितामह ( for महामते ) — ( L. 6649 ) G1 गङ्गा रामचन्द्र त्वं ( for ° ) — After line 6650 D1 ins

234** तेषा पत्नी होतदर्थं द्रौपदी प्रणयान्विता ।
कौतूहलात्पृच्छत्वं महापुण्यप्रद शुभम् ॥

— Before line 6651, D1 M1 ins वैशंपायन उवाच — ( L. 6651 ) G(ed.) सर्वधर्मार्थसाधनम् ( for ° ) — Before line 6653, G1 M1 ins भीष्म उवाच — ( L. 6656 ) G1 3 -दाय कम् ( for -कारणम् ) — ( L. 6659 ) G(ed) आषाढे ( for श्रावणे ) — ( L. 6662 ) D1 शुभम्; G1 G(ed) विभुम्, M1 परम् ( for प्रभुम् ) — ( L. 6670 ) D1 G2 देव ( for नाथ ) D1 देव ( for लोक° ) — ( L. 6676 ) G(ed) लोकेश्वर ( for गृहार्चन ) — ( L. 6679 ) D1 भरेत् ( for हरे ) — ( L. 6680 ) G2 स्नुषा; G(ed) नत्वा ( for स्नात्वा ) — ( L. 6686 ) D1 G1 M1 भोक्ता मां शिक्षकर्ता च ( G1 °म° कर्ता; M1 °कर्ता च ); G2 बोद्धा शिक्षाकरस्त्वं हि ( for ° ) — After line 6686 G(ed) ins

235** इति संप्राप्ते भर्तुर् सरवानुज्ञामवाप्य च ।

— G2 om lines 6689–6691 — ( L. 6694 ) D1 G2 -कोलकै, M1 निस्वने ( for -काहलै ) — ( L. 6695 ) D1 G2 M1 देवं

यद्यद्व्रतादिकं कर्म हरिमुद्दिश्य माव्रत ।
सफलं याति राजेन्द्र सर्वान्कामानवाप्स्यसि ॥
पुण्याहं वाचयित्वाथ विप्रैर्बन्धुजनैः सह ।
शान्तिं पौरुषसूक्तानि पठेद्देवं प्रणम्य च ॥
औपासनादिकान्कृत्वा ब्राह्मणानभिवादयेत् ।
पादप्रक्षालनं कृत्वा भोजयेत्परमान्नतः ॥
हरेर्नैवेद्यशेषं तु स्वयं भुञ्जीत वाग्यतः ॥
व्रतान्ते यजमानस्य वल्लभा मङ्गलव्रता ।
प्रणम्य विप्रान्स्वपतिं कृत्वा पादविशोधनम् ।
तीर्थभूतं पयः पीत्वा स्वयं भुञ्जीत बन्धुभिः ॥
एवं कृते व्रते सम्यक् दंपतिभ्यां हरिः स्वयम् ।
प्रीतिं गच्छति पाञ्चालि कर्मणा फलदो विभुः ॥
यं यं कामयते कामं तं तं प्राप्नोति निश्चितम् ।
कृपया लोकनाथस्य व्रतेनानेन सुव्रते ।
एकादशीव्रतं कुर्याच्चातुर्मास्ये विशेषतः ।
शुक्लश्रावणमारभ्य कार्तिकान्तं समर्चयेत् ॥
एवं कृते विशेषेण पुत्रपौत्रादिबन्धुभिः ।
स्त्रीभिः परिजनैः सार्धं यत्कार्यं तत्प्रपद्यते ॥
सुरलोकप्रदा ज्ञेया दीर्घपुत्रप्रदायिनी ।
अपवर्गप्रदा ज्ञेया सर्वपापप्रणाशिनी ।
आरोग्यदायिनी ज्ञेया सर्वभाग्यकरी शुभे ॥

द्रौपद्युवाच ।

भगवन्सर्वधर्मज्ञ सर्वलोकेश्वरस्य हि ।
भक्तप्रियो विशेषेण रक्षिता मम सुव्रत ॥
सखा च शिरसा भक्त्या भव त्राता शुभप्रद ।
करिष्ये पतिभिः सार्धं धर्मव्रतपरायणे ॥
श्रुतं मया विशेषेण चातुर्मास्यस्य वैभवम् ।
उद्यापनं तु कार्तिक्यां वद सम्प्रति मेऽनघ ॥

भीष्म उवाच ।

व्रतानामपि सर्वेषामुद्यापनविधिं बुधाः ।
वदन्ति च व्रतस्यास्य नैवेद्यापनकर्म च ॥
नित्या ह्येकादशी पुण्या सर्वभाग्यप्रवर्धनी ।
उपवासव्रतमिदं नियमव्रतमिति हि ॥
यथा तु गुळपिण्डस्य रसभेदो न विद्यते ।
एकादश्युपवासस्य तथा सर्वस्य चानघे ॥
शृणु पाञ्चालि वक्ष्यामि चातुर्मास्यस्य वैभवम् ।
फलातिशयहेतोस्तु कारणं कलिनाशनम् ॥
एकादश्यां शुक्लपक्षे श्रावणस्य सुरोत्तमः ।
स्वमायया पवित्राद्र्या निद्रया वर्तते विभुः ॥
तथा योगेन महता विग्रहेण सुशोभनः ।
प्रसन्नमूर्तिर्भगवान्कार्त्तिक्यां भवति प्रभुः ॥
तस्य प्रसन्नदिवसमुत्थानाख्यं विदुर्बुधाः ।
उत्थिते देवदेवेशे शेषपर्यङ्कशायिनि ।
पूजयेत्तं प्रयत्नेन पूजाभिर्मत्पदं व्रजेत् ॥
योगोत्थितत्वात्स विभुर्जगद्योनिर्जगन्मयः ।
चराचरेषु लोकेषु ह्युत्थानद्वादशी स्मृता ॥
द्वादश्यां तु हरिं भक्त्या पूजां कुर्वन्ति ये नराः ।
तेषां मुक्तिर्भवेत्सम्यग्देवदेवस्य चेक्षणात् ॥
एकादशीं तथा सर्वामुपोष्य विधिवद्धरेः ।
पूजां कृत्वा प्रयत्नेन ह्युत्थानान्तं समर्चयेत् ॥
उत्थाने विधिना पूजां यः करोति विशेषवित्
स मुक्तः सर्वपापेभ्यो हरिसालोक्यतां व्रजेत् ॥

द्रौपद्युवाच ।

कीदृशी पूजना प्रोक्ता देवदेवस्य शार्ङ्गिणः ।
तन्मे कथय तत्त्वज्ञ सर्वलोकेषु पूजित ॥

भीष्म उवाच ।

शृणु भद्रे प्रवक्ष्यामि नारदाय महात्मने ।
हरिः प्रोवाच जलधौ क्षीराब्धे सस्तुतो विभुः ॥
व्रतानामपि सर्वेषां मुख्यमेकादशीव्रतम् ।
मयि सुप्ते भक्तजना कुर्वन्ति मयि तत्पराः ॥
तस्मात्पुण्यतमं प्रोक्तं चातुर्मास्यव्रतं परम् ।
ज्ञेया भक्तिकरी प्रोक्ता चातुर्मासी तु मुक्तिदा ॥
भक्तिं विना ते मुक्तिश्च कथमद्य भविष्यति ।
भक्त्या मुक्तिप्रदं कर्म साधयेद्बुद्धिमान्नरः ॥
तस्मादेकादशी पुण्या त्वया सेव्या मुनीश्वर ।
भक्त्या परमया शान्त्या चातुर्मास्ये विशेषतः ॥
इत्युक्त्वा भगवांस्तत्र नारदं मुनिसत्तमम् ।
तिरोऽभूत्तत्र विश्वात्मा नारदो विस्मयं गतः ॥
तस्मात्सर्वप्रयत्नेन पूज्या नारायणात्मिका ।
उत्थानद्वादशी ज्ञेया सर्वपापप्रणाशिनी ॥
सुप्तोत्थितो हरिः साक्षाद्व्रतेन परितोषितः ।
व्रतेन सर्वकामान्वै सम्प्रयच्छति शोभने ॥

---

प्रपूजयेद्भक्त्या (for °) $D_1$ $M_1$ शुभम् (for प्रभुम्) — (L. 6699) $M_1$ सन्निधौ ज्ञुइयात्पुन (for °) — (L. 6700) $G_1$ विशेषेण (for हरे प्री ये) $D_1$ $G_3$ $M_1$ परमात्मेद्धरे प्रीतिर् (for °) $D_1$ $G_3$ $M_1$ द्वादश्यां होममात्रत (for °) — (L. 6701) $G_1$ यद्यद्व्रतानि कर्माणि, $M_1$ क्रियद्व्रतानि किं कर्म (for °) — (L. 6709) $G_1$ भक्त्या (for विप्रान्) — (L. 6713) $D_1$ $M_1$ कर्ता (for कर्म) — (L. 6714) $G_1$ कृपया वासुदेवस्य (for °) — (L. 6716) G(ed) आषाढशुक्लमारभ्य (for °) — $G_1$ पाञ्चाली (for द्रौपदी) — (L. 6723) $M_1$ सर्वलोकेश्वर सखा (for °) — (L. 6724) $G_1$ भवदाशां शुभ (Mı शुभ) प्रदाम् (for °) — (L. 6730) G(ed) सर्वभोग्यविवर्धनी (for °) — G(ed) om. lines 6735 6736 — (L. 6737) $M_1$ प्रीयते (for वर्तते) — (L. 6743) G(ed) योगोत्थितो हि स विभु (for °) — (L. 6747) $D_1$ एकादशी सदा सेव्या (for °) — (L. 6748) $G_3$ G(ed) ह्युत्थाने तं समर्चये( $G_1$ °माचरे )त् (for °) — (L. 6750) $G_1$ हरिसालोक्यमश्नुते (for °) — $G_1$ ₃ $M_1$ पाञ्चाली (for द्रौपदी) — (L. 6751) G(ed) पूजा तु कीदृशी प्रोक्ता (for °). — (L. 6756) G(ed)

भद्य मे सफल जन्म जीवित च सुजीवितम् ।
तपश्च सफलं चासीद्युष्माकं प्रियदर्शनात् ॥

अरुन्धत्युवाच ।

किमर्थं तप्यते वत्से त्वया पेशलगात्रया ।
त्वया वक्तु रहस्यं चेदिद संप्रति नान्यथा ॥
सख्या निवेदयामास तच्छ्रुत्वा शंकरं प्रति ।
सलज्जा तरुणी काम वक्तु न शशाक ह ॥

अरुन्धत्युवाच ।

भद्रे विदितमेवाद्य त्वद्वृत्तमतिशोभने ।
व्रतेन तोषयस्वेह क्षीराब्धितनयां शुभाम् ॥

उमोवाच ।

किं व्रत तद्विधान मे कथयस्व नमोऽस्तु ते ।
करिष्ये वचनादद्य मातस्तव पतिव्रते ॥

अरुन्धत्युवाच ।

प्रोषिते गौतमभयाद्देवराजे शची तदा ।
व्रतेन दुःखितो जीवो विशोकामकरोत्तदा ॥
तद्व्रत संप्रवक्ष्यामि कृतमेतन्मयाधुना ।
व्रतेनानेन सुभगे तवेष्टार्था भविष्यति ॥
पुरंदरवियोगार्तां शची चारुविलोचनाम् ।
जीवो वचनमक्लीबमुवाच वदता वर ॥

बृहस्पतिरुवाच ।

राशीं कर्कटक भानौ गते परमपावने ।
भृगुवारे महापुण्ये स्नात्वा नद्यां शुचिस्मिते ॥
सैकत पूर्णकुम्भं च तत्रैकां परिगृह्य च ।
धौतवस्त्रसमायुक्ता वटस्याश्वत्थपल्लवान् ॥
आदाय चाम्बुद रम्ये सैकते तु समर्पयेत् ।
तत्सैकत समादाय त्रीन्पिण्डानथ कारयेत् ॥
वटाश्वत्थैस्तु तानर्च्य तत्पार्श्वे पूर्णकुम्भकम् ।
सुवर्णपुष्पगन्धाद्यैर्वस्त्रतण्डुलराशिभि ।
हरिद्रालवणाभ्यां च पूगताम्बूलकर्पूरै ॥
उपस्थित तमभ्यर्च्य लक्ष्मीनारायणात्मकम् ।
माभूम्यां सह त विष्णु सनकादिनिषेवितम् ॥
त देवमर्चयेद्विद्वांस्तत्तन्मन्त्रैस्तु शार्ङ्गिणम् ।
मोदकान्गुलसंपूर्णान्मुद्रैश्च परिपूरितान् ।
नैवेद्यमर्पयेद्विद्वानेकविंशतिसंख्यया ॥

विप्राय वेदविदुषे वायनं समर्पयेत् ।
माभूम्यां सहितो विष्णु श्रीमांश्च लोकनायक ।
मोदकाना प्रदानेन वाञ्छितार्थप्रदो भवेत् ॥
विप्राय वायन दत्त्वा मन्त्रेणानेन सुव्रत ।
एकविंशतिभिर्वापि सप्तभिर्वा प्रकल्पयेत् ॥
एव संपूज्य विधिवत्कथां श्रुत्वा सुशोभनाम् ।
भुञ्जीयाद्बन्धुभि सार्धं स्वय भुञ्जीत मोदकान् ॥
दक्षिणा गुरवे दद्यात्सवस्त्रफलतण्डुलाम् ।
आशिष तु सतः प्राप्य गृह नीत्वा प्रपूजयेत् ।
एव कृते विधानेन सद्य सिद्धिर्भविष्यति ॥
पुत्रपौत्रांस्तथा विन्देत्पतिं विन्दत्यतिव्रता ।
राजा च राज्यलाभ च दरिद्रो धनसंपदम् ॥
दीर्घमङ्गलमायुष्यमारोग्य चापि भामिनि ।
भवेद्व्रतेन कीर्तिश्च सर्वसंपच्च शाश्वती ।
य य कामयते काम त तमेति न संशय ॥
स्त्रीणां व्रतमिद मुख्य पतिपुत्रविवर्धनम् ।
तस्मात्पतिव्रते त्व तु कुरु व्रतमनुत्तमम् ॥
आचार्यस्य वच श्रुत्वा शची कमललोचना ।
तथाकरोद्व्रतमिद ब्राह्मणान्परिपूज्य च ॥
पतिं लेभे विशालाक्षि सहस्राक्षमरिंदमम् ।
कृपया वासुदेवस्य लक्ष्म्याश्चापि नगात्मजे ॥
अरुन्धत्या वच श्रुत्वा गौरी कुटिलकुन्तला ।
अकरोत्प्रीतिसंयुक्ता लक्ष्मीनारायणात्मकम् ॥
व्रत कृत्वा विधानेन व्रताना पतिमव्ययम् ।
गौरी लेभे महादेव पतिं परमपावनम् ॥

भीष्म उवाच ।

कार्कटे तु भृगोर्वारे व्रतेऽस्मिंस्तु मया कृते ।
अन्धकारि प्रसन्नोऽभूत्पार्वत्यास्तु तपोव्रतै ॥
अष्टमूर्तिधरो भूत्वा कपर्दी वाक्यमब्रवीत् ।
परितुष्टोऽस्मि भद्रं ते पवित्रे मेनकात्मजे ।
तव दास्य गतोऽहं वै तपसा च व्रतेन च ॥
देवता च व्रतस्यास्य क्षीराब्धितनया शुभा ।
अथ देवो हरि साक्षात्सर्वलोकेश्वरो विभु ॥
अद्यप्रभृति लोकानां फलदा शुभदा रमा ।
राज्यदा भोगदा चैव पतिदा धनदा शुभा ॥
हरिं लक्ष्मीं विना नान्या व्रतदानफलप्रदा ।

(for °) — (L. 6836) $D_1$ जात (for चासीद्) — (L. 6837) $G_1$ बाले, $M_1$ भद्रे (for वत्से) — (L. 6838) $G_2$ न शक्यं (for रहस्य) — (L. 6840) $G_2$ कामा (for काम) — $G_2$ om lines 6841 6844 — $D_1$ पार्वती (for उमा) — (L. 6854) $G_1$ G(ed) वटाश्वत्थस्तु($G_1$ °स्थ)पल्लवान् (for °) — (L. 6859) G(ed.) चन्द्रकै (for कर्पूरै) — (L. 6862) $D_1$ $G_1$ सत्तमश्चैव चेतसा (for °) — (L. 6865) $M_1$ पायस (for वायनं) — (L. 6868) $M_1$ [उ]वायन (for वा°) $G_1$ G(ed) विप्राय दद्याच्छुचये (for °) — (L. 6871) $G_1$ G(ed.) ब्राह्मणान्भोजयित्वाथ (for °) — After line 6872 $G_1$ G(ed.) ins

236** दक्षिणां तु यथाशक्ति दद्याद्विप्रेभ्य एव च ।

— (L. 6875) $G_1$ पुत्र विन्देद्विशालाक्षी (for °) — (L. 6877) $D_1$ $G_2$ दीर्घमायुष्यमारोग्य (for °) $G_2$ मङ्गल चापि भामिनी (for °) — (L. 6879) $G_2$ त त प्राप्नोत्यसंशयम् (for °) — (L. 6880) $D_1$ $G_1$ ₃ $M_1$ बन्धु (for पुत्र-) — $G_2$ om line 6886 — (L. 6886) $D_1$ गौरी कमललोचना (for °) — (L. 6890) $D_1$ $G_1$ ₃ $M_1$ विधिना चोमया कृते

न पश्यामीह लोकेऽस्मिंस्त्वत्पूज्या त्वया शुभे ॥

भीष्म उवाच ।

एवं दत्वा वरं तस्याः पार्वत्याः परमेश्वरः ।
उद्वाह्य विधिना गौरीं तया सार्धं मुमोद ह ॥
पाञ्चालराजतनये त्वमेव कुरु शोभने ।
पुनराज्यधनादीनां सपत्तव भवेद्ध्रुवम् ॥
रुक्मिणी कृष्णमुद्दिश्य कृत्वा व्रतमनुत्तमम् ।
यादवेन्द्रं पतिं लेभे सत्यक्त्वा चेदिभूपतिम् ॥
सर्वास्ता कृष्णपत्न्यश्च सर्वा यादवयोषितः ।
प्रद्युम्नप्रमुखान्पुत्राँल्लेभिरे लोकविश्रुतान् ॥
दमयन्ती पतिं लेभे राज्यभ्रष्टं नलं विभुम् ।
हरिश्चन्द्रः स्वकं राज्यं लभे चन्द्रवतीं शुभाम् ॥
पाञ्चालि पश्य लोकेषु यत्ते मनसि रोचते ।
अचिरात्प्राप्स्यसे श्रेय सत्य नारदभाषितम् ॥
भर्त्रा विरहिता नारी भ्रष्टराज्यश्च यो नृपः ।
व्रतं कृत्वा विधानेन शाश्वतं सुखमश्नुते ॥
व्रताचरणकाले तु शुश्रूषायो हि मानवः ।
तस्यैव सर्वश्रेयांसि भविष्यन्ति न संशयः ॥

Colophon

युधिष्ठिर उवाच ।

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
शिवरात्रिव्रतं तात ब्रूहि मे कुरुपुंगव ।
श्रमत सर्वलोकानां पवित्रं पावनं शुभम् ॥
कैर्नृपैर्द्विजमुख्यैश्च ऋषिभिर्देवतागणैः ।
कृतं व्रतमिदं पुण्यं पवित्रं पापनाशनम् ।
पद विश्रुतधर्मज्ञ मम सुरनदीसुत ॥
त्वं हि लोकगुरुर्भूत्य इति मे निश्चिता मतिः ।
तस्मात्त्वां प्रार्थयाम्यद्य पातु धर्मात्मत प्रभो ॥
त्वत्तोऽहं श्रोतुमिच्छामि देवदेवस्य चाज्ञया ।
धर्मोपदेशव्याजेन पापत्मान्शत्रुपीडितात् ॥

वैशम्पायन उवाच ।

इत्युक्तो धर्मराजेन कुरुवृद्धः पितामहः ।
धर्मसूनुमथामन्त्र्य स्मितमिव वाक्यमब्रवीत् ॥

भीष्म उवाच ।

साधु साधु महाप्राज्ञ मतिस्ते विमलोज्ज्वला ।
त्वं वेत्ता सर्वधर्माणां मां तथा परिपृच्छसि ॥
ऐश्वरं व्रतमुद्दिश्य कीर्तिनं तेन मां मतिः ।
तदहं देवदेवेशो वेत्ति नान्यो महीतले ॥
*पुरा भगवता प्रोक्तं विष्णुना प्रभविष्णुना ।*
नारदाय ब्रह्मविदे तस्मात्तु मया श्रुतम् ॥
भागीरथ्यास्तटे राजन्महर्षिगणसेविते ।
स्नातुमिच्छन्महानद्यां ब्रह्मपुत्रो युधिष्ठिर ।
पर्यटंस्तु शुभाल्लोकानिदं क्षेत्रमगात्प्रभुः ॥
तीर्त्वागतं व्योमवीथ्यां दृष्ट्वा दिनकरप्रभम् ।
ऋषयो देवताः सर्वे त देवा सगुरुअग्रमाः ।
विश्वामित्रो भरद्वाजो जमदग्निश्च मन्त्रवित् ।
कण्वो बृहस्पतिर्व्यासः सोमदत्तः सहस्रजित् ॥
रामो वेदविदां श्रेष्ठः सत्यशीलश्च काश्यपः ।
सुमन्तुर्जैमिनिश्चैव पुलस्त्यः पुलहः क्रतुः ॥
गौतमोऽथ शतानन्दो याज्ञवल्क्यश्च गालवः ।
संवर्तो रोमशश्चैव मार्कण्डेयस्तथा भृगुः ॥
एते चान्ये च बहवो मुनयः संशितव्रताः ।
दिक्पाला मरुतश्चैव द्वादशार्का मरुद्गणाः ।
यक्षाः किंनरगन्धर्वास्ते देवाः प्रादुरभ्ययाः ॥
तत्र देवानृषीन्सर्वानप्सरसश्च नारदम् ।
आगुं धर्मं समुद्दिश्य पर्यपृच्छमहं प्रभो ।
मनुजानमृषिगणैर्सा देवाः साधु चाब्रुवन् ॥
महत्संशयमागम्य वयमत्र समागताः ।
तदिदं दैवयोगेन यदीश परिपृच्छसि ॥
इति तेषूपविष्टेषु प्रीतिं कृत्वा महात्सु च ।
नारदो भगवानत्र मां चैव प्रत्यभाषत ॥

नारद उवाच ।

साधु महाव्रतं श्रेष्ठ मतिस्ते मत्सरर्जिता ।
श्रीकण्ठस्य देवस्य व्रतं परमपावनम् ॥
आदौ भगवता प्रोक्तं देवदेवेन चक्रिणा ।

---

(G2 2 °ता) (for °) — (L. 6903) G(ed) पाञ्चालतनये तस्मात् (for °) — (L. 6904) G2 संपदस्ते, M2 °शिव (for °उप) — (L. 6910) D1 लेभे चन्द्रवती शुभा (for °)

COLOPHON — *Sub-parvan* D1 आश्चर्यपर्वणि गोपधर्मा, G1 2 M1 G(ed) शेषधर्मा — *Adhy. name* D1 कर्काटक‌भागवतव्रतम्, G1 कर्कोटकव्रतम्, G2 कर्कोटमधुनारव्रतम्, G(ed) लक्ष्मीनारायणव्रतमाहात्म्यकथनम् — *Adhy. no.* D1 53, G1. 2 M1 G(ed) 53

(L. 6917) G(ed) नमस्तेऽस्तु (for महाप्राज्ञ) — (L. 6921) G1 महाव्रत (for व्रतमिदं) G(ed) हृद्यं (for पवित्रं) — (L. 6926) G(ed) °सूनुं (for पीडितात्) — (L. 6930) D1 M1 तथापि मम पृच्छसि, G1 तथा मामपि पृ° (for °) — (L. 6931) G1 आश्चर्यं (for ऐश्वरं) — (L. 6933) G2. 2 M1 विष्णुना सर्वजिष्णुना (for °) — (L. 6937) D1 G1 मज्जनार्थं, M1 पूजनार्थं (for पर्यटंस्तु) — G2 om. lines 6938–6940 — (L. 6938) D1 M1 चरन्तं व्योमग° काश्यां (M1 °अन्वि), G1 तमहं व्योमगलयो (for °) D1 दिव्यां दिनकर प्रभुम् (for °) — (L. 6939) G1 M1 तं देवाः प्रति (M1 °इत्यधि) त्यागद्य (for °) — (L. 6943) D1 सुम न्तुर्देवनिधन, G2 °न्तुर्वै वेदनिधि (for °) D1 G1 M1 काश्यपः (for पुलहः) — (L. 6948) D1 तं देवं नमुरस्तमा, G2 M1 तं देवमुपजग्मिरे (M1 °रम्यु) (for °) — (L. 6949) G1 2 ऋषीनर्थान् (for ऋषी तत्र तान्) — (L. 6951) G1 G(ed) मनुज्ञा (for °तन्) — (L. 6956) G1 मतिस्ते विमलोज्ज्वला (for °) — (L. 6960) D1 M1 सुभद्रे (for शुभम्) — After line 6960, D1 ins.

पावनं त्रिषु लोकेषु विश्रुतं पाण्डुनन्दन ॥
सुलभं धर्मबुद्धीनां पापिनामप्रकाशकम् ।
सर्वपापक्षयकरमायुरारोग्यदायकम् ॥
शिवस्य नीलकण्ठस्य शिवरात्रिव्रतं परम् ।
मातृतः पितृतश्चैव द्विकोटिकुलसंयुतः ।
शिवलोकमवाप्नोति नारदेन प्रभाषितम् ॥
सङ्गात्कामात्तथा स्नेहाद्भयाद्वा यो हि मानवः ।
शिवरात्रिव्रतं कृत्वा शिवेन सह मोदते ॥
पुत्रमित्रकलत्राणि धनानि कुरुनन्दन ।
दासीदासाश्च पशवः शकटा धान्यसंचयाः ॥
एतान्सर्वांस्तथा चान्याननुभूय नराधिप ।
स पश्चाद्वज्रिणो लोके सर्वमङ्गलसंयुतः ।
गन्धर्वैः स्तूयमानस्तु शिवलोके सुखी भवेत् ॥
शिवरात्रिप्रभावेन राजन्नेवं सुखी भवेत् ॥
दण्डाद्राजभयात्सङ्गाद्रोगाद्व्यसनसंकटात् ।
शिवरात्रिव्रते राजन्निराहारो हि मुक्तिभाक् ॥
रात्रौ जागरणं कृत्वा शिवं संपूज्य भक्तितः ।
गन्धर्वैः स्तूयमानस्तु शिवलोकं स गच्छति ॥
चण्डीशस्य व्रतं कृत्वा चण्डालोऽपि नराधिप ।
भक्त्या परमया युक्तो यानारूढो दिवं व्रजेत् ॥
स्त्रीशूद्रादिजनैरन्यैर्नीचैरपि नृपोत्तम ।
कृतं येस्तु महाराज तैरियं जगती धृता ॥
विद्यमाने व्रते चास्मिन्सर्वकामफलप्रदे ।
गच्छन्ति निरयं मूढा मर्त्या घोरं महाद्भुतम् ॥
शिवरात्रिव्रतपराः शिवकीर्तनतत्पराः ।
शिवलोकाधिपाः प्रोक्ताः पूज्यमाना मरुद्गणैः ॥
शिवं गच्छति भूपाल यो नरः कर्तुमिच्छति ।
शिवरात्रिव्रतमिदं स गच्छेद्ब्रह्मणः पदम् ॥
महापातकयुक्तो वा युक्तो वा सर्वपातकैः ।
व्रतेनानेन राजेन्द्र मुच्यते नात्र संशयः ॥
यस्त्वेतद्व्रतमाश्चर्यं कुरुते भक्तिसंयुतः ।
तद्धाम तेन पूतं हि तस्मात्स्थानमनुत्तमम् ॥
यत्रैव वर्तते राजंस्तत्तीर्थं तत्तपोवनम् ।
तत्रैव धामनि सर्वे यान्ति सारूप्यतां शिवे ।
अस्मिञ्जन्मनि कौन्तेय व्रतं परमपावनम् ।
एकं वा क्रियते येन जन्म तत्पावनं भवेत् ॥
राजसूयसहस्रेण वाजपेयशतेन च ।
यत्फलं प्राप्यते सद्भिर्व्रतेनानेन तद्भवेत् ॥
क्ष्माप्रदक्षिणे यत्तु सर्वतीर्थनिषेवणे ।
पुण्यक्षेत्राभिगमने कन्यादाने च यत्फलम् ।
ब्रह्माण्डकोटिदाने च शिवरात्रिव्रतेन तत् ॥

युधिष्ठिर उवाच ।

केन मार्गेण गाङ्गेय पूजनीयो महेश्वरः ।
तथानुष्ठानदानं च ब्रूहि मे निम्नगासुत ॥

भीष्म उवाच ।

नारदेन यथा प्रोक्तं तद्ब्रवीमि तवानघ ॥
प्रातःकाले समुत्थाय स्नात्वा वै वाग्यतः शुचिः ।
पुष्पाणि च विचित्राणि फलानि रसवन्ति च ।
आदाय मतिमान्मौनी जितक्रोधो जितेन्द्रियः ।
गृहं कृत्वा तु कौन्तेय कारयेच्छुभमण्डलम् ।
पञ्चकुम्भसमायुक्तं नानापुष्पैरलंकृतम् ॥
इन्द्रादिलोकपालांश्च पूर्वादिषु च वाहयेत् ।
कुम्भेषु तेषु कौन्तेय पूजयेच्च ततो व्रती ॥
मध्यमे पूर्णकुम्भे तु देवदेवं पिनाकिनम् ।
आवाह्य रुद्रसूक्तेन रुद्रं तं गिरिजापतिम् ॥
अभिमन्त्र्य च तन्मन्त्रैर्वामदेवैरथापि वा ।
तेषु सद्योजातकैस्तत्र पञ्चाक्षरं परम् ॥
पञ्चाक्षरमहामन्त्रविद्यया धर्मनन्दन ।
यः पूजयेन्महादेवं स रुद्रपदमश्नुते ॥
तत्कुम्भतोयैर्भूतेशमभिषिच्य पिनाकिनम् ।
तस्मिन्मन्त्रे सदा निष्ठस्तेनैव स्नापनं परम् ॥
गन्धपुष्पैर्धूपदीपैर्वस्त्रैर्विविधभूषणैः ।
बिल्वपत्रैर्महादेवमर्चयेच्च ततो व्रती ॥
नैवेद्यं परमान्नैश्च पञ्चभक्ष्यैश्च पायसैः ।
दधिक्षीरैर्नालिकेरैर्नैवेद्यं तु समर्पयेत् ॥
कर्पूरचूर्णसंयुक्तं पूगीफलसमन्वितम् ।

237** दृष्ट्वा व्रतश्रुत्यं ते प्रवक्ष्यामि समासतः ॥
शिवरात्रिव्रतमिदं पवित्रं पापनाशनम् ।
सर्वभाग्यप्रदं पुण्यं सर्वलोकप्रमन्त्यकम् (?) ॥

—(L 6961) M1 -वर्धनम् (for दायकम्) —(L 6964) M1 स्वर्ग (for शिव) —(L 6965) G(ed) लोभाद्वापि च मानव (for °) —(L 6968) G1 दासीदासा पशवश्चैव शकटा-धान्यसंचयात् — After line 6969 G1 ins

238** भक्त्या परमया युक्तो यानारूढो दिवं व्रजेत् ।

—(L 6971) M1 ब्रह्म (for शिव) D1 महीयते, G1 सुखी वसेत्, G2 सुखं वसेत् (for सुखी भवेत्) — G1 M1 om (hapl) line 6972 —(L 6973) G3 द्रोहाद्रोगसंकटात्, G(ed) लोभाद्रोगभयाच्च च (for °) —(L —(L 6976) M1 स्वर्ग (for शिव) —(L 6980) D1 धृतम्, G1, 2 धृता (for धृता) —(L 6982) D1 घोरं हि महद्भुतम् (for °) G1 om (hapl.) line 6983 —(L 6990) G(ed) तद्धामस्तेन पूतो हि (for °) —(L 6991) M1 तीर्थं तत्र तपोवन (for °) — D1 om (hapl) lines 6992 6993 —(L 6992) [illegible] —तेनायनेन

M1 -दानेन (for -दाने च) —(L 7000) G1 M1 मन्त्रेण (for मार्गेण) —(L 7001) D1 व्रतानुष्ठानदानेन, M1 पूजानुष्ठानं च (for °) —(L 7006) D1 om (hapl.) lines 7006[b] 7009[a] G2 मण्डपम् (for °लम्) —(L 7008) D1 G2 -पालैश्च (for पालांश्चैव) —(L 7009) G1 कुम्भतोयेषु राजेन्द्र (for °) —(L 7012) D1 वामदेवेन चापि वा (for

गौतमस्तु महातेजा धर्मिष्ठस्तपतां वरः ।
कृत्वैवाहल्यया सार्धं शतानन्दमवाप्तवान् ॥

युधिष्ठिर उवाच ।

जमदग्निस्तथा चात्रिः कृतवीर्यस्तु राघवः ।
हरिं पुत्रत्वमापन्ना एते व्रतपरायणाः ॥
शक्रो यमः प्रचेताश्च धनदो दिशिवल्लभः ।
शिवरात्रिव्रतं कृत्वा ककुभामधिपाभवन् ॥
ऋषयो राजशार्दूल मुनयो ब्रह्मवित्तमाः ।
राजानो वैश्यमुख्याश्च शूद्राश्चान्ये नराधमाः ।
शिवरात्रप्रभावेन शिवसारूप्यतां गताः ॥
शिवरात्रिव्रतमिदं कृतं यदि सुखप्रदम् ।
मृडानीपतिमीशानं व्रतेनानेन तोषयेत् ।
स मुक्तः सर्वपापेभ्यो यानारूढो दिवं व्रजेत् ॥
भक्त्या कृते व्रते चास्मिञ्शिवरात्रौ महामते ।
विप्रावन्धुवयोर्वित्तं लभते नात्र संशयः ॥
मार्जारमूषिकौ राजन्पुरेशानस्य संनिधौ ।
फलक्षीरादिहरणाच्छिद्दतौ तौ दिवं गतौ ॥
चोरो वै धनलाभाय जाग्रद्वै शिवसंनिधौ ।
निषूदितो राजभटैः शिवलोकमवाप्तवान् ॥
गर्दभौ देवपूजार्थं गोधूमगुडधूपकान् ।
वाहयित्वा पुरा श्रान्तौ वणिजा सह धर्मज ॥
शिवरात्रिदिने रात्रौ संनिधौ निधनं गतौ ।
तदा शिवगणैः सार्धं पूजितौ तौ दिवं गतौ ॥
शिवरात्रिदिने राजन्माहात्म्यं यः शृणोति च ।
पितृमातृकुलैर्युक्तो रुद्रलोकं स गच्छति ॥

Colophon

वैशंपायन उवाच ।

बोधयित्वा तु पाञ्चालीं याज्ञसेनीं पतिव्रताम् ।
स्थितं भीष्मं महाभागं धर्मराजोऽब्रवीदिदम् ॥

युधिष्ठिर उवाच ।

गङ्गासुत नमस्तेऽस्तु पाण्डूनां हितकृत्तम ।
श्रोतव्यमस्ति किंचिन्मे सर्वधर्मात्मक विभो ॥
सर्वेषामपि मासानां वत्सरेषु च यद्व्रतम् ।
हरेः प्रियकरं यच्च तन्मे त्वं कृपया वद ॥

भीष्म उवाच ।

चातुर्मास्यव्रतं पुण्यं श्रुतं किं नु त्वयानघ ॥

वैशंपायन उवाच ।

बोधयित्वा तु पाञ्चालीं यज्ञपात्रीसमन्विताम् ।
प्रोक्तं मया तु पाञ्चाल्याः सर्वमङ्गलकारणम् ॥

युधिष्ठिर उवाच ।

पर्णशालासमीपे तु श्रुतमेतन्मयानघ ।
प्रसन्नमभवत्तस्मान्मामकं मे नदीसुत ॥

वैशंपायन उवाच ।

सुखी भवेति तं चोक्त्वा भीष्मस्तु वदतां वरः ।
आददे वचनं धीमान्धर्मगर्भं यशस्करम् ॥
मासव्रतं प्रवक्ष्यामि कार्तिक्यादिषु शोभनम् ।
यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते ॥
आश्वयुक्कृष्णपक्षस्य चतुर्दश्यां जनार्दनम् ।
ब्राह्मे मुहूर्ते चोत्थाय स्मरेत्सर्वात्मकं विभुम् ॥
तैलाभ्यङ्गं प्रकुर्वीत बन्धुभिः सह धर्मज ।
अरुणोदयवेलायां कुर्यात्तात्कालिकीं क्रियाम् ॥
गायत्र्यादिजपं कृत्वा सर्वं वै स्नानपूर्वकम् ।

$M_1$ -संभूत ( for विभवो ) —( L. 7082 ) $D_1$ $M_1$ पुत्रत्व ( for भूयश्च ) —( L 7084 ) $D_1$ $G_{1,3}$ ध्यात्वा देवं त्रियम्बकम् ( for ° ) —( L 7094 ) $G_1$ वरेण हि, G(ed ) बलेन हि ( for -परायणा ) —( L 7095 ) $M_1$ वल्लभा ( for °भः ) G(ed ) धनदश्च महातपाः ( for ° ) —( L 7096 ) G(ed ) प्रभवो ( for अधिपा ) $D_1$ ककुभामधिपोऽभवत् ( for ° ) —( L 7098 ) $G_1$ नराधिपाः , G(ed ) जनाधमाः ( for नरा° ) — After line 7100 G(ed ) ins

241** अखण्डैश्वर्यमीशानो ददात्येव न संशयः ।

—( L. 7103 ) $G_2$ $M_1$ शिवरात्रिमहामते ( for ° ) —( L. 7107 ) $D_1$ $M_1$ जाग्रतो $G_{1,3}$ जाग्रते ( for °द्वै ) G(ed ) देव ( for शिव ) —( L. 7109 ) $D_1$ $M_1$ धूपादि ( for गोधूम ) $G_{1,3}$ सूपादिगुडगोधुमान् ( for ° ) —( L. 7110 ) $G_2$ परिश्रान्तौ ( for पुरा श्रान्तौ ) —( L 7112 ) $G_1$ त्रिदिव ( for तौ दिव ) —( L 7113 ) $G_2$ व्रते ( for दिने ) $M_1$ रात्रौ ( for राजन् )

Colophon — *Sub-parvan* $D_1$ $G_1$ आश्चर्यपर्वणि शेषधर्मा , $G_2$ $M_1$ G(ed.) शेषधर्मा — *Adhy name* $D_1$ $G_1$ शिवरात्रिमाहात्म्यकथनम्, $G_2$ शिवरात्रिमहिमानुवर्णनम्, G(ed ) शिवरात्रिव्रतमाहात्म्यम् — *Adhy no* $D_1$ 54, $G_{1,3}$ $M_1$ G(ed ) 53

( L. 7115 ) $D_1$ $G_{1,3}$ $M_1$ यज्ञपत्नीं ( $D_1$ $M_1$ °त्नी ) समाश्रिताम् ( for ° ) —( L 7116 ) $D_1$ $G_{1,3}$ $M_1$ स्थितं मुहूर्तं विश्रा( $G_1$ $M_1$ °तं विश्र )न्य ( for ° ) $D_1$ $G_1$ भीष्मं धर्मसुतोऽब्रवीत् , $G_2$ $M_1$ भीष्मं धर्म्यं ( $M_1$ भीष्म धर्मो ) वचोऽब्रवीत् ( for ° ) — $G_2$ $M_1$ om the ref —( L 7118 ) $D_1$ $M_1$ -धर्मकर ( for धर्मात्मक ) $G_1$ वच ( for विभो ) —( L 7119 ) G(ed ) मध्ये कस्मिन्महाव्रतम् ( for ° ) —( L. 7120 ) G(ed ) भवेद्धरिमीतिकरं ( for ° ) —( L 7121 ) $G_2$ मया ( for त्वया ) — $G_2$ om. lines 7123 7128 —( L 7123 ) $M_1$ -कारकम् ( for °णम् ) —( L. 7125 ) $G_1$ $M_1$ तात ( for तस्मात् ) — Before line 7128 $G_1$ $M_1$ ins भीष्म उवाच —( L. 7128 ) $G_1$ $M_1$ कार्तिक्यादिशुभेक्षणे ( for ° ) —( L. 7131 ) $G_1$ स्मरेद्देवकिनन्दनम्, $M_1$ °देवं जनार्दनम् ( for ° ) —( L. 7133 ) $D_1$ $G_1$ $M_1$ -काले तु ( for -वेलायां ) $M_1$ कुर्यात्तात्कालिकां क्रियां ( for ° ) —( L 7134 ) $G_2$ सम्यक् ( for सर्वं ) —( L.

पुष्ये मासे च राजेन्द्र स्नानध्यानजपादिभिः ।
दीपनैवेद्यपूजाभिर्नरो याति सुरालयम् ॥
माघस्नानं प्रशंसन्ति तथा भूसुरतर्पणम् ।
नैवेद्यं दीपपुष्पाद्यैर्विष्णोः कुर्वीत भक्तिमान् ॥
मेषसंक्रान्तिकाले तु यः कुर्याद्द्विजभोजनम् ।
हरेः पूजां च राजेन्द्र स विष्णुपदमश्नुते ॥
चैत्रे मासि सिते पक्षे विष्णुपूजापरायणः ।
यो विप्रं सततं भक्त्या पूजयेच्च स मुक्तिभाक् ॥
वैशाखे च सिते पक्षे तृतीयाख्ये शुभे दिने ।
ब्राह्मणान्भोजयन्भक्त्या विष्णुलोकं व्रजेद्ध्रुवम् ॥
वैशाख्यां पौर्णमास्यां तु गुडपानीयमुत्तमम् ।
दध्योदनं नालिकेरं हरेर्लोकप्रदं शुभम् ॥
गुडोदनं दधिद्रव्यं छत्रचन्दनपादुकाः ।
ये प्रयच्छन्ति विप्रेभ्यो विष्णुलोकं प्रयान्ति ते ॥
य इदं धर्मचरितं शृणोति सततं नरः ।
सर्वपापविशुद्धात्मा याति विष्णोः पदं शुभम् ॥

Colophon

युधिष्ठिर उवाच ।

शेषमासे तु यद्धर्मं चरयोगं नदीसुत ।
श्रोतुमिच्छामि तत्त्वेन नातः परतरं हि मे ॥

भीष्म उवाच ।

ज्येष्ठमासे पौर्णमास्यां गोपूजां कुरुते तु यः ।
शोभनानि च सिध्यन्ति प्राप्नुवन्ति दिवं हि तत् ॥
पूर्वमभ्यर्चिता गावो गावे कृष्णप्रचोदिते ।
ददुः पुण्यफलं तेषां यत ते त्रिदिवं गताः ॥
गोषु ब्राह्मणमुख्येषु भक्तिमान्यो भवेत्पुमान् ।
प्रयाति हरिसालोक्यं पुनरावृत्तिवर्जितम् ॥
योगनक्षत्रवारेषु यद्वृत्तं तन्निबोध मे ॥
योगेषु च व्यतीपातो नक्षत्रं विष्णुदैवतम् ।
वारेषु भानुवारोऽसौ सोमवारो बहुप्रदः ॥
तानि वक्ष्ये सुमुख्यानि व्रतानि व्रतिनां वर ।
व्यतीपातो महायोगः सोमसूर्यसुतः प्रभुः ।
पापघ्नो रोगहारी च बहुभाग्यप्रदो नृणाम् ॥
व्यतीपाते पुण्ययोगे सुस्नातः कृतपूजकः ।
ब्राह्मणान्वरयेद्भक्त्या त्रीन्वाथ चतुरोऽपि वा ॥
श्रोत्रियान्हरिभक्तांश्च विष्णुपूजारतान्सदा ।
पायसं कारयेद्भक्त्या सूक्ष्मगोधूमतण्डुलैः ॥
मिश्रितं शुद्धपयसा गवां चैवाज्यसंमितम् ।
श्वेतशर्करया सम्यङ्मिश्रितं शल्यवर्जितम् ॥
कदुष्णं तु समानीय हरेर्नैवेद्यमर्पयेत् ।
गोधूमपरमान्नैश्च हरेर्नैवेद्यमर्पयेत् ।
नैवेद्यशेषं तत्सर्वं ब्राह्मणान्भोजयेद्व्रती ॥
ततस्ताम्बूलपुष्पाद्यैरलंकृत्य समाहितः ।
दद्याद्विशेषतस्तेषां सताम्बूलां तु दक्षिणाम् ॥
यस्त्वेवं कुरुते दानं प्रतिवर्षं तु भक्तितः ।
स मुक्तः सर्वदारिद्र्यात्सौभाग्यं सुखमश्नुते ॥
भोगार्थी भोगमाप्नोति स्वर्गार्थी स्वर्गमश्नुते ।
परमान्नस्य दानेन सोऽक्षयं सुखमश्नुते ॥
प्रत्यक्षमत्र लोकेऽस्मिन्दारुणा तु सुखप्रदम् ।
मन्त्रयुक्तेन दानेन भाग्यहीना तु दरिद्रता ॥
तस्मात्त्वमपि राजेन्द्र व्यतीपातव्रतं कुरु ।

Mı श्रीभिर् G(ed) श्री॰ये (for प्रीतिं) — G2 M1 om. lines 7193 7195 — (L 7198) D1 G2 पूजने (for °नम्) — (L. 7200) D1 तैषमासे (for पुष्ये मासे) G(ed) स्नान ध्यान (for माघस्नान) D1 om lines 7201-7202 — (L. 7203) D1 नैवेद्यपुष्पाद्यैर् (for °) D1 G2 विष्णो कुर्यात्स मुक्तिभाक् (for °) — (L. 7207) D1 M1 यो (M1 स) विप्र, G2 गोविन्दं (for यो विप्र) D1 G1 M1 करोति स च मुक्तिभाक्, G2 विष्णुलोक व्रजेद्ध्रुवम् (for °) — G1 om lines 7208-7209 — (L 7210) G1 वैशाखे शुक्लपक्षे तु, M1 °खे शुक्ल पौर्णमास्यां (for °) — (L 7211) G2 M1 शुभम् (for शुभम्) — (L. 7212) G(ed) गुडोदकं च दध्यन्न (for °) D1 छत्र च नवपादुका (for °) — (L. 7213) D1 G1 प्रयान्ति (G1 °न्ती); M1 व्रजन्त्यपी (for प्रयान्ति ते) — (L. 7214) G(ed) य इदं पुण्यमाख्यानं (for °) M1 नृप (for नर) — (L 7215) D1 परं पदम् (for पदं शुभम्)

Colophon — *Sub parvan* D1 G1 आश्वमेधिके शेष धर्मा, G2 M1 G(ed) शेषधर्मा — *Adhy name* G(ed) कार्तिकशाल्मीमाहात्म्य कथनम् — *Adhy no* D1 55 G1 2 M1 G(ed) [illegible]

(L 7216) G(ed) ज्येष्ठ (for शेष) D1 यद्धर्मो, G(ed) यो धर्मं (for यद्धर्मं) G(ed) कृतो नयति वै भिवम् (for °) — For line 7217, G(ed) subst.

243** नमहे श्रोतुमिच्छामि कृपया वद सुव्रत ।

— (L. 7219) D1 शोभनानि (for शोभ°) — For line 7219 G(ed.) subst

244** गोदानफलमिद्धि स्यात्सा प्राप्यन्ति वै द्विजन् ॥

— (L 7220) अर्चयन्ति च गोकुलं, G1 2 M1 अर्चयन्ति गोकुले (M1 °ले) गोपा (for °) D1 G1 2 M1 गोपीनाथेन चोदिता (for °) — (L 7221) D1 G1 2 M1 वैकुण्ठम् (D1 °द तु) वन गता (for °) — (L 7222) D1 G1 2 कुरुते, M1 करोति च (for भवेत्पुमान्) — *For line 7224* G(ed.) subst

245** तत्र योगादिकं सर्वं निबोध भरतर्षभ ।

— (L 7225) G(ed) योगो व्याघो (for योगेषु च) G2 M1 नक्षत्रे (for °त्रं) — (L 7226) G(ed) सोमो तौ (for °वारोऽसौ) G(ed) सर्वाभीष्टफलप्रदौ (for °) — G(ed) om lines 7?? 7 ?9 — (L. 7230) G(ed) सुस्नात प्रयत शुचि (for °) — *D1 G1 2 M1 om lines 7231 7236* — (L 7238) G(ed.) सावित्रान् (for ब्राह्मणान्) M1 कुर्वी

कृष्णे भक्तिर्यदि भवेत्तत्सर्वं सफलं भवेत् ॥
श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥
श्रीकृष्ण विष्णो नृहरे मुरारे
प्रद्युम्न संकर्षण वासुदेव ।
अनानिरुद्धामलविश्वरूप
त्वं पाहि नः सर्वभयादजस्रम् ।

Colophon.

जनमेजय उवाच ।

कस्य नामानि पुण्यानि कीर्तनीयानि नित्यशः ।
दैवतानां च सर्वेषां कस्य भक्तो विशिष्यते ॥
कस्यायुधानि धार्याणि कश्च नित्यं प्रपूज्यते ।
नृणां भवति कैवल्यं कस्य नामप्रकीर्तनात् ॥

वैशंपायन उवाच ।

अमुमर्थं पुरस्कृत्य संपृष्टो धर्मसूनुना ।
भीष्मो भागवतश्रेष्ठश्चिरं ध्यात्वा जगौ वचः ॥

भीष्म उवाच ।

कैलासशिखरे रम्ये देवी देवं महेश्वरम् ।
प्रणम्य शिरसा शंभुं पार्वती वाक्यमब्रवीत् ॥

पार्वत्युवाच ।

सर्वज्ञस्त्वं जगत्साक्षी चराचरगुरुः पिता ।
सर्वलोकेश्वरः साक्षात्सृष्टिस्थित्यन्तकारणम् ॥
वैष्णवानां च माहात्म्यं श्रोतुमिच्छामि शंकर ।
ब्राह्मणानां च दैवत्वं यथार्थं वद शंकर ॥

ईश्वर उवाच ।

साधु साधु महादेवि साधूनां च हितैषिणि ।
वैष्णवानां च माहात्म्यं तव वक्ष्यामि सुमते ॥

शङ्खचक्राङ्कितान्भक्तान्यः पूजयति मानवः ।
स साक्षाद्विष्णुसामीप्यं लभते नात्र संशयः ॥
विष्णुचक्राङ्कितं विप्रं यो भूमावभिवादयेत् ।
ललाटे सक्तपांसूनां संख्या यास्ति यावती ।
तावत्समा भूपाल ब्रह्मलोके महीयते ॥
सगोत्रं यद्यपि श्राद्धे चक्राङ्कितभुजं वदत् ।
स साक्षाद्विष्णुसायुज्यं द्विजः प्राप्नोत्यसंशयः ॥
शङ्खचक्राङ्कितं विप्रं दृष्ट्वा यो ह्लादितो भवेत् ।
स पुण्यलोकमाप्नोति ऐहिकं सुखमश्नुते ॥
चक्राङ्कितानां नामानि यो वदेद्भक्तिमान्नरः ।
सर्वपापविनिर्मुक्तः स याति परमं पदम् ॥
चक्राङ्किताय विप्राय यो भक्त्यान्नं ददाति च ।
अब्दसंख्यानि वर्षाणि ब्रह्मलोके महीयते ॥
विष्णुभक्ताय विप्राय चक्रचिह्नाय मानवः ।
गोचर्ममात्रं यो दद्याद्भूमिं स्यात्स तु राज्यभाक् ॥
विषुवायनसंक्रान्तिपूपरागे तथा रवेः ।
चक्राङ्किताय विप्राय दानान्मोक्षमवाप्नुयात् ॥
विष्णुचक्राङ्कितं विप्रं गन्धपुष्पादिभिर्नरः ।
पूजयित्वा महादेवि विष्णुलोकमवाप्नुयात् ॥
विष्णुचक्राङ्कितं विप्रं विष्णुमूर्तिमिव स्मरेत् ।
सोऽपि विष्णुमयो भूत्वा वैष्णवीं गतिमाप्नुयात् ॥
अग्नितप्तेन चक्रेण बाहुमूले तु लाञ्छिताः ।
दहन्ति सर्वपापानि तूलराशीनिवानलः ॥
यस्मिंश्चक्राङ्किता विप्रा वसन्ति नरपुंगवाः ।
तद्देशवासिनः सर्वे वैष्णवत्वं भजन्ति वै ॥
विष्णुचक्राङ्कितो विप्रो यस्मिन्देशे वसेत्सुखम् ।
स देशो मणिवत्पुण्यो वैष्णवानामपि प्रियः ॥
विष्णुभक्तिरता मुख्याः शङ्खचक्राङ्किता द्विजाः ।

---

251** य इदं पुण्यमाख्यानं शृणोति यदि भक्तिमान् ।
तस्य विष्णुः प्रसन्नात्मा सर्वान्कामान्प्रयच्छति ॥

— M1 om. lines 7297–7298. — After line 7298 G1 ins.:

252** इति पुंसां हितं विष्णोर्भक्तिश्च नवलक्षणा ।

— (L. 7301) G(ed.) -विश्वमूर्ते (for °रूप)

COLOPHON. — Sub-parvan: D1 आश्चर्यपर्वणि वैष्णवधर्मे. G1 2 M1 G(ed.) नैषधर्म. — Adhy. name: G3 वारमहत्म्यम्, G(ed.) भागवतादिमाहात्म्यम्. — Adhy. no.: D1 56, G1, 2 M1 G(ed.) 55.

G3 om. lines 7303–7401. — (L. 7304) G1 देवतानां च सर्वासां (for °) — (L. 7308) D1 G1 M1 शुभां (for वचः) — (L. 7310) D1 G1 M1 देवी देवमेव (for रम्ये देवी देवं) — D1 महेश्वरः (for ईश्वरः) — (L. 7318) D1 मुक्तस्त्वाप्नोति निश्चयः (for b) — D1 om. lines 7319–7325. — For lines 7319–7321, G1 M1 subst.:

253** ललाटे पांसुसंख्यानि ब्रह्मलोके महीयते ॥

विष्णुचक्राङ्किताङ्गं यो प्रणाम कृताञ्जलिः ।
स स्वकं कुलमुद्धृत्य ब्रह्मलोके महीयते ॥
चक्राङ्कितभुजा यस्मिन्पङ्क्तिमध्ये तु भुञ्जते ।
सा पङ्क्तिः स्वर्गलोके च देवपङ्क्तिषु पूज्यते ॥
आह्नके याति विप्रोऽपि चक्राङ्कितभुजं स्मरेत् ।
रौरवात्कुलमुद्धृत्य ब्रह्मलोके महीयते ॥
[(L. 6) M1 आह्नके यामिके विप्रो (for °)]

— For line 7325, G1 M1 subst.:

254** परमानन्दमाप्नोति किं पुनस्त्वैहिकं फलम् ।

— (L. 7328) D1 यो भक्त्या (for विप्राय) D1 स्वल्पार्थं ददाति च (for b) — For line 7331, D1 M1 G1 subst.:

255** गोचर्ममात्रभूमिं तु दत्त्वा राज्यमवाप्नुयात् ।

— (L. 7332) D1 G1 M1 अयने विषुसंक्रान्त्यां (for a) — (L. 7333) D1 M1 द्विजे (for विप्राय) — G1 om. lines 7334–7351. D1 om. lines 7336–7337. — (L. 7339) D1 M1 ईश्वरं च लभन्ति ते (for d) — (L. 7341)

इति पुंसां हिता विष्णोर्भक्तिश्च नवलक्षणा ॥

युधिष्ठिर उवाच ।

श्रुतं सर्वमशेषेण नदीसुत पितामह ।
इदानीं श्रोतुमिच्छामि भगवद्भक्तलक्षणम् ॥

भीष्म उवाच ।

विष्णुपूजासु निरता विष्णुनामपरायणाः ।
विष्णुभक्तेर्भक्तिरतास्ते वै भागवतोत्तमाः ॥
तत्कथाश्रवणे सक्ताः सत्कर्मसु सदोद्यताः ।
साधु सेवां प्रकुर्वाणास्ते वै भागवतोत्तमाः ॥
मानावमाने समतामतिर्येषां सदा भवत् ।
शत्रौ मित्रे तथा चेष्टे ते वै भागवतोत्तमाः ॥
मातापित्रोर्गुरौ ये तु महार्चनपरायणाः ।
यतिसेवापरा ये च त वै भागवतोत्तमाः ॥
वैश्वानरे तथा भानौ गायत्र्यां वैष्णवे तथा ।
येषामष्टाक्षरे भक्तिस्ते वै भागवतोत्तमाः ॥
दाने जपे तथा विष्णौ तथा श्रोत्रियभोजने ।
पूजने समतिर्येषां ते वै भागवतोत्तमाः ॥
तीर्थे च देवयात्रायां पुण्यासु तिथिषु प्रभो ।
श्रद्धा निरन्तरा येषां ते वै भागवतोत्तमाः ॥
सालग्रामस्य तीर्थे च तथा तीर्थाभिषेचने ।
येषां तु सततं भक्तिस्ते वै भागवतोत्तमाः ॥
सत्कथाश्रवणे सक्ताः सत्कर्मसु सदा रताः ।
साधु सेवां प्रकुर्वाणास्ते वै भागवतोत्तमाः ॥
एकादशीव्रतपरा माघस्नानरतास्तु ये ।
प्रातःस्नानरता ये च ते वै भागवतोत्तमाः ॥
पुराणपाठका ये च पुराणश्रवणे रताः ।
तद्गुरौ प्रिया ये च ते वै भागवतोत्तमाः ॥
आत्मवत्सर्वभूतानि ये पश्यन्ति नरोत्तमाः ।
मानेऽवमाने च समा मतिर्येषां सुशोभना ॥
शत्रौ मित्रे तथा द्वेष्ये ते वै भागवतोत्तमाः ।
ब्रह्माग्निका गवास्तूयान्ते वै भागवतोत्तमाः ॥
ध्याने जपे तथा होमे तथा श्रोत्रियभोजने ।
पूजने सन्मतिर्येषां ते वै भागवतोत्तमाः ॥
तीर्थे च देवयात्रायां पुण्यासु तिथिषु प्रभो ।
श्रद्धा निरन्तरा येषां ते वै भागवतोत्तमाः ॥
सालग्रामस्य तीर्थे च तथा तीर्थाभिषेचने ।
येषां तु सततं भक्तिस्ते वै भागवतोत्तमाः ॥
वेदाध्ययनसंपन्ना सदा शास्त्रविशारदाः ।
यज्ञयज्ञपरा नित्यं ते वै भागवतोत्तमाः ॥
विशुद्धज्ञानसंपन्ना निर्मला कर्मभिः शुभैः ।
एकादशीव्रतरतास्ते वै भागवतोत्तमाः ॥
प्रातःस्नाने मतिर्येषां गायत्र्यां च तथा रवौ ।
शत्रौ मित्रे तथा देवे ते वै भागवतोत्तमाः ॥
दुःखिता परदुःखेभ्यः प्रहृष्टाः परसंपदा ।
दयावन्तो हि भूतेषु ते वै भागवतोत्तमाः ॥
चराचरात्मकं विश्वं विष्णुमायाविनिर्मितम् ।
विष्णुरूपेण पश्यन्ति ते वै भागवतोत्तमाः ॥
देवद्विजगुरुप्राज्ञान्पितॄंश्च दिने दिने ।
अर्चयन्ति सदा भक्त्या ते वै भागवतोत्तमाः ॥
यतीनां सद्गृहीनानां व्रतिनां ब्रह्मवादिनाम् ।
सुधीनामविरक्तानां विषयेषु निरन्तरम् ।
नारायणे भगवति सदा सम्यक्मानसाः ।
सत्कर्मनिरताः श्रान्तास्त्यागापरिवर्जिताः ।
तत्कथाश्रवणे सक्ता वेदान्तनिरताश्च ये ।
विद्यादानरता ये च शास्त्रेषु निरताश्च ये ।
पौरुषेण च सूक्तेन विष्ण्वर्चनपरायणाः ।
सालग्रामार्चनपराः सदा संकल्पवर्जिताः ।
रविसूक्तपरा ये च ते वै भागवतोत्तमाः ॥
संमार्जनरता ये वै विष्णुवेश्मनि नित्यशः ।
दीपदानरताश्चैव ते वै भागवतोत्तमाः ॥
रुद्रं रुद्राभिषेकेण प्रीणयन्ति च ये द्विजाः ।
प्रयान्ति हरिसामीप्यं विष्णुभक्ता भवन्ति च ॥

—(L. 7401) M1 हितं (for हिता) M1 भक्तिश्चैवत्र्यक्षणम् (for [5]) —(L. 7405) G(ed.) विष्णुभक्तेषु य भक्ता (for [°]) — G(ed.) om. (hapl.) lines 7406–7407 —(L. 7406) G3 सत्कथा (for त°) M1 भक्ता (for सक्ता) D1 G2 M1 सत्वर्मसु (for स°) — D1 om. (hapl.) lines 7408–7409 —(L. 7408) M1 सुशोभना (for सदा भवेत्) —(L. 7409) M1 द्वेषे (for चेष्टे) M1 ये पश्यन्ति नरोत्तमा (for [5]) —(L. 7410) D1 पित्रोश्चैव (for मातापित्रोः) G2 गुरावर्चायां (for महार्चन) —(L. 7412) D1 गायत्र्या वैष्णवे स्तुतौ, G3 °त्र्या वैष्णवस्मृतौ (for [5]) — G3 om. lines 7413–7424 — After line 7424, D1 ins.

260** वैश्वदेवरता ये च शालिकर्मरताश्च ये ।
ये चातिथिप्रियकरास्ते वै भागवतोत्तमाः ॥
तुलसीरोपणपरा वन्दने पूजनेऽनिशम् ।
पालने सेवने चाप्यहो ते वै भागवतोत्तमाः ॥

—G3 om. lines 7427–7428 —(L. 7429) M1 ये पश्यन्ति नरोत्तमा (for [5]) — G(ed.) om. lines 7430–7437 —(L. 7430) D1 दाने (for ध्याने) D1 G2 विष्णौ (for होमे) —(L. 7440) G(ed.) मद्व्रते (for प्रातःस्नाने) G3 M1 रतिर् (for मतिर्) —(L. 7446) G2 वृद्धान्गुरूंस्तथा प्राज्ञान् (for [°]) D1 तथातिथीन् (for दिने दिने) —(L. 7448) G1 s यतीनां (G3 °तिना) सगृहीतानां (for [°]) —(L. 7449) G1 सुधीना विष्णुभक्तानां (for [°]) —(L. 7450) G2 मन्ये भक्तियुता नरा (for [5]) —(L. 7453) G1 s सदा (for विद्या) D1 G2 M1 ते वै भागवतोत्तमा (for [5]) —(L. 7454) G2 वाक्येन (for पौरुषेण) —G3 om. lines 7455–7458 —(L. 7455) D1 G1 M1 ते वै भागवतोत्तमा (for [5]) — After line 7455, D1 G1 M1 ins.

इति पुरा दिता विष्णोर्भक्तिश्च नवलक्षणा ॥
युधिष्ठिर उवाच ।
श्रुत सर्वमशेषेण नदीसुत पितामह ।
इदानीं श्रोतुमिच्छामि भगवद्भक्तलक्षणम् ॥
भीष्म उवाच ।
विष्णुपूजासु निरता विष्णुनामपरायणा ।
विष्णुभक्तेभक्तिरतास्ते वै भागवतोत्तमा ॥
तत्कथाश्रवणे सक्ता सत्कर्मसु सदोद्यता ।
सत्सु सेवां प्रकुर्वाणास्ते वै भागवतोत्तमा ॥
मानावमाने समतामतिर्येषां सदा भवत् ।
शत्रौ मित्रे तथा चेष्टे ते वै भागवतोत्तमा ॥
मातापित्रोर्गुरौ ये तु ब्रह्मार्चनपरायणा ।
यतिसेवापरा ये च त वै भागवतोत्तमा ॥
वैश्वानरे तथा भानौ गायत्र्यां वैष्णवे तथा ।
मेघामहाक्षरे भक्तिस्ते वै भागवतोत्तमा ॥
दाने जपे तथा विष्णौ तथा श्रोत्रियभोजने ।
पूजने समतिर्येषां ते वै भागवतोत्तमा ॥
तीर्थे च देवयात्रायां पुण्यासु तिथिषु प्रभो ।
श्रद्धा निरन्तरा येषां ते वै भागवतोत्तमा ॥
सालग्रामस्य तीर्थे च तथा तीर्थाभिषेचने ।
येषां तु सतत भक्तिस्ते वै भागवतोत्तमा ॥
सत्कथाश्रवणे सक्ता सत्कर्मसु सदा रता ।
सत्सु सेवा प्रकुर्वाणास्ते वै भागवतोत्तमा ॥
एकादशीव्रतपरा माघस्नानरतास्तु ये ।
प्रात स्नानरता ये च ते वै भागवतोत्तमा ॥
पुराणपाठका ये च पुराणश्रवणे रता ।
सद्भक्ति प्रिया ये च ते वै भागवतोत्तमा ॥
आत्मवत्सर्वभूतानि ये पश्यन्ति नरोत्तमा ।
मानेऽवमाने च समा मतिर्येषां सुशोभना ॥
शत्रौ मित्रे तथा द्वेष्ये ते वै भागवतोत्तमा ।
अदाम्भिका गतासूयास्ते वै भागवतोत्तमा ॥
स्नाने जपे तथा होमे तथा श्रोत्रियभोजने ।
पूजने सन्मतिर्येषां ते वै भागवतोत्तमा ॥
तीर्थे च देवयात्रायां पुण्यासु तिथिषु प्रभो ।
श्रद्धा निरन्तरा येषां ते वै भागवतोत्तमा ॥
सालग्रामस्य तीर्थे च तथा तीर्थाभिषेचने ।
येषां तु सतत भक्तिस्ते वै भागवतोत्तमा ॥
वेदाध्ययनसंपन्ना सदा शास्त्रविशारदा ।
पञ्चयज्ञपरा नित्य ते वै भागवतोत्तमा ॥
विशुद्धज्ञानसंपन्ना निर्मला कर्मभि शुभै ।
एकादशीव्रतपरास्ते वै भागवतोत्तमा ॥
प्रात स्नाने मतिर्येषां गायत्र्यां च तथा रवौ ।
अग्नौ विप्रे तथा देवे ते वै भागवतोत्तमा ॥
दु खिता परदु खेन प्रहृष्टा परसंपदा ।
दयावन्तो हि भूतेषु ते वै भागवतोत्तमा ॥
चराचरात्मकं विश्वं विष्णुमायाविनिर्मितम् ।
विष्णुरूपेण पश्यन्ति ते वै भागवतोत्तमा ॥
देवद्विजगुरुप्राज्ञानतिथींश्च दिने दिने ।
अर्चयन्ति सदा भक्त्या ते वै भागवतोत्तमा ॥
यतीनां सद्गृहीणां व्रतिनां ब्रह्मवादिनाम् ।
शुचीनामविपक्तानां विषयेषु निरन्तरम् ।
नारायणे जगद्धाम्नि सदा संसक्तमानसा ।
सत्कर्मनिरता श्रान्तास्त्यक्तपरिवर्जिन ।
तत्कथाश्रवणे सक्ता वेदान्तनिरताश्च ये ।
विद्यादानरता ये च शास्त्रेषु निरताश्च ये ।
पौरुषेण च सूक्तेन विष्ण्वर्चनपरायणा ।
सालग्रामार्चनपरा सदा सङ्कल्पवर्जिता ।
रविसूक्तपरा ये च ते वै भागवतोत्तमा ॥
समार्जनरता ये वै विष्णुवेश्मनि नित्यश ।
दीपदानरताश्चैव ते वै भागवतोत्तमा ॥
रुद्र रुद्राभिषेकेण प्रीणयन्ति च ये द्विजा ।
प्रयान्ति हरिसामीप्यं विष्णुभक्ता भवन्ति च ॥

—(L 7401) M1 हित (for हिता) M1 भक्तिश्रेष्ठलक्षणम् (for °) —(L 7405) G(ed.) विष्णुभक्तेषु च भक्त (for °) — G(ed) om (hapl) lines 7406 7407 —(L 7406) G2 सत्कथा (for त) M1 भक्ता (for सक्ता) D1 G1 M1 तत्कर्मसु (for स°) — D1 om (hapl) lines 7408 7409 —(L 7408) M1 सुशोभना (for सदा भवेत्) —(L 7409) M1 द्वेषे (for चेष्ट) M1 ये पश्यन्ति नरोत्तमा (for °) —(L 7410) D1 पित्रोश्चैव (for मातापित्रोर्) G1 गुर्वाचार्यो (for ब्रह्मार्चन) —(L 7412) D1 गायत्र्यां वैष्णवे स्तुतौ, G1 °त्र्यां वैष्णवस्तुतौ (for °) — G2 om lines 7413 7424 — After line 7424 D1 ins

260** वैश्वदेवरता ये च चाग्निकर्मरताश्च ये ।
ये चातिथिप्रियकरास्ते वै भागवतोत्तमा ॥
तुलसीरोपणपरा वन्दने पूजनेऽनिशम् ।
पालने सेवने सक्तास्ते वै भागवतोत्तमा ॥

—G2 om lines 7427–7428 —(L 7429) M1 ते पश्यन्ति नरोत्तमा (for °) — G(ed) om lines 7430–7437 —(L 7430) D1 दाने (for स्नाने) D1 G1 विष्णौ (for होमे) —(L 7440) G(ed) महेश्वरे (for प्रात स्नाने) G2 M1 रतिर् (for मतिर्) —(L 7446) G2 वृद्धान्गुरूंस्तथा प्राज्ञान् (for °) D1 तथातिथीन् (for दिने दिने) —(L 7448) G1 2 यतीनां (G2 °तिना) सगृहीणां (for °) —(L 7449) G1 शुचीनां विष्णुभक्तानां (for °) —(L 7450) G2 सर्व भक्तियुता नरा (for °) —(L 7453) G1 2 सदा (for विद्या) D1 G2 M1 ते वै भागवतोत्तमा (for °) —(L 7454) G2 वाक्येन (for पौरुषेण) —G2 om lines 7455 7458 —(L 7455) D1 G1 M1 ते वै भागवतोत्तमा (for °) — After line 7455, D1 G1 M1 ins.

स्वस्ति तेऽस्तु हरिः साक्षात्प्रियविन्दो वृष्णिवल्लभ ।
सदा वसतु राजेन्द्र तव चित्ते जनार्दनः ॥

वैशंपायन उवाच ।

इत्युक्तवन्तं धर्मं तु धर्मसूनुः प्रणम्य तम् ।
कृतार्थोऽस्मीति गाङ्गेयं पूजयामास धर्मज्ञः ॥
मुनयो विप्रमुख्याश्च राजानश्च नदीसुतम् ।
पूजयामासुरव्यग्राः कृष्णे निश्चितबुद्धयः ॥
तेनैवं सत्कृतो भीष्मस्तीर्थयात्रापरोऽभवत् ।
धर्मराजोऽनुजैः सार्धमास्ते ध्यायञ्जनार्दनम् ॥
पुराणरत्नमेतद्धि हरिवंशात्समुद्धृतम् ।
नारदीयमिदं धर्म्यमितिहासं पुरातनम् ।
कृष्णेन गदितं साक्षाद्धर्मपुत्राय धीमते ॥
सकृद्वा शृणुयाद्वापि शैवधर्ममिमं नृप ।
सर्वपापविनिर्मुक्तः स गच्छेद्वैष्णवं पदम् ॥
राजसूयस्य यज्ञस्य यत्फलं लभते नरः ।
तत्फलं समवाप्नोति ह्यस्य श्रवणकीर्तनात् ॥
सप्तद्वीपवतीं पृथ्वीं सशैलवनकाननाम् ।
दत्त्वा यत्फलमाप्नोति तत्फलं च प्रपद्यते ।
शृणुयाच्च इमं नित्यं यश्चापि परिकीर्तयेत् ॥
प्राप्नुयान्नाशुभं किंचित्परत्रेह च मानवः ॥
सर्वविद्याधिकारी स्याद्द्विजो राज्यं लभेन्नृपः ।
वैश्यः पशुधनं चैव शूद्रो वै धर्ममश्नुते ॥
पुत्रकामो लभेत्पुत्रं कन्या भर्तारमाप्नुयात् ॥
राजा वा राजपुत्रो वा शृणोति सततं नृप ।
गोकोटीनां सप्रदानाद्यत्फलं तदवाप्नुयात् ॥
रोगार्तो बन्धनार्तो वा मुच्यते दुःखसंचयात् ॥
राज्यपुत्रधनप्राप्तिधान्यरत्नवसूनि च ।
अस्य श्रवणमात्रेण लभते नात्र संशयः ॥
एतस्मात्परं किंचिच्छ्रोतव्यमिह विद्यते ॥
भारताध्ययनात्पुण्याद्ब्रह्महत्यादिकान्यपि ।
महापातकमालानि विनश्यन्ति न संशयः ॥
कलिदोषविषार्तानां जन्तूनां हतचेतसाम् ।
उत्तारकं त्विकमेव भारताध्ययनं भुवि ॥
भारतं पञ्चमो वेदो वेदान्तार्थोपबृंहकः ।
स्त्रीशूद्रद्विजबन्धूनामपि मोक्षप्रदायकः ॥
भारताध्ययनाशक्तो हरिवंशं पठेन्नरः ।
दिने दिने प्रातरेव संपूर्णं फलमश्नुते ॥
हरिवंशस्य पठनेऽप्यशक्तः श्रमभारतात् ।
पठेद्वा पाठयेद्वापि तस्य मुक्तिः करे स्थिता ॥

सूत उवाच ।

तत्र पारिक्षितो विद्वाञ्जनमेजयभूपतिः ।
श्रुत्वेदं भारताख्यानं समग्रं वेदसंमितम् ।
मध्येसभं महर्षीणां वैशंपायनमब्रवीत् ॥

जनमेजय उवाच ।

व्यासशिष्य महाप्राज्ञ त्वत्प्रसादान्मया श्रुतम् ।
भारताख्यानमखिलं कृतार्थोऽस्मि महामते ।

---

7511) G(ed) सर्वे ते नारदो मुनि (for [b]) — (L. 7512) D1 G1, 2 M1 नारदेन (for दातु) — (L. 7514) M1 °रूपास्य (for पद्मास्ये) — (L. 7520) G(ed) भवतु (for वसतु) — G2 om the ref — (L. 7521) G(ed) धर्मात्तु, M1 धर्मेश (for धर्मं तु) — (L. 7524) G(ed) निश्चय (for निश्चित) G2 कृष्णे स यस्तमानसा (for [b]) — (L. 7526) M1 जगद्गुरुम् (for जनार्दनम्) — (L. 7527) G1 2 समाहितम्, M1 समाहृतम् (for समुद्धृतम्) — (L. 7534) G2 यश्चापि परिकीर्तयेत् (for [b]) — G2 om lines 7535–7536 — (L. 7540) G(ed) सुवरम् (for भर्तारम्) — (L. 7541) राजमात्रो, G(ed) °मन्त्री (for °पुत्रो) G2 य पठच्छृणुयादपि (for [b])

— G2 om lines 7542 7543 — For line 7542 G1 M1 subst.

263** गवां कोटिप्रदानेन गङ्गातीरे फलं लभेत् ।

— (L. 7544) G(ed) वस्त्रधान्यादिकानि च (for [b]) — G1 ins after line 7545 D1 after 265**

264** कृष्णवाक्ये मतिं कृत्वा यथा ते तु पितामहाः ।
मनु धर्मं सत्यं शृणु पालयस्व च मेदिनीम् ॥

M1 om. lines 7546–7547 D1 G1 2 om line 7546 (L. 7547) D1 G2 अपि पारमश्नीयतः (for [b]) — M1 om lines 7548 7584 D1 G1 2 om lines 7548–7577 G(ed) om line 7578 — After line 7578, D G1 ins

265** हरिवंशकथान्ते तु श्रुत्वा प्रामान्ददौ गुरोः ।

G1 cont.

266** कलौ युगे विशेषेण पुराणश्रवणादृते ।
नास्ति धर्मः परः पुंसां नास्ति मुक्तिफलं त्वन्यत् ॥
सङ्ग्रामे मुक्तनाकीर्णे सत्क्षेत्रे देवतालये ।
पुण्ये वाथ नदीतीरे वर्णेत्पुण्यकथां सुधीः ॥
अभक्त्या ये कथां पुण्यां शृण्वन्ति मनुजाधमाः ।
तेषां पुण्यफलं नास्ति दुःखं स्याज्जन्मजन्मनि ॥
पुराणं ये तु संपूज्य ताम्बूलाद्यैरुपायनैः ।
शृण्वन्ति च कथां भक्त्या धनाढ्याश्च भवन्ति ते ॥
कथायां वर्तमानायां ये गच्छन्त्यन्यतो नराः ।
भोगान्तरे प्रणश्यन्ति तेषां दाराश्च संपदः ॥
असत्प्रणम्य शृण्वन्तो विषवृक्षा भवन्ति ते ।
न निन्दन्ति पुराणं च कथां वा पापहारिणीम् ।
ते वै जन्मशतं मर्त्याः शुनकाः संभवन्ति च ॥
कथायां कीर्त्यमानायां विघ्नं कुर्वन्ति ये नराः ।
कोट्यब्दं नरकान्भुक्त्वा भवन्ति ग्रामसूकराः ॥
ये कथामनुमोदन्ते कीर्त्यमानां नरोत्तमाः ।

नैतत्परं मया किंचिच्छ्रोतव्यमिह विद्यते ॥
एवमुक्त्वा स राजर्षिर्मतिवर्यस्य तस्य वै ।
अनुज्ञां तु पुरस्कृत्य व्यासस्यानुमते तदा ।
भारताख्यानवर्यस्य शान्तिं चक्रे विधानतः ॥ [ 7565 ]
कारयामास विप्राणां कोटीनां भोजनं तदा ।
प्रादाद्विशेषतस्तत्र धनवस्त्रादिकं बहु ॥
सच्छ्रोत्रियाणां विप्राणां विशेषात्तु तपस्विनाम् ।
तत स्वर्णस्य राशिं तु सर्वरत्नोपशोभितम् ।
कारयामास मतिमान्नृपिमध्ये महातपाः ॥ [ 7570 ]
वैशंपायनमाहूय चकार भारतस्य वै ।
सर्वरत्नैरभ्यषिञ्चन्मूर्ध्नि तस्य महात्मना ।
ततस्तेनाभिषेकेण पूर्णस्तृप्तश्च सोऽभवत् ॥
ग्रामान्बहूनदात्तस्मै ऋषिवर्याय धीमते ॥

एवं निर्वर्तयित्वा तु शान्तिकर्म स भूपतिः । [ 7575 ]
बन्दिमागधसूतैस्तु जयघोषैर्विशेषतः ।
स्तूयमानः स्वनगरं प्राविशत्कृष्णमानसः ॥
श्रद्दधानस्य शृण्वतो सर्वपापान्यशेषतः ।
कलिदोषहरं नाम धर्मश्रवणपावनम् ।
शृण्वतां सर्वपापानि विलयं यान्ति भूरिशः ॥ [ 7580 ]
चरितमिममितिहासं शृण्वतां लौकिकानां
सकलदुरितशान्तिः सद्य एवास्तु विप्राः ।
स भवति हरिलोके भक्तिरस्मिन्मुरारौ
जयति सकलमेतद्दुर्लभं पापिनां च ॥ [ 7584 ]

Colophon.

---

अशृण्वतोऽपि ते यान्ति शाश्वतं परमं पदम् ॥
ये श्रावयन्ति मनुजान्पुण्यां पौराणिकीं कथाम् ।
कल्पकोटिशतं साग्रं तिष्ठन्ति ब्रह्मणः पदे ॥
— ( L. 7579 ) M1 सर्वपाप- ( for कलिदोष ) — ( L. 7580 ) M1 भूरिदम ( for °श ) — ( L. 7583 ) G1 भजति हि सुरलोक ( for स भवति हरिलोके ) G1 मुकुन्दे ( for मुरारौ ) — ( L. 7584 ) G1 M सुलभम् ( for सकलम् ) ]

Colophon — *Sub-parvan* D1 G1 M1 G(ed) आश्वमे पर्वणि शेषधर्मा , G2 शेषधर्मा — *Adhy name* M1 युधिष्ठिर भीष्मसंवादः , G(ed) भारतमहिमानुवर्णनादिकथनम् — *Adhy no* D1 58 , G1.2 M1 G(ed) 57

— After the last colophon D1 reads शुभं भवतु । श्रीकृष्णार्पणमस्तु ।

यत्नेन लिखितं शेषधर्मार्थमं सविस्तरम् ।
लेखकस्य श्रियं प्राप्तिं पुत्रपौत्रादि प्राप्नुयात् ॥
हेमवत्नाख्य पुत्रेण रामचन्द्रेण नाम च ।
भक्त्या च लिखितं ग्रन्थ पुस्तकं तस्य निश्चयम् ॥
इति शेषधर्मं समाप्तः ॥

G1 reads श्रीकृष्णाय परमगुरवे नमः । शेषधर्मं समाप्तं । हरिः ओम् । शुभमस्तु । श्रीकृष्णार्पणमस्तु ॥
अबद्धं वा सुबद्धं वा मम दोषो न विद्यते ।
यादृशं पुस्तकं दृष्टं तादृशं लिखितं मया ॥
करकृतमपराधं क्षन्तुमर्हन्ति सन्तः ।

लिखितं हरिवंशं तु लभते ब्रह्मणः पदम् ।
व्यासप्रसादाद्धि च समृद्धिमतिदुर्लभाम् ॥
व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे ।
नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः ॥
कृष्णं कमलपत्राक्षं पुण्यश्रवणकीर्तनम् ।
वासुदेवं जगद्योनिं नौमि नारायणं हरिम् ॥
कृष्णाय यादवेन्द्राय ज्ञानमुद्राय योगिने ।
नाथाय रुक्मिणीशाय नमो वेदान्तवेदिने ॥

श्रीकृष्णार्पणमस्तु । श्रीरामार्पणमस्तु । ओं तत्सत् । श्रीकृष्णाय नमः । श्रीरामाय नमः । श्रीरामः शरणं मम ।

G2 reads श्रीकृष्णाय नमः । श्रीवासुदेवार्पणमस्तु । करकृतमपराधं क्षन्तुमर्हन्ति सन्तः । ओम् ।

M1 reads शेषधर्मं समाप्तं । करकृतमपराधं क्षन्तुमर्हन्ति सन्तः । शुभमस्तु ॥

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत्सकलं परस्मै
नारायणायेति समर्पयामि ॥
अक्षरं पदं भ्रष्टं मात्राहीनं तु यद्भवेत् ।
तत्सर्वं क्षम्यतां देव नारायण नमोऽस्तु ते ॥
श्रीशेषधर्मश्च समाप्त । ओं तत्सत् । हरिः ओम् ।
श्रीकृष्णार्पणमस्तु ॥

अजगन्धकृतोन्मुक्त· सभूतः पर्वतो महान् ।
गुरुद्वारगुणप्राणः शाश्वतः सिद्धसेवितः ॥
वेदिकाभि· सचित्राभिः काञ्चनाभिर्विराजितः ।
पुष्कराणि परीतानि दृष्ट्वा विपुलदक्षिणः ॥
महामेरोर्यथा रूप पञ्चभिर्धातुभिर्वृतम् ।
चेतनायामिसपन्नो रूपेणाद्भुतदर्शनः ॥
अथोवाच महादेवस्तीर्थानुग्रहकाम्यया ।
करिष्याम्यहमप्येतन्मनसा धर्मचारिणम् ।
रूपं बहुविध लोके पार्थिवी चेतना यथा ॥
त्रीश्च लोकान्प्रपन्नेय पञ्चभिर्धातुलक्षणै· ।
षष्ठेन च विसर्जेय मनसा धर्मचारिणीम् ॥
सङ्गेषु भारमोहाभ्या पश्यन्ति समृद्धय ।
विमुक्ता सर्वसङ्गेभ्यो धारयन्ति परिग्रहान् ॥
न च विन्देत मा कश्चिन्मनसा कामरूपिणम् ।
पञ्चधातुनिबद्धाश्च नानाभापितनोदिताः ॥
ये च विष्णुमधीयन्ते बहुधा पादरिमहैः ।
ते मा पश्येयुरव्यक्तं तपसा दग्धकिल्बिषाः ॥
ये च मामभिरोहेयुर्नरा धर्मपथे स्थिताः ।
तेऽपि स्वर्गजितः सर्वे पश्येयुर्मां गतक्लमाः ॥
यश्चैव पर्वतः प्राशुर्मेरुपृष्ठे प्रतिष्ठितः ।
एतमारुह्य युध्येयु प्राणत्यागेषु निर्मलाः ॥
अप्सरोभि समागम्य विचरेयुर्मनोजवाः ।
नन्दनं वनमासाद्य काम्यक च महद्वनम् ॥
इमा विद्या समासाद्य मद्भक्ताः पुष्करेष्विह ।
शरीरं क्षपयिष्यन्ति व्रतैर्बहुविधै· कृशा· ॥
सिद्धिं प्राप्य क्रमेयुस्ते कामैर्बहुविधैर्नराः ।
इम लोकममु चैव सफलेयुर्यथासुखम् ॥
गौरी सिद्धेति विख्याता त्रिषु लोकेषु विश्रवा ।
प्रभाव तपसो वृत्त दर्शयन्ति समाहिता· ॥
पण्णा ज्ञानाभिसधीनामभिज्ञाशतसमहा ।

G3 4 चेतसा, B3 D5 वर्चसा (for तेजसा) — (L 1492) K4 V1 अजा, D1 अग (for अज) D2 अजागन्ध कृतो पत्र (for °) D3 सोऽचित (for संभूत) — (L 1493) D1 -सह, D6 हृत, D4 (sup lin) गुरु, D2 हृत (for गुण) K1 गुरुद्वारे गुणप्राणा; K2 द्वार गुणा प्राण, B1 3 D5 °द्वारो गुरुप्राण (for °) — (L 1494) V2 B2 3 D6 G1-4 सु, D3 त्रि (for स) — (L 1495) D51 प्रणीतानि, Cal ed परीन्त्वैव (for °तानि) Cal ed स्थितो (for दृष्ट्वा) — (L 1496) K2 4 B3 Dn D1 3 G3 4 वृत ; D51 कृतम् (for वृतम्) — (L 1497) D3 चेतनाभियोगसंपन्नो (hypermetric) (for °) — K V1 3 B Dn D1-4 G1 4 om line 1498 — (L 1499) Cal ed एव रूपं करिष्यामि (for °) K4 D5 मनसा धर्मचारिणी, V1 D2 °सा ब्रह्मचारिणम् (D2 °णी) (for °) — K3 om (hapl) lines 1500 1502 — (L 1500) K3 D1 3 पृथिवी (D1 पार्थिवी) चेतना तथा, V2 B Dn G3 4 पार्थि(V2 B1 पृथि)वीं चेतनां तथा (for °) — (L 1501) D3 प्रपद्येऽहं (for °द्य) — (L 1502) K3 D1 षष्ठेन (for ष°) K1 समर्जेद्, D6 समज्येय (for विसर्जेय) D3 षष्ठेन चात्र महागंम्, G3 °न चात्मने पञ्च (for °) V2 हृदयया (for मनसा) K1 V1 D5 मनसा धर्मचारिणी, D2 4 °सा ब्रह्मचारिणी (for °) — (L 1503) K3 D1 सङ्गभावमोहाना D3 सङ्गेषु भावो येषां न (for °) K3 4 V1 B1 Dn D1 3 पश्यन्ति च, K3 V2 B2 3 D51 D6 °ऋषि, D51 °ष म (for °द्धिव) — (L 1504) B1 विमुक्ता (for विमुक्ता) K2 B2 -सङ्गेषु, D3 -धर्मेभ्यो (for -सङ्गेभ्यो) D51 धारयन्न परिग्रह (for °) — (L 1505) K1-3 Ñ2 V2 B1 3 D1-6 -चारिणीम् (K3 D1 °णम्, D6 °णी), K4 V1 B3 रूपिणीम्, Cal ed. कारिणीम् (for रूपिणम्) D5 मनसा धर्मचारिणीम् (for °) — (L 1506) D3 निबद्, G3 Bom. Poona eds G(ed) °बद्धा, G1 Cal ed °द्धां (for °द्धाश्च) D3 पञ्चभिर्धातुबद्ध च (for °) Ñ1 V1 3 B D1 3 3 -चोदिता Dn -चोदना, D1 चेष्टिता, G1 -चोदितास्, Poona ed -चोदन (for नोदिता) — (L 1507) K3 Ñ1 Dn D1 4 5 काम (for पाद) D1 बहुपादपरिग्रहै (for °) — (L 1509) K3 अव्यग्र (for अव्यक्त) K3 D1 -कल्मषा (for किल्बिषा) — (L 1510) K3 4 Ñ2 V1 3 Dn1 D2 4 6 सत्त्व, B3 3 D3 स्वर्ग G1 4 स्वर्गे (for सर्वे) Dn3 तेऽपि स्वर्गजित सत्त्व, D6 G(ed) तेऽपि स्वर्गजिता स्वर्गे (for °) G3 जितेन्द्रिया (for गतक्लमा) — (L 1511) Dn Bom Poona eds G(ed) व्यवस्थित (for प्रतिष्ठित) — (L 1512) D3 पृष्ठम् (for ष्लम्) K1 Ñ2 V1 3 D2 4 -त्यागेन (for -त्यागेषु) — (L 1514) Dn आरुह्य (for आसाद्य) K3 D1 नन्दन च समासाद्य (for °) — (L 1515) Cal ed इमा विद्या (for इमा विद्या) K1 D1 समासाद्य (for °साद्य) D3 मद्भक्त्या पुष्करे त्विह (for °) — (L 1516) K1 तदा Bom Poona eds G(ed) कृते (for कृशा) — (L 1518) D3 संचरेयुर् (I 3 सफलें°) K3 4 D2 3 यथाक्रमम् (for °सुखम्) — (L 1519) गिरि, Bom ed गौरा (for गौरी) D51

